| ग्रन्थनाम । | मूल्य रू० |
|---|---|
| ५७ आचारभूषणम्—हिरण्यकेश्याह्निकमोकोपाह्वत्र्यम्बककृतम् । | ४ |
| ५८ आचारेन्दुः—माटेइत्युपाह्वत्र्यम्बकविरचितः । ... | ४ |
| ५९ श्राद्धमञ्जरी—केळकरोपाह्वबापूभट्टविरचिता । ... | २ |
| ६० यतिधर्मसंग्रहः—विश्वेश्वरसरस्वतीकृतः । ... | १ |
| ६१ गौतमप्रणीतधर्मसूत्रम्—हरदत्तकृतटीकासमेतम् । ... | २ |
| ६२ ईशकेनकठप्रश्नमुण्डमाण्डूक्यानन्दवल्लीभृगूपनिषदः-सटीकाः | |
| ६३ छान्दोग्योपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ |
| ६४ बृहदारण्यकोपनिषत्—रङ्गरामानुजविरचितप्रकाशिकोपेता । | ३ |
| ६५ शाङ्खायनब्राह्मणम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम् । | १ |
| ६६ काव्यप्रकाशः—उद्द्योतयुतप्रदीपसहितः । ... ... | ६ |
| ६७ ब्रह्मसूत्राणि—दीपिकासमेतानि । ... ... ... | ४ |
| ६८ बृहद्ब्रह्मसंहिता—नारदपञ्चरात्रान्तर्गता । ... ... | १ |
| ६९ ज्ञानार्णवतन्त्रम्—ईश्वरप्रोक्तम् । तन्त्रशास्त्रग्रन्थः । ... | १ |
| ७० स्मृत्यर्थसारः—श्रीधराचार्यविरचितः । ... ... ... | १ |
| ७१ बृहद्योगतरङ्गिणी—त्रिमल्लभट्टविरचिता भागद्वयोपेता । | १० |
| ७२ परिभाषेन्दुशेखरः—वैद्यनाथकृतगदाख्यटीकायुतः । ... | २ |
| ७३ गायत्रीपुरश्चरणपद्धतिः—श्रीमच्छंकराचार्यविरचिता । ... | १ |
| ७४ द्राह्यायणगृह्यसूत्रवृत्तिः—रुद्रस्कन्दप्रणीता । ... ... | १ |
| ७५ ब्रह्मसूत्रभाष्यार्थरत्नमाला—सुब्रह्मण्यविरचिता । ... | ४ |
| ७६ ईशकेनकठोपनिषदः—दिगम्बरानुचरकृतव्याख्यासमेताः । | १ |
| ७७ वेदान्तसूत्रमुक्तावलिः—ब्रह्मानन्दसरस्वतीविरचितः । ... | २ |
| ७८ त्रिस्थलीसेतुः—नारायणभट्टविरचितः । ... ... ... | ३ |
| ७९ छान्दोग्योपनिषत्—मिताक्षराव्याख्यासमेता । ... ... | २ |
| ८० वाक्यवृत्तिः—श्रीमच्छंकराचार्यकृता सटीका । ... ... | ० |
| ८१ आश्वलायनश्रौतसूत्रम्—नारायणकृतवृत्तिसमेतम् । ... | ४ |
| ८२ ब्रह्मसूत्रवृत्तिः—हरिदीक्षितविरचिता । ... ... ... | २ |
| ८३ संक्षेपशारीरकम्—व्याख्यासहितं भागद्वयोपेतम् । ... | ९ |
| ८४ अद्वैतामोदः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः । | २ |
| ८५ ज्योतिर्निबन्धः—शूरमहाठर्माशिवराजविरचितः । ... | ३ |

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ७७

ब्रह्मानन्दसरस्वतीविरचिता

# वेदान्तसूत्रमुक्तावलिः ।

एतत्पुस्तकं

वे० शा० सं० रा० गोखले इत्युपाह्वैर्गणेश-
शास्त्रिभिः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।



शालिवाहनशकाब्दाः १८३७

खिस्ताब्दाः १९१५

ॐ तत्सद्ब्रह्मणे नमः।

ब्रह्मानन्दसरस्वतीविरचिता

# वेदान्तसूत्रमुक्तावलिः

---

## अथ प्रथमाध्यायस्य प्रथमः पादः।

चरणौ शरणी कुर्मः श्रीमन्नारायणप्रभोः।
अपि श्रीविश्वनाथस्य परमानन्दरूपिणः ॥ १ ॥
भाष्यार्थो निरणायि यः श्रुतिपथन्यायाम्बुधेः पारगै-
र्विज्ञैर्निर्णयदर्पणप्रभृतिषु ब्रह्मापरोक्षान्वितैः।
तं बुद्ध्वा तनुते गुरुप्रभृतिभिस्तन्मात्रचेतोगति-
र्ब्रह्मानन्दसरस्वती श्रुतिशिरःसूत्रेषु मुक्तावलीम् ॥ २ ॥

अथेयं शारीरकमीमांसाऽनारभ्या कर्तृत्वादिबन्धस्य समूलस्य सत्यतया ज्ञानानिवर्त्यत्वात्तन्निवृत्तेः फलस्य तत्कामस्याधिकारिणो जीवपरयोरैक्यस्य विषयस्य चासंभवाद्वेदान्तानामर्थवादत्वेन विचारविधिफलादिषु तात्पर्याभावाद्वेदार्थमात्रविचारस्य पूर्वमीमांसया कृतत्वाच्चेति प्रत्याह—

अथातो ब्रह्मजिज्ञासा ॥ १ ॥ (१) इति ।

नित्यानित्यविवेकभोगमात्रारागशमदमोपरतितितिक्षासमाधानानन्तर्यमथशब्दार्थः। अत इति। ल्यब्लोपपञ्चम्येमां मुमुक्षामवाप्येत्यर्थः। नित्यानित्यविवेकादिमुमुक्षान्तस्याथशब्दार्थानन्तर्यप्रतियोगिनः संभवप्रदर्शनार्थमत इतीति भाष्यादिः। [ + तत्र वदन्ति। विहितक्रियामात्रे सामर्थ्यविद्वत्त्वादिकमधिकारः काम्ये विहिते तु फलकामनाविशेषाधिकारो न तु तत्प्रयोजकमपि। तथा च ब्रह्मजिज्ञासायां मुमुक्षाया एवाधिकारत्वे (त्वं) न तु तत्प्रयोजकस्य नित्यानित्यविवेकादेरिति तयोरथशब्देनाऽऽनन्तर्योक्तिर्ब्रह्मजिज्ञासायां न युक्ता। न हि स्वर्गकामनातत्प्रयोजकयोः स्वर्गसाधनयोगादावधिकारतया क्वचिदपि निर्दे-

---

+ धनुश्चिह्नान्तर्गतोऽयं ग्रन्थः ख. पुस्तकस्थः।

शोऽस्ति । अथ स्वर्गकामनाप्रयोजकस्य स्वर्गज्ञानादेर्लोकसिद्धत्वादनुक्तावपि मुमुक्षाप्रयोजकस्योक्तविवेकादेरप्रसिद्धत्वात्तदुक्तिरावश्यकीत्युच्यते तदा तत्प्रयोजकतयैव तदुक्तिर्युक्ता न तु केवलरूपेण । किंचातः-शब्देन नित्यानित्यविवेकादेः संभवोक्तिर्व्यर्थाऽथशब्देन तदानन्तर्योक्तिसामर्थ्यादेव तत्संभवस्यापि लाभादिति । मत्पक्षे तु मुमुक्षावाक्येरेवोक्तविवेकादेरानन्तर्यस्योक्त्या तत्र तत्प्रयोज्यत्वलाभान्नोक्तदोष इति ध्येयम् । यदि तु नित्यानित्यविवेकादिप्रयोज्यत्वविशिष्टमुमुक्षाया एवाऽऽनन्तर्यमथशब्देनोच्यते तदा तादृशमुमुक्षाया अप्रसिद्धत्वादत्राविधेयत्वाच्चासंगतिः । अथ शान्तो दान्त इत्यादिश्रुतौ ज्ञानं प्रति साधनतया शमादेर्विधानात्तस्यां च मुमुक्षाश्रवणादिद्वारकत्वस्य मानान्तरसिद्धत्वान्मुमुक्षायाः शमादिप्रयोज्यत्वं प्रसिद्धमेवेत्युच्यते तथाऽपि मूलीभूतोक्तश्रुतौ मुमुक्षायाः शमादिभिः सह साधनत्वेनानिर्देशात्सूत्रे तथा तन्निर्देशो न युक्त इति ] ब्रह्मजिज्ञासा वेदान्तानां जीवपरयोरैक्ये तात्पर्यनिर्णयानुकूला विचाररूपा मानसी क्रिया * । कार्येति शेषः । न च ब्रह्मणि ज्ञाते तात्पर्यनिर्णयो वृथा, अज्ञाते च कथं जिज्ञासेति वाच्यम् । तात्पर्यनिर्णयस्य शाब्दबुद्धावहेतुत्वेन तदभावेऽपि ब्रह्मणि वेदान्तेभ्यः शाब्दसंशयस्य तेनैव जिज्ञासायाश्च संभवात् । दोषविधया शाब्दसंशयहेतोस्तात्पर्यसंशयस्यापसारणद्वारा तात्पर्यनिर्णयस्य शाब्दनिर्णयोपयोगित्वात् । शाब्दे च संशयत्वमानुभविकम् । अत एवाऽऽहत्यैव विप्रतिपत्तिवाक्यात्संशयमाहुः । निर्विकल्पकेऽपि तत्र संशयत्वं तं पश्यामि तमनुमिनोमीत्यादिधीसिद्धलौकिकविषयत्वविधेयत्वादिवत्संदेह्मीतिधीसिद्धविषयताविशेषस्य निरूपकत्वम् । तन्नियामकाश्चाननुगताः शक्तिविशेषविशिष्टत्वेनानुगता वा दोषाः [× यत्तु भावाभावरूपकोटिद्वयविशेषणकमेकधर्मविशिष्टे धर्मिणि ज्ञानं संशयः समुच्चयश्च । आद्ये विशेष्यतावच्छेदकव्यापकसंबन्धेनैक-

---

* अत्रेयं ख. पुस्तकस्था टिप्पनी—तथा च नित्यानित्यविवेकभोगमात्रारागशमादिषट्कसंपत्तिप्रयोज्यत्वविशिष्टमुमुक्षावाप्त्युत्तरकालीनवेदान्तवाक्यनिष्ठशोधितजीवपरैक्यविषयकतात्पर्यनिश्चयानुकूलविचाराख्यमानसव्यापारो मुमुक्षुनिष्ठकृतिविषय इति शाब्दबोधः सूत्राज्जायते ।

× धनुश्चिह्नान्तर्गतग्रन्थस्थानेऽयं ग्रन्थः क. पुस्तके—विशेषणीभूतकोट्योरन्यतरस्य विशेष्यतावच्छेदकव्यापकत्वेन संबन्धेन विशेषणता यस्मिञ्ज्ञाने तत्त्वरूपस्य तु संशयत्वस्यानन्तवस्तुघटितत्वेन न संदेह्मीति सर्वजनीनानुभवविरोधो न वा समुच्चयादिष्वतिप्रसक्तसंशयानुगतिः ।

कोटिर्विशेषणमिति नियमः । अन्त्ये त्वेकाऽपि कोटिर्नोक्तसंबन्धेन विशेषणमिति विशेष इति । तन्न । भूतलत्वाद्येकधर्मविशिष्टे तादृशसंबन्धेनैककोटिविशेषणकत्वे सति तत्र कोटिद्वयविशेषणकं यज्ज्ञानं तत्त्वरूपस्य संशयत्वस्यानन्तवस्तुघटितत्वेन न संदेह्मीति सर्वजनीनानुभवारोहः । किंच घटसंशयत्वं घटतदभावादिना घटितं पटसंशयत्वं तु पटतदभावादिना । तथा च घटपटादिसंशयेषु संशयत्वाकारानुगतप्रत्ययानुपपत्तिः । एवमीदृशसंशयान्यत्वरूपनिश्चयत्वविशिष्टस्य हेतुत्वादिस्वीकारे गौरवम् । एवं तादृशसंशयकाल एककोटावव्याप्यवृत्तित्वज्ञाने सति संदेह्मीति प्रत्ययभावान्निश्चयकार्योत्पादाच्चाव्याप्यवृत्तितयाऽगृह्यमाणकोटिद्वयविशेषणकत्वं संशयत्वघटकं तादृशसंशयान्यत्वं निश्चयत्वघटकमिति वाच्यम् । तथा चातिगौरवम् । ] अथ वा विचारोत्तरमेव ज्ञानमविद्यां निवर्तयति लौकिकसूक्ष्मार्थोपदेशजन्यज्ञाने तथैवानुभवात्, वेदान्तविज्ञानसुनिश्चितार्था इत्यादिपरिमुच्यन्तीत्यन्तश्रुतेश्च । निवर्तकतावच्छेदकं तु विचारनिवर्त्यस्य तात्पर्यसंशयस्य तदाहिताप्रामाण्यज्ञानस्य वा विरहेण विशिष्टसाक्षात्कारत्वं शक्तिविशेषो वेत्यन्यत् । सर्वथा तु विचारो न व्यर्थ इति ध्येयम् । अत्र चाधिकारघटकस्य मोक्षस्य फलस्य विचारसाध्यता ज्ञानद्वारा ' तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ' [श्वे० ३ । ८ ] ' यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ' [ श्वे० ६ । २० ] इत्यादिश्रुतेः । लोकेऽपि ज्ञानस्याज्ञाननिवर्तकत्वक्लृप्तेश्च । अतश्च ज्ञाननिवर्त्यत्वात् ' नेह नानाऽस्ति किंचन ' [ बृ० ४ । ४ । १९ ] ' नैवात्र काचन भिदाऽस्ति ' [ नृ० उ० ता० २ ] ' तदेतदद्वयं स्वप्रकाशं महः । नेदमात्मैवैतत् ' [ नृ० उ० ता० ८ ] ' न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयः ' [ नृ० उ० ता० ९ ] ' ऐतदात्म्यमिदं सर्वम् ' [ छा० ६ । ८ । ७ ] ' त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रम् ' [ नृ० उ० ता० १ ] इत्यादिश्रुतिभिर्घटः सन्नित्यादिप्रत्यक्षस्याधिष्ठानसत्ताविषयत्वेन दृश्यसत्यत्वे मानाभावाच्च बन्धः समूलो मिथ्या । इह ब्रह्मणि । नाना तद्भिन्नम् । भिदा भिन्नम् । तत्, तस्मात् । एतत्, अनुभूयमान आत्मा । एतज्जगद्बाधायां सामानाधिकरण्यम् ।

* सिद्धिस्तात्त्विकप्रमा । एतदात्म्यं ब्रह्मात्मकम् । अयं जाग्रदाद्यवस्थात्रयम् । सुषुप्तमज्ञानरूपं कारणं विना नास्ति यतः । स्वप्नं मिथ्या । तत्रापि हेतुः—मायामात्रं निरूपणानर्हम् । ततश्च ' अहं ब्रह्मास्मि ' [ बृ० १ । ४ । १० ] ' तत्त्वमसि ' [ ' नान्योऽतोऽस्ति श्रोता । ' [ बृ० ३ । ७ । २३ ] ' ब्रह्म वेद ब्रह्मैव भवति ' [ मु० ३ । २ । ९ ] ' तरति शोकमात्मवित् ' । [ छा० ७ । १ । ३ ] ' शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत् ' [ बृ० ४ । ४ । २३ ] ' तद्यथेह कर्मजितो लोकः क्षीयते एवमेवामुत्र पुण्यजितो लोकः क्षीयते ' [ छा० ८ । १ । ६ ] ' परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् । नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् ' [ मु० १ । २ । १२ ] ' तद्विजिज्ञासस्व ' [ तै० ३ । १ । १ ] ' आत्मा वा अरे द्रष्टव्यः श्रोतव्यः ' [ बृ० २ । ४ । ५ ] इत्यादिवाक्यानां बाधकाभावादप्राप्तार्थत्वाच्च + विषयादिपरत्वम् । अतो ब्रह्मणः । श्रोता श्रोतुर्जीवस्य स्वरूपम् । जितः प्राप्तः । परीक्ष्येति ' न तदस्ति सुखं लोके यन्न दुःखकरं भवेत् । तदसंप्राप्तिविच्छेदक्षयेष्वसुखकृद्यतः ' इत्यादिना विचार्य । निर्वेदं वैराग्यम् । अकृतो मोक्षोऽभिव्यक्तब्रह्मरूपत्वात् । कृतेन कृतिं विनाऽनुत्पन्नेन विहितकर्मणा । ज्ञानं तु कृतिं विनाऽप्युत्पद्यते दुर्गन्धादिज्ञाने तथा दृष्टत्वात् । तद्ब्रह्म विजिज्ञासस्व वेदान्तवाक्यार्थत्वेन विचारय । तेषां च वाक्यानां न विध्यपेक्षितकर्तृस्तावकत्वेन पूर्वमीमांसाविषयत्वम् । शुद्धब्रह्मपरमतात्पर्यकत्वेन गृह्यमाणत्वात्, स्वप्रकरणोक्तप्रधानवस्तुपरत्वसंभवे दूरस्थान्यशेषस्तुतिपरत्वकल्पनस्यान्याय्यत्वात्, अद्वैतात्मज्ञानद्वारकस्तुतिबुद्ध्यधीनविहितानुष्ठानासंभवरूपविरोधाच्च । नाप्युपासनाविधिपरतया, मानान्तरागम्यब्रह्मपरत्वस्यापि बाध्यत्वेन वाक्यभेदादुपासीतेत्याद्यध्याहाराद्यापत्तेः । दृष्टार्थकाद्वैतवस्तु-

* अत्रेय ख. पुस्तके टिप्पनी—बाध्यमानतादात्म्योपलक्षितविषयकशाब्दबोधजनकाकाङ्क्षाघटितसमानवचनकनामद्वयत्वं बाधायां सामानाधिकरण्यम् । यथा स्थाणुः पुमानित्यादौ बाध्यमानस्थाणुतादात्म्योपलक्षितपुंविषयकशाब्दबोधजनकस्थाणुपदजन्यस्थाणूपस्थितिपुंपदजन्यपुरुषोपस्थितिरूपाकाङ्क्षाजनकप्रथमैकवचनद्वयरूपसमानवचनकत्वसत्त्वाद्भवति बाधाया सामानाधिकरण्यं तथा प्रकृतेऽप्यूह्यम् । + ख. पुस्तकस्थेयं टिप्पनी—जीवपैरक्यादि ।

१ क. भेद इत्युग ।

धीपरत्वे संभवत्यदृष्टार्थकोपासनार्थत्वासंभवाच्चेति भावः । अस्याधि* करणस्य फलादिपूक्तश्रुतीनां समन्वयसमर्पणद्वारकविचारारम्भद्वारा प्रथमाध्यायप्रतिपाद्यस्य ब्रह्मणि वेदान्तसमन्वयस्य समर्पकत्वादाद्येऽध्याये तदीयप्रथमपादविचार्याणां स्पष्टब्रह्मलिङ्गश्रुतीनां शुद्धब्रह्मसमन्वयसमर्पकत्वात्तदीयप्रथमपादे शास्त्रारम्भार्थत्वाच्छास्त्रे चोपोद्घातः संगतिः । एवमग्रेऽपि ।

शास्त्रेऽध्याये तथा पादे ज्ञेयाः संगतयस्त्रिधा ।
सूत्रेष्वाक्षेपदृष्टान्तप्रत्युदाहरणादिकाः ॥ १ ॥
वक्ष्यन्ते तत्र तत्रैव सूत्राणामवतारणे ।
आद्येऽध्याये स्पष्टलिङ्गमस्पष्टत्वेऽप्युपास्यगम् ॥ २ ॥
ज्ञेयगं पदमात्रं च चिन्त्यं पादेष्वनुक्रमात् ।
द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता ॥ ३ ॥
भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता ।
तृतीये विरतिस्तत्त्वंपदार्थपरिशोधनम् ॥ ४ ॥
गुणोपसंहृतिर्ज्ञानबहिरङ्गादिसाधनम् ।
चतुर्थे जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा ॥ ५ ॥
ब्रह्मप्राप्तिब्रह्मलोकाविति पादार्थसंग्रहः ।

ज्ञेयगं शुद्धब्रह्मबोधकं वाक्यमिति शेषः । यद्यपि प्रथमाध्यायस्य द्वितीपादेऽपि कठवल्ल्यादिवाक्यं ज्ञेयब्रह्मगतं विचारितं तृतीये पादे दहरादिवाक्यमुपास्यब्रह्मगतं तथाऽपि तदवान्तरसंगत्येति न पादयोर्मुख्यप्रतिपाद्यसांकर्यम् । पदमात्रमव्यक्ताजादिसंदिग्धपदम् । अत्र च यद्यपि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनिसूत्रे श्रुतेः पदान्तरनिरपेक्षशब्दाल्लिङ्गं श्रुतेसामर्थ्यमर्थान्तरेणाविनाभावलक्षणं दुर्बलं श्रुतिसापेक्षत्वात्। यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादौ द्वितीयादिश्रुत्या 'निवेशनः संगमनो वसूनाम्' इत्याद्यैन्द्रर्च इन्द्रप्रकाशनसामर्थ्यरूपं लिङ्गमिन्द्रे विनियोजकं बाध्यते । ततोऽप्यनेकपदसामर्थ्यं वाक्यं तदुभयप्राप्तार्थमपेक्ष्य मुख्यामुख्यसंबन्धबोधकत्वात् । यथा 'स्योनं ते सदनं करोमि

* ख. पुस्तकस्थेयं टिप्पनी—विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥ १ ॥

१ क. तस्य सा°.

घृतस्य धारया सुशेवं कल्पयामि ते । तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ' इति मन्त्रे यथा कल्पयामीत्यन्तस्य सदनकरणे भागान्तरस्य पुरोडाशस्थापने च तत्प्रकाशकत्वेन लिङ्गेन विनियोगो न तु समभिव्याहारविशेषरूपवाक्येण संपूर्णमन्त्रस्य तयोरेकैकस्मिन्निति । ततोऽप्यन्यतरस्यान्योन्यस्य वाऽऽकाङ्क्षया वाक्यद्वयसामर्थ्यमारभ्याधीतविषयं प्रकरणं तच्चयं प्राप्तार्थमपेक्ष्य महावाक्यार्थबोधकत्वात् । यथा दर्शपूर्णमासप्रकरणे श्रुते सूक्तवाकाख्यनिगदे स्थितानामग्नीषोमाविदं हविरजुषेतामिन्द्राग्नी इदं हविरजुषेतामित्यादिपदानां मध्ये लिङ्गेन विभज्य विनियुक्तेन देवतापदेनैकवाक्यतापन्नत्वादिदमित्यादिपदानामपि तथैव विनियोगो न तु प्रकरणेन दर्शे पौर्णमासे च । ततोऽपि क्रमिकाणां क्रमिकान्तरैर्यथाक्रमसंबन्धः स्थानं क्रमद्वयप्रतिपादकवाक्यद्वयफलसामर्थ्यमपेक्ष्य क्रमसंबन्धबोधकत्वात् । यथा पञ्चहविष्केष्टावतिदिश्यमानानां पञ्चप्रयाजानां प्रधानाकाङ्क्षारूपप्रकरणेन पञ्चस्वङ्गत्वं न तु यथाक्रममेकैकस्मिन्नेकैकस्य । ततोऽपि वाक्यान्तरप्रतिपन्नस्य वाक्यप्रतिपन्नेनार्थेन संबन्धनिमित्तं संज्ञासामर्थ्यं समाख्या पूर्वसर्वसापेक्षत्वात् । यथा दर्शपूर्णमासप्रकरणे दधिपयोयागीयपात्रशुन्धनक्रमे पठितस्य शुन्धध्वमित्यादिमन्त्रस्य पात्रशुन्धनप्रकाशनद्वारा क्रमेणोक्तयागाङ्गत्वं न तु पौरोडाशिकेतिसमाख्यायुक्तकाण्डे पठितत्वात्समाख्यया पुरोडाशयागाङ्गत्वम् । ननु लिङ्गादीनां श्रुतिं विना साध्यसाधनभावावबोधकत्वात्सा तैरपेक्ष्यतां वाक्यादीनां तु लिङ्गादिसापेक्षत्वे किं मानमिति चेत् । लिङ्गादिकल्पनं विना श्रुतिकल्पनानुपपत्तिरेव । न हि सामर्थ्यादिकमपर्यालोच्य साध्यसाधनभावः श्रुत्या ज्ञातुं शक्यत इति स्थितम् । तथाऽपि तेषां तात्पर्याधीनप्रामाण्यत्वात्तात्पर्यस्य च फलादिनियतत्वादता*दृशं पूर्वमपि + तादृशेन परेण बाध्यते । न चेह वेदान्तगतब्रह्मलिङ्गानामर्थवादलिङ्गवन्न्यायान्तरापेक्षत्वम् । सर्वत्र ब्रह्मणः प्रतिपिपादयिषितत्वेन तल्लिङ्गानां तात्पर्यवत्त्वात्स्वतन्त्राणां प्रामाण्योपपत्तेः । अर्थवादस्थानां तु लिङ्गानां तात्पर्यहीनत्वेन न्यायान्तरापेक्षत्वम् । अत एव शाबर-

* अनेयं ख. पुस्तकस्था टिप्पनी—लिङ्गषट्कानुगृहीतफलादितात्पर्यनियतप्रामाण्यकभिन्नम् ।
+ ख. लिङ्गषट्कानुगृहीतफलादितात्पर्यनियतप्रमाण्यकेन ।

१ क. °वैपूर्वं° । २ ख. °णे दीपर° ।

भाष्ये सूत्रोक्तलिङ्गं व्याख्यायोच्यते ननु लिङ्गमुक्तं का प्राप्तिरिति । अत एव च द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करोतीति वाक्य ऐन्द्रवायवयागे द्विर्भक्षणं विधीयते । द्विर्हीत्यादिकं त्वर्थवादमात्रं न तु यत्र यत्र प्रदानभेदेन वषट्कारभेदस्तत्र तत्र भक्षणभेदाद्वषट्कारसमसंख्यं भक्षणमित्यस्यार्थस्य प्राप्तौ लिङ्गम् । अत एव षड्यागरूपाया सर्वपृष्ठायामिष्टौ पुरोडाशस्यैकत्वाच्छेषद्रव्यस्य साधारण्येन सकृदेव भक्षणास्विष्टकृदादि कार्यं न तु वषट्कारभेदेन तदावृत्तिरिति बोध्यम् ॥१॥(१)

लक्षणेनाज्ञातेऽर्थे न विचारसंभवः । न च 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति' [ तै० ३ । १ । १ ] इत्यादितटस्थलक्षणार्थकम् । तस्य मायिकस्य परमार्थालक्षणत्वात्, तद्विशिष्टस्यैव विचारेण ज्ञेयत्वापत्तेश्च । नापि 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २ । १ । १ ] इत्यादिस्वरूपलक्षणार्थकम् । तत्तत्पदैर्लोके स्वरूपाव्यवहाराल्लौकिकार्थघटिततटस्थलक्षणं विना स्वरूपलक्षणस्यालौकिकस्य दुर्बोधत्वाच्चेति प्रत्याह—

जन्माद्यस्य यतः ॥२॥ (२) इति ।

अस्य, अविद्याद्यनादिषड्भ्यो भिन्नस्य न तु जन्ममात्रस्येति । उत्तराधिकरणे वेदस्य नित्यतामादाय शङ्कानुत्थितेः । जन्माऽऽदिर्यस्य तज्जन्मस्थितिभङ्गम् । जन्महेतुत्वमविद्यायामप्यस्त्यतो भङ्गेति । तद्धेतुत्वमविद्यानाशेऽप्यत उभयघटितं लक्षणं वाच्यम् । सत्तास्फूर्तिस्थितिस्तां घटाद्यवच्छिन्नां प्रति ब्रह्मणो हेतुत्वं महाकाशस्येवावच्छिन्नाकाशं प्रति । तच्च लक्षणान्तरम् । यद्वा स्थितिसंहाराभ्यामुपादानत्वं लभ्यते तच्चाविद्यायामप्यतो जन्महेतुत्वम् । तच्च कर्तृत्वरूपम् । तेनाविद्याद्यन्यं प्रति कर्तृत्वे सत्युपादानत्वं लक्षणं * धूमप्रागभावादिति हेतौ यथा प्रागभावेति न व्यर्थं धूमत्वस्य प्रागभावावृत्तित्वात्किंतु नीलधूमादित्यत्र नीलत्वं तथेतरभेदानुमानहेतावुक्तलक्षण उपादानत्वं न व्यर्थं कर्तृता त्वस्य तदवृत्तित्वात् । अथवाऽदृष्टवारणाय लयाधारत्वमविद्यावारणाय कर्तृत्वरूपं

* ख. पुस्तकस्थेयं टिप्पनी—यद्यपि नीलधूमत्वादेर्व्याप्यतावच्छेदकत्ववारणाय व्याप्यतावच्छेदकान्तराघटितधर्मस्यैव व्याप्यतावच्छेदकत्वं वाच्यं तथाऽपि धूमप्रागभावत्वादौ व्याप्यतावच्छेदकत्वासिद्धये समानाधिकरणव्याप्यतावच्छेदकान्तराघटितधर्मस्यैव व्याप्यतावच्छेदकत्वं वाच्यम् ।

१ क °---। प्र° । २ ---°ति --- ब्र° ।

निमित्तत्वं तदुभयं परिणामितयोपादानं निमित्तं च ब्रह्मेतिवादिनां त्रिदण्डिनामिव स्यात् । ततश्च ब्रह्मणो विवर्तोपादानत्वालाभाद्द्वैतमिथ्यात्वासिद्धेरद्वैतब्रह्मरूपस्य सृष्ट्यादिवाक्यतात्पर्यविषयस्यासिद्धिरत उक्तरूपस्थितिहेतुत्वम् । तथा च विवर्तोपादानत्वे सति निमित्तत्वं तच्च न व्यर्थं धूमप्रागभाववत् । वस्तुतस्तु सिद्धान्ते लक्षणवाक्यं सर्वं वाच्यतावच्छेदकतत्तद्धर्मोपस्थितिद्वारा तदुपलक्षितलक्षिताखण्डव्यक्तिमात्रतात्पर्यकम् । तथा च यतो वेत्यादिलक्षणवाक्ये सृष्टिस्थितिप्रलयानामेकैककारणत्वमात्रोक्तौ तदुपस्थितिद्वारा तदुपलक्षितस्य सत्त्वरजस्तमसामेकैकगुणोपलक्षितब्रह्मस्वरूपस्यैवोक्तवाक्याल्लाभे तस्यैव स्वाभिन्नत्वेन जिज्ञासया महावाक्यतात्पर्यविषयतया निर्णयेन च महावाक्याधीनमुमुक्षुनिर्णयविषयत्वं स्यान्न तु गुणत्रयोपलक्षितस्य । तथा च गुणत्रयोपलक्षितेनेशस्वरूपेण जीवस्वरूपाभेदाज्ञानं न निवर्तेत । न हि च्छत्रिमात्रे तात्पर्यनिर्णयाधीनश्छत्री चैत्र इति वाक्यजन्योऽखण्डार्थबोधश्छत्री कुण्डली वासस्वी न चैत्र इति भ्रमहेत्वज्ञानस्य निवर्तकत्वे नाऽऽनुभाविकः । तथा च महावाक्यगततत्पदार्थस्वरूपस्याखण्डस्य जगत्स्रष्टृत्वाद्युपस्थितिद्वारा बोधकं यतो वेत्यादिवाक्यमिति न किमपि व्यर्थमिति ध्येयम् । तथा च शुक्तेस्तद्रजतेनेव मायिकेनाप्यसति बाधे ब्रह्मणो लक्षणसंभवः । आनन्दो ब्रह्मेत्यादिना च स्वरूपस्य निर्धारितत्वात् । सत्यत्वादिविशिष्टवाचकानां पदानां तात्पर्यानुरोधेन लोकाव्यवहार्येऽपि शुद्धे लक्षणाकल्पना । न च सत्यादिवाक्ये पदद्वयादेव शाब्दधीसंभवात्पदान्तरं व्यर्थमिति वाच्यम् । सत्यत्वाद्युपलक्षितशुद्धानामैक्यनिश्चयार्थं सर्वपदानामुपादानात् । अन्यथा सत्यत्वोपलक्षिताद्भेदो ज्ञानत्वानन्दत्वाद्युपलक्षितवृत्तिरिति भ्रमानिवृत्त्या ब्रह्मस्वरूपमोक्षस्य स्वप्रकाशचिदानन्दादिभिन्नेनान्तवस्त्वरूपेणाभेदबुद्ध्या तत्पासिरुरुपार्थत्वबुद्ध्या तत्साधनश्रवणादावप्रवृत्तिस्तस्य मिथ्यात्वबुद्ध्या ब्रह्मज्ञाने मिथ्याविषयकत्वरूपभ्रमत्वज्ञानादविद्यानिवर्तकत्वानुपपत्तिश्च । तावत्पदसत्त्वे तु समानविभक्तिकवैदिकसत्यादिपदजन्यशाब्दबुद्धिविषयत्वान्यथानुपपत्त्या सत्यादिपदार्थानामैक्यनिश्चयान्नोक्तभेदभ्रमः । तदुक्तं कल्पतरौ—इतरव्यावृत्तिस्त्वर्थान्न तु शब्दादिति । इतरव्यावृत्तिः सत्यत्वाद्युपलक्षितान्यव्यावृत्तिः सत्यत्वाद्युपलक्षिताना-

१ ख. 'से पु' । २ क. स्तत्पाभि' ।

भैक्यमिति यावत् । तथा च सत्यत्वाद्युपलक्षितानां परस्परावृत्तिपरस्परप्रतियोगिकभेदकत्वं विनोक्तशाब्दधीविषयत्वमनुपपन्नमिति धियोक्तपरस्परावृत्तिभेदप्रतियोगित्वनिश्चयान्नोक्तभेदभ्रम इति भावः ॥ २ ॥

न ब्रह्मोक्तकारणं वेदस्य नित्यत्वात् । जन्यत्वे मानान्तरेणोपलब्धिपूर्वकत्वेनाऽऽनुपूर्व्यनियमोऽप्रामाण्यं च स्याल्लौकिकवाक्यवत् । एवं च 'अस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः' इत्याद्यभिव्यक्तिपरम् । तथा च ब्रह्मणो जगत्कारणत्वाधीनसर्वज्ञत्वाद्यपि न सिध्यति । अस्य च ब्रह्मणो भूतस्य स्वतः सत्तावतो निःश्वसितमनायासेन जनितं वीक्षणाद्यायासेन भूतभौतिकत्वस्यैव जनितत्वादिति प्रत्याह-

शास्त्रयोनित्वात् ॥ ३ ॥ ( ३ ) इति ।

ब्रह्मोक्तकारणमेव शास्त्रस्य वेदस्य योनित्वादुक्तहेतुत्वात् 'धाता यथा पूर्वमकल्पयत्' [ महाना० ५ । ७ ] इत्यादिश्रुतेर्लाघवाच्च । पूर्वसृष्टिमनुरुध्यैव वह्न्यादेरुष्णत्वादिमत इव वेदस्य पूर्वसर्गीयानुपूर्व्यवच्छिन्नस्यैव रचनान्नाऽऽनुपूर्व्यनियमः । पुरुषाभिप्रायाद्यनपेक्षत्वेन निर्दोषत्वाच्च नाप्रामाण्यमिति भावः । यद्वा 'तं त्वौपनिषदं पुरुषं पृच्छामि' [ बृ० ३ । ९ । २६ ] 'नावेदविन्मनुते तं बृहन्तम्' इत्यादिकं ब्रह्मणो वेदैकगम्यत्वं न बोधयति, अनुमानेनैव सिद्धे तस्मिन्वेदस्यानुवादकत्वादेवं च वेदान्तैर्ब्रह्म न जिज्ञास्यमिति प्रत्याह—शास्त्रेति । ब्रह्म वेदान्तैर्जिज्ञास्यमेव शास्त्रयोनित्वाद्वेदैकगम्यत्वादित्यर्थः । वह्न्यादेरिव ब्रह्मणो विशेषरूपेणानुमाने कार्यलिङ्गस्यासमर्थत्वात् । तस्याक्षाद्यगम्यत्वात् । सहचारदर्शनमात्रेण व्याप्तेरुपगमे प्रासादादाविव नानाकर्तृकत्वस्याप्याद्यकार्ये सिध्यापातात् । कुलालादेः कपालद्वयसंयोगादिनाऽन्यथासिद्धत्वेन घटादेर्दृष्टान्तत्वासंभवात् । अतो यतो वेत्यादिशास्त्रमेव तत्र मानम् । यतो यस्माद्भूतानि कार्याणि तेन ब्रह्मणो जगद्वीक्षणं सिसृक्षा कृतिर्दृग्दृश्ययोस्तादात्म्यं तमो द्रव्यं चेत्यादीनां लाभः । येनेत्येकवचनम् । 'एकमेवाद्वितीयम्' [ छा० ६।२।१ ] 'एको जालवानीशते' [श्वे० ३।१] 'यः सर्वज्ञः सर्ववित् । यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' [ मु० १।९ ] ब्रह्म हिरण्यगर्भः । इत्यादिश्रुत्यन्तराणि च तदेकत्वादाविति भावः ॥ ३ ॥ ( ३ )

तादृशं ब्रह्म न वेदान्तप्रतिपाद्यं प्रवृत्तिनिवृत्त्यविषयत्वेन निष्फलत्वात्, तात्पर्यासंभवात्, अर्थेऽनुपलब्धे तत्प्रमाणमिति न्यायेनाप्रमिते सप्रयोजन एव श्रुतेस्तात्पर्यनिश्चयात्कार्यान्वित एव पदानां व्युत्पत्तेः 'आनर्थक्यमतदर्थानाम्' [ जै० १।२।१ ] इत्यादिभिरक्रियार्थानां जैमिनिनाऽप्यप्रामाण्योक्तेरिति प्रत्याह—

तत्तु समन्वयात् ॥ ४ ॥ ( ४ ) इति ।

तद्ब्रह्म वेदान्तवेद्यमेव समन्वयात् 'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादश्चोपपत्तिर्लिङ्गं तात्पर्यनिर्णये' इति षड्विधलिङ्गगृहीतवेदान्ततात्पर्यविषयत्वात् । तथा हि छान्दोग्ये षष्ठे 'सदेव सोम्येदमग्र आसीत्' [ छा० ६।२।१ ] 'एकमेवाद्वितीयम्' [ बृ० २।५।१९ ] इत्युपक्रमः । 'ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि' [ छा० ६।८।७ ] इत्युपसंहारः । ऐतदात्म्यमित्यादिस्तत्त्वमसीत्यन्तस्य नवकृत्वो वचनमभ्यासः । आचार्यवान्पुरुषो वेदेत्यनेन मानान्तराविषयत्वरूपापूर्वत्वकथनम् । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' ( छा० ६।१४।२ ) इति फलकथनम् । 'तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' (छा० ६।१।३) इत्याद्यर्थवादः । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' (छा० ६।१।४) इत्याद्युपपत्तिः । हे सोम्याग्रे सृष्टेः पूर्वकाल इदं प्रपञ्चाभिन्नं यदासीत्तत्सदेव न तु बौद्धसंमतमसत् । एकमेवाद्वितीयं सजातीयविजातीयस्वगतधर्मरूपद्वितीयशून्यं न तु तार्किकादिसंमतं सद्वितीयत्वम् । सद्वितीयत्वं यादृशं घटः सन्नित्यादिप्रत्यक्षादिप्राप्तं तादृशो निषेधस्तस्य बोध्यते सार्वकालिकं च तत्प्राप्तमिति सार्वकालिको निषेधो न त्वग्र इत्यस्य निषेधेऽन्वयः । तथा च तादृशस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगित्वस्य दृश्यमात्रे लाभान्मिथ्यात्वलाभः । यद्देशकालावच्छेदेन ब्रह्म यत्संबन्धि तदवच्छिन्नो यो ब्रह्मण्यत्यन्ताभावस्तस्येति तु निष्कर्षः । वस्तुतस्त्वद्वितीयादिपदेनानवच्छिन्नविशेषणतासंबन्धेन सजातीयाद्यभावविशिष्टं बोध्यते । इदंपदेन ब्रह्मणि सर्वदृश्यसंबन्धलाभात्तद्वृत्ति तादृशविशिष्टत्वलाभान्मिथ्यात्वलाभः । आदेशमज्ञातत्वेनोपदेशार्हमप्राक्ष्यो गुरुं प्रति पृष्टवानसि येन ब्रह्मणा श्रुतेनाश्रुतं जगच्छ्रुतं

---

१ क °वप्र° । २ क. °च्छिन्ने प्र° ।

भवति जगतो ब्रह्मस्वरूपकत्वाद्यथेत्यादिकमारम्भणाधिकरणे व्याख्येयम् । एवं बृहदारण्यके—'आत्मेत्येवोपासीत । अत्र ह्येते सर्व एकं भवन्ति ' [ बृ०१।४।७ ] इत्युपक्रम्य ' स एष नेति नेति ' [ बृ०३।९।२६ ] इत्यादिनाऽभ्यस्य ' तं त्वौपनिषदं पुरुषं पृच्छामि " [ बृ० ३।९।२६ ] इत्यपूर्वयित्वा ' अभयं वै जनक प्राप्तोऽसि ' [ बृ० ४।२।४ ] ' ब्रह्मैव सन्ब्रह्माप्येति ' [ बृ० ४।४।६ ] इति सफलीकृत्य ' तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् ' [बृ० १।४।१०] इत्यर्थवादमुक्त्वा ' स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेनदुन्दुभ्याघातस्य वा शब्दो गृहीतः' [बृ० २।४।७] इत्यादिवोपपाद्य 'पूर्णमेवावशिष्यते' [ बृ० ५।१।१ ] इत्युपसंहृतम् । आत्मेत्येव, आत्मस्वरूपमात्रम् । अत्र श्रवणादिसाक्षात्कारपर्यन्तोपासनायां सत्यां सर्वे पृथिव्याद्यर्था एकं केवलं स्वकालपूर्वकालवर्तिभिन्नं यज्ज्ञानात्मस्वरूपं तदात्मका भवन्ति चरमज्ञानविषयत्वविशिष्टात्मनो दृश्यकालपूर्ववर्त्यन्यत्वात् । एष आत्मेति प्रत्यक्षमात्तमिति । अनुमानादिप्राप्तं घटादिकम् । औपनिषदमुपनिषन्मात्रवेद्यम् । अभयं ब्रह्म प्रत्यबुध्यत ब्रह्म ज्ञातवान् । तदभवत्, ज्ञातब्रह्मस्वरूपेणैकीभूतः । बाह्यान्दुन्दुभिशब्दविशेषरूपान् । शक्नुयादिति । दुन्दुभिशब्दसामान्याग्रहण इति शेषः । दुन्दुभेर्दुन्दुभिशब्दसामान्यस्य । दुन्दुभ्याघातस्य शब्दो दुन्दुभिशब्दविशेषः । तथा च विशेषस्याऽऽरोपे सामान्यस्याऽऽधारत्वाद्दुन्दुभिशब्दमात्रगतसामान्यस्याभाने यथा तद्गतविशेषाणामग्रहणमेवं ब्रह्मस्वरूपस्य सत्सामान्यस्याग्रहणे तद्गतविशेषरूपस्य प्रपञ्चस्यापीति तत्र स कल्पित इति दुन्दुभिवाक्यार्थः । तथा च प्रवृत्त्याद्यविषयस्यापि परमानन्दब्रह्मात्मनः साक्षात्कारजनकत्वेन वेदान्तानां न नैष्फल्यम् । कार्यान्वित एव पदानां व्युत्पत्तिस्तु न प्रामाणिकी पुत्रस्ते जातो नायं सर्प इत्यादिवाक्यजन्यसुखभयनिवृत्तिजनकानुभवस्यानुभवबाधिता जैमिन्यादिवाक्यं तु निष्फलोपाख्यानाद्यपेक्षयेति भावः । ननु षड्विधलिङ्गानां कथं तात्पर्यज्ञापकतेति चेत् । इत्थम् । उपक्रमोपसंहारौ मध्यस्थवाक्यस्य स्वविषयपरत्वानुमापकावुपांशुयाजादिवाक्ये तदव्यभिचारितया दृष्टत्वात्तदभ्यासस्य वाक्यार्थोत्कर्षबोधकतया वाक्यार्थपरत्वं तत्परत्वे विना तदुत्कर्षपरत्वप्रयुक्तस्य तदुत्कर्षबोधकत्वस्यानुपपत्तेः । अर्थवादस्य तु विधिव्याप्यत्वा-

---

१ क °ति य° । २ ख. °मान्यम° । ३ ख. 'घातः श° । ४ ख. °स्याग्रहणे य° ।

द्विधेश्च तात्पर्यव्याप्यत्वात्तोत्पर्यज्ञापकत्वम् । अपूर्वत्वमज्ञातत्वमुपपत्ति-रबाधितत्वं तयोस्तु प्रमात्वघटकत्वेन तात्पर्योपयोगित्वम् । प्रमायामेव वाक्यस्य तात्पर्यात् । फलवत्त्वमपि तात्पर्योपयोगिनिष्फलार्थे 'उत्ताना वै देवगवा वहन्ति' [ आपस्तम्बश्रौतसूत्र० ११ । ७ । ६ ] इत्यादि-श्रुतेस्तात्पर्याभावात् । एवं चापूर्वत्वादित्रयं तात्पर्याभावव्याप्यस्य स्वाभावस्य विघटकत्वेन तात्पर्योपयोगीति बोध्यम् ॥ ४ ॥ ( ४ )

सर्वज्ञस्यैव चेतनस्य यतो वेत्यादिश्रुतौ कारणत्वमभिप्रेतं तन्न ज्ञानरूपस्य ब्रह्मणोऽपरिणामिनो व्यापारशून्यत्वेन कर्तृत्वाद्यसंभवात् । तथाचाचेतनं प्रधानं तथाऽस्तु तस्य गुणपरिणामसंभवात् । एवं च 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभि-संविशन्ति' ( तै० ३ । १ । १ ) इत्यपि तद्विषयमिति प्रत्याह—

ईक्षतेर्नाशब्दम् ॥ ५ ॥ इति ।

'सदेव सोम्येदमग्र आसीत्' [ बृ० ६ । २ । १ ] 'एकमेवा-द्वितीयम्' [ बृ० २ । ५ । १९ ] 'तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत । तत्तेज ऐक्षत बहु स्यां प्रजायेयेति । तदपोऽसृजत' [ छा० ६।२।३ ] 'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति । ता अन्नमसृजन्त' [ छा० ६ । २ । ४ ] इत्यादिजगत्कारणबोधकं *वाक्यं न प्रधानबोधकं यतोऽशब्दं प्रधानबोधकशब्दशून्यम् । कुतः । ईक्षतेः । ईक्षधातुसमभिव्याहारविशेषाज्जगत्कारणस्य चेतनत्वलाभात् । तदेकवा-क्यतया यतो वेत्यादावपि तथा कल्पनात् । 'स तपस्तप्त्वेदं सर्वमसृजत' [ तै० २ । ६ । १ ] इत्यादितदुत्तरवाक्येऽपि तपःशब्दितेक्षणश्रवणाच्च । ईक्षणं कीदृशं तत्राऽऽह—बह्विति । आकाशादिनानाकार्यात्मकः स्याम् । किमर्थं तथात्वं तत्राऽऽह—प्रजायेयेति । तदुत्तरं देवमनुष्यादि-

* अत्रेय ख पुस्तके टिप्पनी—जगत्कारणबोधकवाक्य न प्रधानबोधक प्रधानबोधकशब्दशून्य त्वात् । यद्यद्बोधकशब्दशून्य तत्तद्बोधक न भवतीति सामान्यव्याप्ते । न चोक्तवाक्ये प्रधानबोधकश-ब्दशून्यत्वमसिद्धमिति वाच्यम् । निरुक्तवाक्य प्रधानबोधकशब्दशून्य चेतनधर्मभूतेक्षणबोधकेक्षधातु समभिव्याहृतत्वात्तस्य साधनात् । न चेक्षधातुसमभिव्याहृतत्वेऽपि निरुक्तवाक्ये सदादिके तदैक्षतेत्यादौ प्रधानबोधकशब्दशून्यत्वमसिद्धम् । भ्रान्तोऽसि । ईक्षणविशिष्टजगत्कारणबोधकत्वेन सस्य तत्र सिद्धे । ततश्च समानसवित्सवेद्यतयेक्षणविशिष्टजगत्कारणस्य तद्बोध्यत्वेन जगत्कारणस्य चेतनत्वलाभ । तथा हि जगत्कारण चेतनतनमीक्षणाच्च प्रधान तच्छून्यत्वात् ।

प्रजारूपः स्यामिति । 'तदाकाशमसृजत तदाकाशमैक्षत' इत्यादि-शेषो वियदधिकरणन्यायात् । तदाकाशमैक्षतेति । आकाशात्मकं सद्रूपं ब्रह्मैक्षतेत्यर्थः । एवमग्रेऽपि । ता आप इति तु 'शैत्यं हि यत्सा प्रकृतिर्जलस्य' इतिवत्तत्पदस्य विधेयलिङ्गवचनग्राहित्वान्नासंगतम् । न च सकृदीक्षणेनैव निर्वाह आकाशादिसृष्ट्युत्तरं पुनरीक्षणं व्यर्थमिति वाच्यम्। नानाकार्याणां क्रमेण सृष्टौ तादृशेक्षणानां लोके दृष्टत्वादाकाशादिपरिणामकाले पूर्वजातेक्षणपरिणामस्य मायायामभावेन पुनरपीक्षणं विना तज्जन्यकार्यासंभवादाकाशतत्तादात्म्यतन्निष्ठब्रह्मतादात्म्यरूपकार्यत्रयमादाय पूर्वेक्षणविषयाणां सिद्धत्वाच्च ॥ ५ ॥

गौणश्चेन्नाऽऽत्मशब्दात् ॥ ६ ॥ इति ।

'तत्तेज ऐक्षत' ( छा० ६ । २ । ३ ) इत्यत्रेव गौणईक्षतिरिति चेन्न । 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' [ छा० ६ । २ । ३ ] इत्यत्र जगत्कारणस्य जीवाभिन्नस्वरूपबोधकादात्मशब्दात्स आत्मेत्यादावात्मशब्दात्तत्तेज इत्यादौ सद्रूपात्मबोधकतच्छब्दाद्वा ॥ ६ ॥

ननु स आत्मेत्यादावात्मशब्दः प्रधानस्वरूपबोधकस्तत्तेज इत्यत्रापि तेजआदिबोधको जीवेनाऽऽत्मनेत्यत्रापि मित्रं ममाऽऽत्मेत्यादाविवाऽऽत्मशब्दो गौणस्तत्राऽऽह—

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ इति ।

तस्मिञ्जगत्कारणे निष्ठा स्वैक्यधीर्यस्य तादृशस्य 'आचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' [ छा० ६ । १४ । २ ] इत्यनेन स्वरूपाच्छादकाविद्यानिवृत्तिरूपस्य मोक्षस्योपदेशात् । आचार्यवांस्तत्त्वमसीत्यादिवाक्यविचारसंबन्धेनाऽऽचार्ययुक्तः । चिरं कैवल्ये विलम्बः । विमोक्ष्ये प्रारब्धभोगेन विमोक्ष्यते । संपत्स्ये संपत्स्यते केवली भविष्यति । अकारतकारयोर्लोपश्छान्दसः । एवकारान्मोक्षायोपायान्तरानुष्ठानेन न विलम्बः । तस्य ज्ञानमात्रेण सिद्धत्वात् ॥ ७ ॥

नन्वरुन्धतीनिदर्शनन्यायेन प्रधाननिष्ठस्यापि स्वरूपनिश्चयद्वारा मोक्षस्यायमुपदेशस्तत्राऽऽह—

हेयत्वावचनाच्च ॥ ८ ॥ इति ।

अरुन्धतीदृष्टयै दर्शितस्य तारान्तरस्येव प्रधानस्य हेयत्वं नोक्तमतो न तद्रूपाय इति भावः ॥ ८ ॥

अर्थाद्धेयताऽस्त्वित्यत्राऽऽह—

स्वाप्ययात् ॥ ९ ॥ इति ।

'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' [छा० ६ । ८ । १ ] इत्यत्र जगत्कारणस्य सतः सुषुप्तस्वरूपत्वं स्वशब्देनोक्त्वा तत्र तस्यौपाधिकलयस्वरूपस्याप्ययस्य कथनात् । न च स्वशब्देन जगत्कारणरूपं सन्नोक्तं किंतु ब्रह्मैव तथा च जगत्कारणस्य प्रधानत्वेऽप्युक्तवाक्यमुपपद्यत इति वाच्यम् । स्वाप्ययस्य सत्संपत्तिहेतुत्वेन निर्देशेन सत एव स्वस्वलाभाद्न्यत्र संपत्तावन्यत्राप्ययस्य हेतुत्वासंभवात् ॥ ९ ॥

कस्मिंश्चिद्वेदान्ते तथा प्रधानं भविष्यति तत्राऽऽह—

गतिसामान्यात् ॥ १० ॥ इति ।

सर्ववेदान्तेषु चेतनस्यैव कारणत्वावगतेस्तात्पर्यवत्त्वेन समानत्वात् ॥ १० ॥

श्रुतत्वाच्च ॥ ११ ॥ (५) इति ।

ब्रह्म प्रकृत्य 'स कारणं करणाधिपाधिपः' [ श्वे० ६ । ९ ] इत्यादिना चेतनहेतुत्वस्य श्रुतत्वात् । यद्यपि प्रधानस्येक्षणं कार्योन्मुखत्वं ब्रह्मण आश्रयत्वरूपं कर्तृत्वमिव गौणं संभवति तथाऽपि प्रत्ययार्थानुवादेन प्रकृत्यर्थविधाने प्रकृतेरेव लक्षणादोषोऽनुवादे लक्षणाया अदोषत्वात् । तदुक्तं 'न विधौ परः शब्दार्थः' इति । विधौ विधायके परो लक्ष्य इति । अतो निरपेक्षस्वार्थविधायकत्वात्प्रकृतेः प्राबल्यं प्रत्ययार्थस्य तु प्रकृत्यर्थावच्छिन्नस्यैवान्यत्रान्वयानियमात्तादृशान्वये द्वयोर्विधायकत्वेन प्राबल्यं न तु प्रत्ययस्यैवेति प्रकृतेरेव मुख्यत्वमुचितम् । प्रत्ययार्थश्च कर्तृत्वमाश्रयत्वं गौणं मायावृत्तिविशेषरूपेक्षणस्य । वाचस्पति-

१ क. °पे लक्ष° ।

मते तु तदस्वीकाराज्जन्यविषयपूर्वकालावच्छिन्नचिद्रूपेक्षणस्याऽऽश्रयत्वमनुकूलव्यापारवत्त्वं मुख्यमेव च । नन्वीक्षत्यादेर्मुख्यत्वमपेक्ष्य कारणे चेतनत्वं निर्णीतम् 'तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा ' [ तै० २ । ५ । १ ] इत्यादिवाक्य आनन्दमय इत्यत्र मयटो विकारप्राचुर्ययोर्मुख्यत्वाविशेषान्न परमात्मनिर्णयः, किंतु ' स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा ' [तै०२।१।१] इत्यादिपूर्वैक्तस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमय इत्यादिना पूर्वोक्तान्नमयप्राणमयमनोमयविज्ञानमयरूपविकारमयट्पाठात्प्रियाद्यवयवलिङ्गाच्छारीरश्रुतेश्चाऽऽनन्दमयो जीवस्तदुपास्तिर्विधीयत इति प्रत्याह—

आनन्दमयोऽभ्यासात् ॥ १२ ॥ इति ।

आनन्दमयं प्रकृत्य 'रसो वै सः । रस* ह्येवायं लब्ध्वाऽऽनन्दी भवति [ तै० २।७।१ ] ' आनन्दो ब्रह्म ' [ तै० ३।६।१ ] । ' को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्' [तै०२।७।१] इति ब्रह्मण्यानन्दपदेनाऽऽ*नन्दमयपदाभ्यासात् । ज्योतिषा यजेतेत्यादौ ज्योतिरादिपदेनापि ज्योतिष्टोमादिपदस्याभ्यासस्वीकारात् । विज्ञानमयाद्बुद्ध्युपाधिकात् । तेनाऽऽनन्दमयेन । एष विज्ञानमयः । पूर्णः कारणेन कार्यस्य पूर्णत्वात् । तस्य विज्ञानमयस्य । पुरुषविधता शिरःपक्षादियुक्तता तामनु । अयमानन्दमयः । पुरुषविधः शिरआदियुक्तः कारणस्य कार्याकारप्राप्तेः । तस्याऽऽनन्दमयस्येष्टस्य दर्शनसंबन्धतदभ्यासजन्यसुखानि प्रियमोदप्रमोदाः । आनन्दः सुखसामान्यम् । प्रियादीनां शिरआदिभावकल्पनयाऽऽनन्दमयस्यावयविनः पक्षिभावो +व्यङ्ग्यः । एवमन्नमय-

* अत्रेयं ख. पुस्तके टिप्पनी—आनन्दमयशब्दवाच्य ईश्वरः पुनः पुनरुच्चारणविषयीभूतानन्दमयपदवाच्यबोधकरसानन्दादिपदजन्यबोधविषयत्वान्न तु जीवस्तच्छून्यत्वात् । + क. पुस्तके व्याप्य इति पाठान्तरम् ।

स्यापि बोध्यम् । तत्रेदमेवेति अन्नमयशरीरे विद्यमानमेव । अयं दक्षिणहस्तोऽयं वामहस्तोऽयं मध्यमाग इदमधोभागरूपं प्रतिष्ठा स्थितिहेतुरालम्बनमिति यावत् ॥ १२ ॥

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥ इति ।

प्राचुर्यात्प्राचुर्यार्थकत्वसंभवात् ॥ १३ ॥

विनिगमकमाह—

तद्धेतुव्यपदेशाच्च ॥ १४ ॥ इति ।

'एष ह्येवाऽऽनन्दयाति' [ तै० २ । ७ । १ ] इत्यनेन तस्याऽऽनन्दमयस्याऽऽनन्दहेतुत्वकथनात् । आकाशस्येवानवच्छिन्नत्वरूपप्राचुर्यवत एवाऽऽनन्दस्य स्वांशमात्रं प्रति हेतुत्वसंभवात् ॥ १४ ॥

मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥ इति ।

चो हेतौ । यतः 'सत्यं ज्ञानमनन्तं ब्रह्म' [ तै० २ । १ । १] इतिसंग्रहवाक्यरूपमन्त्रवर्णेन यत्प्रक्रान्तं तदेवात्राऽऽनन्दमयशब्देन गीयते प्रतिपादनार्हमतोऽपि स एवार्थः ॥ १५ ॥

जीवस्यापि कदाचिदानन्दहेतुत्वादिसंभवस्तत्राऽऽह—

नेतरोऽनुपपत्तेः ॥ १६ इति ।

इतरो जीवो नाऽऽनन्दमयः 'स तपस्तप्त्वा । इदं सर्वमसृजत' [ तै० २ । ६ । १ ] इत्याद्यनुपपत्तेः ॥ १६ ॥

भेदव्यपदेशाच्च ॥ १७ ॥ इति ।

'रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवति' [ तै० २ । ७ । १ ] इति लब्धृलभ्यभावादि भेदोक्तेः ॥ १७ ॥

प्रधान एव कथंचिन्मन्त्रादिप्रतिपाद्यत्वमस्तु तत्राऽऽह—

कामाच्च नानुमानापेक्षा ॥ १८ ॥ इति ।

'सोऽकामयत' [ तै० २ । ६ । १ ] इति चेतनधर्मकामश्रुतेर्नानुमेयस्य प्रधानस्यापेक्षा ग्रहणम् ॥ १८ ॥

कामो गौणस्तत्राऽऽह—

अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥ (६) इति ।

'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ' [ तै० २ । ७ । १ ] इति वाक्यमस्मिन्नानन्दमयप्रकरणेऽस्य जीवस्य तेन जगत्कारणेन योगमैक्यं शास्ति प्रतिपादयति । चो हेतौ । एष जीवः । एतस्मिञ्जगत्कारणे सप्तम्यन्तानां स्थूलसमष्टेः सूक्ष्मशरीरसमष्टेः सूक्ष्मभूतेभ्यः शब्दशक्त्येभ्यः प्रकृतेर्भिन्नं यथाक्रममर्थः । प्रतिष्ठामैक्यम् । अभयं यथा स्यात्तथा विन्दते ज्ञानेन लभते । उदपि । अरमल्पमुपास्यत्वादि । अन्तरं भेदम् । कुरुते पश्यति । यद्यपि प्रायपाठादानन्दमयो विकारो युक्तस्तथाऽप्यन्नमयादीनामानन्दमयं प्रत्यङ्गत्वेन नाङ्गानुरोधेन प्रधानस्य विकारत्वं कल्प्यम् । न चाऽऽनन्दमयस्याप्यन्यं प्रत्यङ्गत्वम् । अश्रुतेः । प्रियमोदप्रमोदानां संबन्धादिकं तु जीवाभिन्नत्वाद्ब्रह्मणोऽपीति भावः । वस्तुतस्तु ब्रह्म पुच्छमिति ब्रह्म प्रधानभूताऽऽनन्दमयस्य प्रधानस्यावयव इति संशय उक्तसिद्धान्तं पूर्वपक्षीकृत्य प्रत्याह—आनन्देति । [ ब्र० अ० १ । पा० १ सू० १२ ] नञ् ' ईक्षतेर्न ' इतिसूत्रादनुवर्तते । आनन्दमयो न प्रधानं किंतु ब्रह्म पुच्छमित्यत्र ब्रह्मैव ब्रह्मणि मुख्यानन्दपदस्याभ्यासात् । विकारेति [ ब्र० अ० १ पा० १ सू० १३ ] । विकारशब्दादवयववाचकपुच्छपदसमभिव्याहाराद्ब्रह्म न प्रधानं किंत्वानन्दमयस्य प्रधानस्यावयव इति चेत् । न । प्राचुर्यात् । अन्नमयादिविकारप्रचुरपाठादानन्दमयस्य विकारत्वेनाप्राधान्यात् । तदिति [ ब्र० अ० १ पा० १ सू० १४ ] । तदानन्दमयादिविकारमात्रं प्रतीदं सर्वमसृजतेत्यादिना ब्रह्मणो हेतुत्वव्यपदेशात् । न हि हेतोर्द्वैततया प्रकरणप्रतिपाद्यस्यावयवत्ववर्णनं संभवतीति भावः । मान्त्रेति [ ब्र० अ० १ पा० १ सू० १५ ] । तथा च प्रथमश्रुतस्यासंजातविरोधित्वेन प्राबल्यात्तथाविधमन्त्रप्रतिपाद्यब्रह्माभिधायित्वेन ब्रह्मशब्दस्य मुख्यत्वमुररीकृत्य तदनुसारेण पुच्छशब्द आधारे लाक्षणिकतया नेयो न त्वन्नमयादिपर्यायोक्तस्य पुच्छपदस्यावयवार्थकत्वादितरस्यापुच्छशब्दस्यावयवार्थत्वं प्रकल्प्य तदनुसारेणाऽऽनन्दमयशेषत्वं कृत्स्नवा-

१ ख. °क्रमम्° । २ क. °तेभ्यः प्र° । ३ क 'त्वादेतस्यापि पु' ।

वयस्य । किंच प्राचुर्य इव विकारेऽपि मयट्श्रुतेर्विकारप्रकरणात्प्रियाद्य-वयवैर्निरूप्यमाणावयव्यादिलिङ्गाच्च विकार एवार्थः । केवलश्रुत्यपेक्षया श्रुतिप्रकरणलिङ्गानां प्राबल्यात्प्रतिष्ठापदसमभिव्याहाराच्च पुच्छपद-स्याऽऽश्रये लक्षणा । न च सा दोषः । लाङ्गूलशक्तस्य तस्य लाङ्गूलसदृ-शरूपे त्वदीयेऽर्थे मात्रकत्वात् । न च मन्मते लाङ्गूलमेवार्थो न तत्स-दृशमन्नमयादिपर्यायेऽन्नमयादेरिवाऽऽनन्दमयपर्यायेऽपि पुच्छादिदृष्टय-ङ्गकस्याऽऽनन्दमयेश्वरस्योपासनस्य विधेयत्वादिति वाच्यम् । तथाऽपि पुच्छादिपदस्य पुच्छादिदृष्टिविषये लाक्षणिकत्वान्मन्मतेऽप्याश्रयत्वाद्यु-पस्थितिद्वारा शुद्धब्रह्म लक्ष्यते । आश्रयत्वं तु पूर्वप्रकृतान्नमयादिपञ्चको-शादेरेव । तथा च शुद्धब्रह्मस्वरूपोपलक्षणघटकतयोक्तेष्वपि पञ्चको-शेषु पुच्छादिदृष्टयङ्गकतत्तदुपासनाविधिर्दर्शादिप्रकरणे गोदोहनादिविधे-रिव शुद्धब्रह्मप्रकरणेऽपि संभवादानन्दमयोपासनस्य ब्रह्मादिषु पुच्छा-दिदृष्टयङ्गकस्य विधेरवान्तरतात्पर्येण बोधनेऽपि महातात्पर्येणान्नमया-द्याश्रयोपस्थितिद्वारा शुद्धब्रह्मप्रमासंभवादुपासनस्य तादृशप्रमायां चित्तशुद्धिद्वारा हेतुत्वेन तद्विधानस्यावान्तरतात्पर्यविषयत्वसंभवात् । एतावांस्तु विशेषो यद्विकारप्रायपाठादानन्दमयो मन्मते जीवः शुद्ध-ब्रह्म मुख्यतया प्रतिपाद्यते तदुपयोग्यन्नमयादिसकलवाक्यसंदर्भः । त्वन्मते त्वानन्दमय ईशस्तदुपासनमेव पुच्छब्रह्मादिदृष्टयङ्गकं मुख्यतया विधी-यत इति भावः ॥ १९ ॥ ( ६ )

ननु यथा नानाप्रमाणैर्ब्रह्म प्रधानं निर्णीतमेवं 'य एषोऽन्तरादित्ये हिर-ण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः' [छा० १।६।६] 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' [छा० १।६।७] 'इत्यधिदैवतम् । अथाध्यात्मम्'' य एषोऽन्तरक्षिणि पुरुषो दृश्यते तस्यैतस्य तदेव रूपं यदमुष्य रूपं यन्नाम तन्नाम ' [ छा० १ । ७ । ५ ] इत्यादावपि हिरण्यश्मश्रुत्वकप्यासनहेतुपायुस्थानतुल्यपद्मतु-ल्याक्षित्वादिरूपश्रवणात, आदित्याक्ष्यभ्यन्तरस्य चाऽऽधारस्य श्रव-णात्, ' ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च ' [ छा० १।६।८] इति पूर्वस्य ' ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे' मनुष्यका-

१ क. 'टदु'। २ ख. मन्नप्रमायां अनक:यत्म'। ३ क. 'रूपो मु'। ४ क. 'दाश्रात्तदु'।

मानां च ' [ छा० १।७।८ ] इत्युत्तरस्यैश्वर्यमर्यादाश्रुतेश्च जीव एव पुरुषशब्दित उपास्यः प्रतीयतां तस्य च देवत्वेन कर्मानधिकारात्सर्वपाप्मोदितत्वम् ' ऋक् [च] साम च गेष्णौ ' [ छा० १।६।८ ] इत्यादिसार्वात्म्योक्तिस्तु स्तुतिरिति प्रत्याह—

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥ इति ।

अनन्यथासिद्धापहतपाप्मत्वादिधर्मोपदेशादन्तरुपदिश्यमानः पर एव । [ * एतस्याक्षण्यन्तरपुरुषस्य । अमुष्याऽऽदित्याभ्यन्तरपुरुषस्य । गेष्णौ + देहग्रन्थी । अमुष्मात्सूर्यस्थानात् । पराञ्च ऊर्ध्वाः । ईष्टे प्रभुः । कामानां काम्यानाम् । एतस्मान्मनुष्यलोकात् ॥ २० ॥

भेदव्यपदेशाच्चान्यः ॥ २१ ( ७ ) इति ।

' य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद ' [ बृ० ३ । ७ । ९ ] इति श्रुत्यन्तरे वेदितुरादित्याद्भेदेनान्तरत्वादिनेशस्य व्यपदेशादत्रापि तस्यैव प्रत्यभिज्ञानात् । तथा च परमश्रुतस्याऽपहतपाप्मत्वादेरनन्यथासिद्धत्वेन प्रयोजनवत्त्वेन तात्पर्यवत्त्वेन च बलवत्त्वात्तदनुसारेणोपासनार्थतया नीरूपस्यापीशस्य रूपादि नेयम् । न च कर्मानधिकारेऽपि संसारिणश्चाऽऽदित्यस्य निष्पाप्मत्वं न चेश्वरे प्रसिद्धं तद्गौणतया नेतुमर्हमिति भावः ॥ २१ ॥ (७)

ननु ' अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ' [ छा० १ । ९ । १ ] ' स एष परोवरीयानुद्गीथः स एषोऽनन्तः ' [ छा० १ । ९ । २ ] इत्यत्र भूताकाशमुद्गीथे संपाद्योपास्यत्वेन प्रतीयतां न तु सर्वभूतहेतुत्वोपलक्षितं ब्रह्म पूर्ववदनन्यथासिद्धब्रह्मनिर्णायकलिङ्गाभावाद्रूढाया आकाशश्रुतेर्बलवत्त्वात्कारणरूपगतिप्रतिपादकतयाऽऽकाशपदस्य प्राधान्यात्तदनुसारेणोत्तरेषां विशेषणानां नेयत्वादिति प्रत्याह—

आकाशस्तल्लिङ्गात् ॥ २२ ॥ ( ८ ) इति ।

आकाशः पर एव लोकमात्रकारणत्वानन्तत्वादिरूपादनन्यथासिद्धतात्पर्यवत्तल्लिङ्गात् । तथा चोक्तलिङ्गस्य प्राथम्याद्बलवति प्रश्ने स्थिताया

---

* धनश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः । + पर्वणि ।

---

१ ख. °प्माप वे न ।

लोकश्रुतेश्च बलवत्त्वेन तदनुसारेणाऽऽकाशश्रुतिर्नेया । ननु लोकश्रुतेः पृथिव्येवार्थः । तथा हि—' त्रयो होद्गीथे कुशला बभूवुः ' [ छा० १ । ८ । १ ] इत्यादिना शालावत्यदाल्भ्यप्रवाहणानां संवादमुपन्यस्य शालावत्यो दाल्भ्यमुवाच ' का साम्नो गतिः स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति प्राणस्य काऽन्नमन्नस्य काऽऽपोऽपां काऽसौ लोकोऽमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेत्स्वर्गसंस्तावं हि सामेति ' [ छा० १ । ८ । ४ । ५ । ] ' शालावत्य उवाचाप्रतिष्ठितं ते दाल्भ्य सामेति ' [ छा० १ । ८ । ६ ] ' दाल्भ्य उवाचामुष्य लोकस्य का गतिः शालावत्य उवाचायं लोक इति, दाल्भ्योऽस्य लोकस्य का गतिः प्रवाहण आकाश इति होवाच ' [ छा० १ । ८ । ७ ] इति श्रुतिसंदर्भे—उद्गीथ उद्गीथविद्यायाम् । गतिः कारणम् । स्वर इति गानरूपस्य साम्नः स्वरसाध्यत्वात् । प्राण इति प्राणव्यापारेण स्वरोत्पत्तेः । असाविति स्वर्ग इत्यर्थः । स्वर्गस्थेन्द्राधिष्ठितमेघवृष्टिकरणात् । अतिनयेदतिक्रामेत्तत्कारणं विचारयेदिति यावत् । संस्तावं समासम् । साम सामकारणपरम्पराविचारः । अप्रतिष्ठितं कारणसाकाङ्क्षम् । साम सामप्रयोजकम् । अयं पृथिवीरूपः । प्रतिष्ठां पृथिवीम् । तदेवमर्थके वाक्येऽस्य लोकस्येति दाल्भ्योक्तपदयोः पृथिव्यर्थकत्वेन शालावत्योक्तयोरपि तयोः पृथिव्यर्थकत्वमिति चेन्न । शालावत्योक्तावस्येत्यस्य कार्यमात्रपरत्वात् । शालावत्यस्य हि एवमाशयः—पृथिव्याः कार्यत्वेनान्तवत्त्वं त्वयोक्तं तर्हि कार्यान्तरमपि मयोच्यमानं त्वया दूषणीयं सर्वकार्याणां कारणं तु न मया ज्ञायते तदनुपासकस्य कर्माधिकारिणो मम तज्ज्ञानेऽनुपयोगादतस्त्वया प्रवाहणेनैव तद्वाच्यमिति । एवं स्वर्गसंस्तावं हि सामेति दाल्भ्योक्तावप्ययमाशयः—स्वर्गाधिकर्मसात्कृतामस्माकं स्वर्गस्य देहान्यतद्भोक्तृस्वरूपस्य च ज्ञानमेवोपयुज्यते न तु ब्रह्मपर्यन्तकारणपरम्पराज्ञानमिति । तस्माच्छालावत्यीयमस्येति पदं कार्यमात्रपरमन्यथा तस्य पृथिवीमात्रपरतया भूताकाशस्य परिग्रहे प्रवाहणप्रोक्तेऽप्यन्तवत्त्वदोषेऽन्तवद्वै किल ते शालावत्य सामेति तदुक्तदूषणासंभवादिति भावः ॥ २२ ॥ ( ८ )

' कतमा सा देवता ' [ छा० १ । ११ ४ ] इति पृष्टश्चाक्रयणः ' प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसं-

१ क. °मधर्ष° । २ क. °र्मोपासनाद्° । ३ क. °मण° ।

विशन्ति प्राणमेवाभ्युज्जिहते सैषा देवता' (छा०१।११।५) इत्यत्र यद्यपि पूर्ववदेव पूर्वपक्षः सिद्धान्तश्च प्राथम्येन बलवति प्रश्ने स्थितस्य देवताशब्दस्य चेतनबोधकस्यानुसारेणेतरस्य नेयत्वाद्भूतमात्रसंवेशनोद्गमनलिङ्गस्य ब्रह्मण्येव संभवाच्च तथाऽपि 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति' [ श० प० ब्रा० १० । ३ । ३ । ६ ] इत्यादिश्रुतेः सुपुप्ते वागादीन्द्रियोपलक्षितभूतमात्रलयाद्भवबोधिकायाः संवादेन सर्वाणि ह वेति वाक्यं वायुविकारे प्राणे भूतलयोद्भवबोधकमित्यधिकं प्रत्याह—

अत एव प्राणः ॥ २३ ॥ (९) इति ।

यदेत्यादिवाक्यस्येन्द्रियमात्रलयादिबोधकत्वेन संवर्गविद्यास्थत्वेन च न तेनोद्गीथस्थस्य प्रकृतवाक्यस्य संवाद इति प्राणो ब्रह्मैवेति भावः । सा देवतेति । प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता कतमा सेति वाक्येन मां प्रस्तोतारं प्रति त्वया पृष्टा देवतेत्यर्थः । प्रस्तावमन्वायत्ता यस्या दृष्ट्या प्रस्तावरूपा साममक्तिरुपास्या सेत्यर्थः ॥ २३ ॥ ( ९ )

'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' [छा० ३ । १३ । ७ ] इत्यत्र ज्योतिस्तेज एव 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' ( छा० ३ । १२ । ६ ) इति ब्रह्मबोधकवाक्यसंनिधानापेक्षया ज्योतिःश्रुतेर्दीप्यत इति लिङ्गस्य च बलवत्त्वात्पूर्वब्रह्मनिर्णयासंभवादिति प्रत्याह—

ज्योतिश्चरणाभिधानात् ॥ २४ ॥ इति ।

ज्योतिर्ब्रह्मैव । पूर्वस्मिन्गायत्रीवाक्ये 'तावानस्य महिमा ततो ज्यायाꣳश्च पूरुषः' ( छा० ३ । १२ । ६ ) इत्यादि पादोऽस्येत्याद्यन्तेन तस्य चतुष्पात्स्वरूपचरणाभिधानात् । दिवि द्युलोके द्योतनात्मके चिद्रूपे वा । अस्य ब्रह्मणोऽमृतं स्वरूपं तच्चापरिच्छिन्नत्वान्निपात् । आधेयत्वादिनिर्देशः कल्पितभेदात् । परिच्छिन्नत्वाद्भूतानि तस्यैकः पाद इति तदर्थः ॥ २४ ॥

छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनि-

गदात्तथाहि * दर्शयति ॥ २५ ॥ इति ।

उक्तवाक्ये गायत्रीछन्दस एवाभिधानान्न ब्रह्मार्थ इति चेन्न । तथा गायत्र्यनुगते ब्रह्मणि चेतोर्पणस्योपासनस्य कथनात् । अन्यथा 'गायत्री वा इद९ सर्वम्' ( छा० ३ । १२ । १ ) इति च्छन्दसः सार्वात्म्यनिर्देशानुपपत्तेः । हि यस्मात् 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' [ऐत० आ० ३।२।३। १२] इत्यन्यत्रापि विकारानुगते ब्रह्मण्युपासनं दृश्यते ॥ २५ ॥

भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥ इति ।

'गायत्री वा इद९ सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इद९ सर्वं भूतं गायति च त्रायते च । या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्या९ हीद९ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते । या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते । यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते । सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम् । तावानस्य महिमा' ( छा० अ० ३ ख० १२ मं० १–६ ) इत्यादि गायत्रीवाक्यम् । तस्यार्थः—वागर्थत्वाद्वागात्मकानि सर्वाणि भूतानि गायत्री सर्वभूताश्रयत्वात्पृथिव्यपि गायत्री शरीरहृदययोर्भूतात्मकप्राणाश्रयत्वाद्गायत्रीत्वम् । तथा च भूतपृथिवीशरीरहृदयरूपपादचतुष्टययुता वाक्प्राणभूतात्मकादिचतुष्टयरूपषट्प्रकारा गायत्रीति चतुर्भागात्मिका षट्प्रकारात्मिकेति यावत् । सोऽयमर्थो गायत्रीशब्दस्य गायत्र्यनुगतब्रह्मार्थकत्वे सत्येवोपपद्यते छन्दसो भूताद्यात्मकत्वासंभवात् ॥ २६ ॥

उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्य-
विरोधात् ॥ २७ ॥ (१०) इति ।

परो दिव इति पञ्चम्यन्तस्यामृतं दिवीति सप्तम्यन्तस्य चोपदेशयोर्भेदात्पूर्ववाक्यार्थस्य नोत्तरत्र प्रत्यभिज्ञेति चेन्न । वृक्षाग्रे श्येनोऽस्ति स

* आदर्शपुस्तके तु दर्शनमिति पाठः ।

१ क. 'श्चमा' । २ क. 'पे हृदय ।

वृक्षाग्रात्पर इत्यादाविव विभक्तिभेदस्य प्रकृत्यभेदे वाक्यार्थाभेदकत्वात् । पूर्वत्र द्योतनात्मकस्य ब्रह्मस्वरूपस्य परत्र च द्युलोकस्य दिविशब्देनोक्तिसंभवे भिन्नयोरर्थयोराधारत्वापादानत्वोक्तेर्वोभयस्मिन्वाक्य उक्तस्य विरोधस्याभावात् । ज्योतिष्टोमप्रकृतत्वानुसारेण ज्योतिषा यजेतेति ज्योतिष्पदं यथा नीयते लोकप्रसिद्ध्यपेक्षया वाक्यप्रसिद्धेर्बलवत्त्वात्तथा प्रक्रान्तचतुष्पाद्ब्रह्मपरामर्शियच्छब्दानुसारेण ज्योतिःश्रुत्यादि नीयते । छन्दोभिधाऽपि गायत्रीश्रुत्यपेक्षया । चरमस्य भूतादिपादेति लिङ्गं तावानस्येति मन्त्रलिङ्गं यद्वै तद्ब्रह्मेदं वाव तदितिवाक्यरूपनानाप्रमाणकृतप्रत्ययसंवादस्य तात्पर्यनिमित्तत्वाद्बलवत्त्वमिति ब्रह्मैवार्थ इति भावः ॥ २७ ॥ ( १० )

ननु चेद्विभक्तेर्गुणत्वान्न वाक्यार्थभेदकत्वं तदा पदार्थस्य प्राधान्यात्तथात्वमस्तु । न चैवं क्वाप्येकवाक्यता न स्यादिति वाच्यम् । गुणप्रधानानेकपदार्थेष्वेव तत्संभवात् । तथा च ' प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम । युद्धेन च पौरुषेण च तं हेन्द्र उवाच । प्रतर्दन *वरं ददानीति तं होवाच प्रतर्दनः । त्वमेव मे वृणीष्व । यं त्वं मनुष्याय हिततमं मन्यस इति तं हेन्द्र उवाच । न वै वरोऽवरस्मै वृणीते त्वमेव वृणीष्वेत्यवरो वै तर्हि किल म इति होवाच प्रतर्दनोऽथो खल्विन्द्रः सत्यादेव नेयाय । सत्यं हीन्द्रः स होवाच । मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये । यन्मां विजानीयात् । त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छं बह्वीः संधा अतिक्रम्य दिवि प्रह्लादादीयानतृणमहमन्तरिक्षे पौलोमान्पृथिव्यां कालखाञ्जान् । तस्य मे तत्र न लोम च मा मीयते । स यो मां विजानीयान्न हैव तस्य केन च कर्मणा लोको मीयते । न भ्रूणहत्यया न मातृवधेन न पितृवधेन न स्तेयेन नास्य पापं चन चक्रुषो मुखान्नीलं वेतीति । स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व । आयुः प्राणः प्राणो वा आयुः । प्राण एवामृतम् । यावद्ध्यस्मिञ्शरीरे प्राणो वसति तावदायुः । प्राणेन ह्येवामुष्मिँल्लोकेऽमृतत्वमाप्नोति ' [ कौषी० ३ । १—२ ]

* उपनिषत्समुच्चये तु °रं ते द° इति पाठः ।

१ ख. °या च च° । २ उपनिषत्स० व °इति । पाठः । ३ उपनिषत्स० इति पाठः ।
४ उपनिषत्स० °याप्यास्य के °इति पाठः ।

इत्यादि । 'प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' [कौषी० ३।३] इत्यादि । 'न वाचं विजिज्ञासीत वक्तारं विद्यान्न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत रूपविद्यं विद्यान्न शब्दं विजिज्ञासीत श्रोतारं विद्यात्' [कौषी० ३।८] इत्यादि । 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः । न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् । एष ह्येवैनं साधु कर्म कारयति तं यमन्वानुनेषति । एष उ एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सत एष लोकपाल एष लोकाधिपतिरेष सर्वेशः स म आत्मेति विद्यात्स म आत्मेति विद्यात्' [कौषी०३।८] इति कौषीतकिब्राह्मणोपनिषद्वाक्ये त्रिशीर्षाणं त्रिशीर्षं त्वाष्ट्रं त्वष्टुः पुत्रं ब्राह्मणं विश्वरूपनामानम् । रुद्रयोऽधीयमानघ्रस्तद्विशेपलक्षणया प्रकृते रुद्रब्रह्ममीमांसा तया विचार्यमाणं तत्त्वमस्यादिवाक्यं तदेव मुखं येषां न त्वनात्मवाक्यं तादृशा[ये न भवन्ति ता]न् । अथ चाऽरुत्परकीयमर्म गुप्तपरकीयदोष इति यावत्तन्मुखांस्तदुक्तिशीलानविवेकिन इति यावत् । सालावृकेभ्य आरण्यश्वभ्यः । संधा देशकालसंधीन् । प्रह्लादादयोऽसुरविशेषाः । लोम च लोमापि मा मीयते न नाशितम् । लोको मत्स्वरूपप्राप्तिर्मीयते निराक्रियते । स्तेयेन स्वर्णस्तेयेन । भ्रूणहत्ययाऽध्ययनार्थधीपूर्वकं वेदस्यार्थानुष्ठातृब्राह्मणहत्यया । कृशः पापानुष्ठानप्रयुक्तचिन्तया कार्श्यम् । नीलं वैवर्ण्यं मुखान्न वेति नोदेतीत्याद्यर्थके प्राणादिपदार्थानां वाक्यार्थभेदकत्वात्प्राणजीवब्रह्मणां त्रयाणामुपास्यत्वमस्तु त्रयाणां लिङ्गाविशेषाच्चेति प्रत्याह—

प्राणस्तथाऽनुगमात् ॥ २८ ॥ इति ।

प्राणशब्दितं ब्रह्मैव प्रतिपाद्यं प्रकृतोपाख्याने वरं वृणीष्वेतीन्द्रेणोक्तेन दैवोदासिनोक्तात् 'त्वमेव नो ब्रूहि यं त्वं मनुष्याय हिततमं मन्यसे' इत्यादिवाक्याद्ब्रह्मण एवानुगमात्प्रतिपाद्यत्वावगमात् ॥ २८ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्म-
संबन्धभूमा ह्यस्मिन् ॥ २९ ॥ इति ।

वक्तुरिन्द्रस्य मामित्यनेनोपदेशात्स एवोपास्य इति चेन्नेत्यनुषङ्गः । अध्यात्मसंबन्धः केवलात्मोपलक्षणीभूतः सर्वयाग्यकर्तृत्वादिसंबन्धस्तस्य भूमा बाहुल्यमस्मिन्प्रकरणे हि यस्मात् ॥ २९ ॥

१ उानिषत्समुच्चये०। यमेभ्यो लोकेभ्य उन्निनीषत ए°। २ उपनिषत्समुच्चये०। यमधो निनीषते। ए°।

शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३० ॥ इति ।

तत्त्वमसीत्यादिशास्त्रसंबन्धितत्त्वदृष्ट्या मामित्युपदेशः । यथा 'अहं मनुरभवम्' [ बृ० १ । ४ । १० ] इति वामदेवोक्तम् ॥ ३० ॥

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्या-
दाश्रितत्वादिह तद्योगात् ॥३१॥ (११) इति ।

वक्तारं विद्यादिति जीवस्य प्राण एवेत्यादिप्राणस्य लिङ्गान्न ब्रह्मैवार्थ इति चेन्न । उपासनत्रयेऽविशेषेण प्रतिपाद्ये वाक्यभेदापत्तेरिह प्रकृत एकवाक्यतासाधकन्यायस्याऽऽश्रितत्वादेकवाक्यताया योगसंभवात् । तथा च प्रकृत्यर्थाभेदे सति विभक्त्यर्थभेदेऽप्येकप्रकृत्यर्थविशिष्टविभक्त्यर्थद्वयविशेषितस्यैकस्यैवार्थस्य पूर्वापरवाक्ययोरुक्तिसंभव इत्येव प्रकृतेः प्राधान्यं न तु संभवति वाक्यार्थभेदे तद्विघातकत्वमन्याय्यत्वात् । संभवति चैकार्थ्ये 'प्राणोऽस्मि' इत्यादेः 'स एष प्राण एव प्रज्ञात्माऽऽनन्दः' इत्यादि 'साधु कर्म कारयति तं यमन्वानुनेषति । एष उ एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सते । एष लोकपालः'' [ कौषी० ३।८ ] इत्यन्तस्य च विमर्शात् । अन्वानुनेषत्यूर्ध्वं निनीषति नुनुत्सतेऽधो निनीषति । कार्यधर्माणां कारणेऽपि संभवः कार्यसामान्ये कारणस्यानुगमात्, कारणधर्माणां च सकलकार्यनिष्ठानां नैकैकस्मिन्कार्ये संभवः कार्यस्य व्यावृत्तत्वादिति कारणस्य ब्रह्मण एव लिङ्गानि बलवन्ति । न च प्राणप्रज्ञात्मनोरप्रतिपाद्यत्वे तौ प्रकृत्य 'सह ह्येतावस्मिञ्शरीरे वसतः' [ कौषी० ३।३ ] इति भेदोक्तिर्व्यर्थेति वाच्यम् । स एष इत्यादिना ब्रह्मत्वं वक्तुं प्रज्ञात्मशब्दितबुद्ध्या प्राणेन चोपाधिनाऽऽत्मा प्रत्यगात्मोपलक्षणादिति भावः । उक्तन्यायभेदान्नात एव प्राण इत्यनेन गतार्थत्वम् ॥ ३१ ॥''

इति प्रथमाध्याये प्रथमः पादः ॥ १ ॥

---

अथ प्रथमाध्याये द्वितीयः पादः ॥

---

स्पष्टब्रह्मलिङ्गानि वाक्यानि प्रथमे विचार्य तदन्यानि द्वितीयतृतीययोर्विचारयति । तयोस्तु सविशेषनिर्विशेषविषयतया रूढियोगविशेषविष-

१ उपनिषत्समुच्चये—यमेभ्यो लोकेभ्य उन्निनीषत् ए[२] । २ उपनिषत्समुच्चये—यमधो निनीषते । ए[२] ।

यतयां च भेदः। द्वितीयतृतीययोः प्रथमानन्तर्यं तु प्रथमसिद्धजगत्कारणत्वसामर्थ्यसिद्धसर्वात्मकत्वादिलिङ्गेन तत्तदर्थनिर्णायकत्वात् । '' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ' ( छा० ३।१४।१ ) ' मनोमयः प्राणशरीरो भारूपः सत्यः ' ( छा० ३।१४।२ ) इत्यादौ सर्वं कार्यं ब्रह्म यतस्तज्जलान् । जायत इति जः, लीयत इति लः, अनिति जीवति सत्तास्फूर्त्यादिरूपजीवनवत्, जश्च लश्चांश्च जलांस्तस्य ब्रह्मणो जलान्ब्रह्मसंबन्ध्युत्पत्त्यादिविशिष्टमिति यावत्। इति सर्वं कार्यं ब्रह्मात्मकं यतोऽतः शान्तः सन्नुपासीत। क्रतुमयः, ध्यानमयः। यथाक्रतुर्यादृशविषयध्यानकस्तथा तादृशविषयविशिष्टः[1]। इतोऽस्माल्लोकात्। प्रेत्य लोकान्तरं गत्वा। क्रतुं ध्यानम्। ध्यातव्यमाह—मनोमय इत्यादिना। क्रतुं कुर्वीतेति विहितं ध्यानमनूद्य तदङ्गतया शमगुणविधायके शान्त इत्यत्र सर्वमित्यादेर्हेतुमन्निगदार्थवादतया शान्तिस्तुतिपरत्वेन तादृशध्यानविषयतया ब्रह्मासमर्पकत्वाद्ध्यानस्योत्पत्तिशिष्टमनोमयाद्यवरुद्धत्वाच्च मनोमयत्वादिना जीव एवोपास्य इति प्रत्याह—

सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥ इति।

ब्रह्मैव मनोमयवाक्यार्थः। सर्वत्र वेदान्तेषु सर्वाभिलषितप्रयोजनवत्त्वेन प्रसिद्धं यद्ब्रह्म तस्यैवात्र प्रकरण उपदेशात ॥ १ ॥

विवक्षितगुणोपपत्तेश्च ॥ २ ॥ इति।

मनोमयत्वादिसामान्यवाक्यस्य विवक्षितेनाऽऽकाङ्क्षितेन ब्रह्मरूपगुणविशेषणैवोपपत्तेश्च ॥ २ ॥

ननु जीवेन विशेषेणोपपत्तिरस्तु तत्राऽऽह—

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥ इति।

शारीरो जीवोऽत्र न विशेषणं 'मनोमयत्वप्राणशरीरत्वयोरन्यतरेणैव जीवस्य ज्ञाप्यत्वसंभवेनेतरवैयर्थ्यात्तदुभयविशिष्टजीवस्य ज्ञानधारारूपोपासनायाः प्राप्तत्वेनाविधेयत्वात। न च विकारार्थमयड्वचनाज्जीवलाभो जीवस्यैव मनोविकाररागद्वेषादिमत्त्वादिति वाच्यम्। श्रवणमन-

१ ख. °सायपं क' । २ ख. 'षेशो म° ।

नादिप्रचुरमनोवृत्तिव्यङ्ग्यत्वे( त्वे )न प्राचुर्यार्थस्य ब्रह्मणि संभवा-दित्यनुपपत्तेः ॥ ३ ॥

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ इति ।

' एतमितः प्रेत्याभिसंभवितास्मि [ छा० ३।१४।४ ] इत्यनेन ब्रह्मणः कर्मत्वं प्राप्यत्वं जीवस्य कर्तृत्वं प्रापकत्वं व्यपदिश्योपास्योपासकत्व-प्रतिपादनात् ॥ ४ ॥

शब्दविशेषात् ॥ ५ ॥ इति ।

समानप्रकरणे शाखान्तरे ' यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन्पुरुषो हिरण्मयः ' [ शत० ब्रा० १० । ६ । ३ । २ ] इत्यत्रान्तरात्मन्निति सप्तम्यन्ताज्जीवशब्दात्पुरुषो हिरण्मय इति स्वप्रकाशमात्रूपबोधकशब्दस्य विशेषात् ॥ ५ ॥

स्मृतेश्च ॥ ६ ॥ इति ।

' ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ' [ भ० गी० १८ । ६१ ] इत्यादिस्मृतेरपि शारीरादन्यो मनोमयत्वादियुक्त ईश इत्यर्थः ॥ ६ ॥

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न
निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ इति ।

' एष म आत्माऽन्तर्हृदये ' [ छा० ३ । १४ । ३ ] इति सूक्ष्माय-तनत्वस्य ' अणीयान्व्रीहेर्वा यवाद्वा ' [ छा० ३ । १४ । ३ ] इत्यणी-यस्त्वस्य चोक्तेर्न ब्रह्मेति चेन्न । निचाय्यत्वादेवंरूपेण ब्रह्मण एवोपा-स्यत्वस्य प्रतिपादनात् । अनन्तमपि ब्रह्म व्योमवत् । उपाधिविलक्षया परिच्छिन्नमपीत्यर्थः ॥ ७ ॥

संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥ (१) इति ।

ब्रह्मणो हृदयादिसंबद्धत्वचित्त्वाभ्यां जीवाविशेषे तद्वत्संभोगप्राप्ति-रिति चेन्न वैशेष्यात् । ईशजीवयोर्बिम्बप्रतिबिम्बभावप्रयुक्तं भेदमभि-प्रेत्य ' तयोरेकः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यः ' [ श्वे० ४ । ६ ) इत्यनेन विशेषोक्तेः । पिप्पलं सुखं दुःखम् ॥ ८ ॥ (१)

१ ख. °त्व प्र°।

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' [ काठ० २ । २५ ] इत्यत्रौदनोपसेचनयोर्भोक्ता जीव एव पूर्वाधिकरण ईशस्य भोक्तृत्वप्रत्युक्तेः । तथा च ब्रह्मक्षत्रमृत्यूनां वशीकारकत्वेन भोक्ता हिरण्यगर्भ उपास्य इति प्रत्याह—

अत्ता चराचरग्रहणात् ॥ ९ ॥ इति ।

ब्रह्मक्षत्रपदाभ्यां चराचरस्य नश्वरमात्रस्य ग्रहणात् । ओदनशब्दस्य भोग्यनाश्यर्थयोर्भाक्तत्वाविशेषेऽप्येकवाक्यतापन्नसंनिहितमृत्यूपसेचनयोगादुपसेचनपदस्य संहारसहकार्यर्थकत्वादोदनपदसमानार्थकत्वे तेनैव वैयर्थ्यान्नाश्यस्यैवौदनशब्दार्थकत्वान्नश्वरमात्रस्य च ब्रह्मक्षत्रपदाभ्यां प्रतीतेर्नश्वरमात्रं यस्य नाश्यं स ईश एव प्रतीयत इति भावः ॥ ९ ॥

प्रकरणाच्च ॥ १० ॥ ( २ ) इति ।

'न जायते म्रियते वा' [ काठ० १।२।१८ ] इत्यादिशुद्धात्मप्रकरणात् । चकारात्क इत्था वेदेति दुर्ज्ञानत्वादेः । क इत्था वेद यत्र स इति । सोऽपि जगत्संहर्ता यत्र तिष्ठति तं शुद्धात्मानमित्थं पूर्णानन्दरूपं को वेद तद्वेत्ता दुर्लभ इति भावः ॥ १० ॥ (२)

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति' ( काठ० १।३।१ ) इत्यनेनापि पूर्ववत्संनिहितगुहाप्रविष्टपदानुसारेण बुद्ध्या सहैव जीवः कथ्यतां न तु ब्रह्म तस्यापरिच्छिन्नत्वेन गुहाप्रवेशासंभवादिति प्रत्याह—

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥ इति ।

आत्मानौ ब्रह्मजीवावेव । तयोर्जीवस्य प्रत्यक्षेणेशस्य च 'गुहाहितं गह्वरेष्ठं पुराणम्' [ काठ० १ । २ । १२ ] इत्यादिश्रुत्या गुहाप्रवेशदर्शनात् ॥ ११ ॥

विशेषणाच्च ॥ १२ ॥ (३) इति ।

'सोऽध्वनः पारमाप्नोति' [ काठ० १ । ३ । ९ ] इत्यनेन प्राप्यप्रापकत्वाभ्यां तयोर्विशेषणाद्विशेषितत्वाच्च । अध्वनो गम्यमानेहलोकपर-

---

१ ख. °योर्भोक्तृत्वावि° । २ ख. °णाच्च ।

लोकावच्छिन्नप्रपञ्चस्य पारं तद्बाधेऽप्यबाधितम् । ऋतं पिबन्तावित्यनेन फलभोक्तृतावच्छेदकत्वेन प्रतिपन्नचेतनत्वजात्या सद्वितीयत्वे लाघवान्निर्णीते तस्य प्रथमस्यानुसारेण चरमं गुहावेशादि नेयम् । पिबत्पदं च च्छत्रिन्यायेन ब्रह्मजीवोभयपरं संभवति तन्मुखत्वस्य बुद्ध्यर्थकत्वेऽप्यसंभवात् । ऋतं सत्यं कर्मफलं वेदबोधितत्वात् । पिबन्तौ भुञ्जानौ सुकृतस्य पुण्यपापयोः प्राप्ये लोके गुहां शरीरं भोक्तृतयाऽन्तर्यामितया च प्राप्तौ छायातपौ स्वरूपाप्रकाशप्रकाशयुक्तावपि परमे परार्ध्ये सर्वोत्कृष्टाद्वितीयपूर्णानन्दरूपेऽभिन्नतया प्रविष्टौ ब्रह्मविदो वदन्ति । परमपरार्ध्यपदयोर्लोकविशेषणत्वे तु वैयर्थ्यं सकललोकभोक्तृत्वस्यैव वाच्यत्वात् । गुहायां शरीर आहितमन्तर्यामितया स्थितं गह्वरे गुहान्तस्थे मनआदावपि तथा स्थितम् ॥ १२ ॥ ( ३ ) ।

'अथ हाग्नयः समूदिरे तसो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ' [छा०४।१०।४] 'स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ' [ छा० ४।१०।५ ] 'अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि' [ छा० ४ । ११ । १ ] इत्यादि । ' एषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चाऽऽचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याऽऽचार्यस्तमाचार्योऽभ्युवादोपकोशल३ इति ' [ छा० ४ । १४ । १ ] इत्यादि । ' अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ' [ छा० ४।१४।३ ] 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ' [ छा० ४ । १५ । १ । ] ' एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ' [ छा० ४ । १५ । २ ] ' एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ' [ छा० ४ । १५।३ ] ' एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ' [छा०४।१५।४] ' अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाण-

पक्षाद्यान्षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते नाऽऽवर्तन्ते' [ छा० ४।१५।५ ] इतिश्रुतिवाक्ये समूदिरे मिथः संवादं कृतवन्तो नोऽस्मान्कं सुखं खमपरिच्छिन्नम् । गतिं देवयानमार्गेण ब्रह्मलोके गमनमाजगाम विदेशात्स्वगृहम् । एवंविदि यदुपासके दृश्यते शास्त्रेण ज्ञायतेऽस्मिन् । अक्षिणि वर्त्मनी पक्ष्मौ तथा च चक्षुषो निर्लेपत्वात्तद्गतब्रह्मापि निर्लेपमिति भावः । अस्मिन्ब्रह्मण्युपासिते तदुपासकानां शव्यमौर्ध्वदेहिकं कर्म कुर्वन्तु न वा ते तदुपासका अर्चिषमर्चिरादिप्राप्य ब्रह्माभिसंभवन्ति गच्छन्ति । वामानि धनानि नयत्युपासकेभ्यः प्रापयति । अर्चिरादयोऽर्चिराद्यभिमानिदेवतास्तत्तत्रामानवो मानवप्रपञ्चानिवास्यायातीतिशेष इत्याद्यर्थकेऽक्षिणि दृश्यत इत्यनेन प्रथमावगतच्छायापुरुषानुसारेण चरमावगतममृतत्वाभयत्वादि स्तुत्यादिपरतया नीयतामन्यथा दृश्यत इति चाक्षुषविषयत्वस्य ब्रह्मण्यसंभवात् । तथा च चक्षुर्गतच्छायापुरुष एवामृतत्वादिनोपास्यतया प्रतीयतां न तु तदाकाशशब्दितं प्राणसंबन्धिचिदाकाशं हृदयस्थमुपास्यत्वेन यदग्निभिरुक्तं तदेव य एषोऽक्षिणि दृश्यत इत्यनेनानूद्यते तस्यैवाक्ष्यादिष्वन्तर्यामितया शास्त्रेण दृश्यमानत्वात्तस्यैवाऽऽत्मत्वादिकमुपास्यत्वायोच्यत इति सिद्धान्त इति प्रत्याह—

अन्तर उपपत्तेः ॥ १३ ॥ इति ।

अक्षिण्यन्तर ईश एवामृतत्वादीनां तत्रैवोपपत्तेः ॥ १३ ॥

स्थानादिव्यपदेशाच्च ॥ १४ ॥ इति ।

सर्वगतस्याप्युपास्तये स्थानरूपनामादीनां 'यः पृथिव्यां तिष्ठन्' [ बृ० ३ । ७ । ३ ] इत्यादिनोक्तेः । चकारादन्यत्र तदभावात् ॥ १४ ॥ 'दक्षिणाक्षिमुखे विश्वः' [ गौडपा० का० १ । २ ] इति श्रुतेर्दक्षिणं चक्षुर्मुखं भोगद्वारं यस्येति व्युत्पत्त्या दक्षिणाक्षिस्थानकत्वस्य जीवेऽपि व्यपदेशादाह—

सुखविशिष्टाभिधानादेव च ॥ १५ ॥ इति ।

सुखविशिष्टस्य सुखाभिन्नस्य च ब्रह्मणः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेतिवाक्योपक्रमे कथनात् । चकारादन्यत्र तदनुपपत्तेः ॥ १५ ॥

ननूपक्रमोऽपि जीवस्यैवास्तु खमित्यस्य निरवयत्वमर्थोऽस्तु तत्राऽऽह—

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥ इति ।

अर्चिषमेवाभिसंभवन्तीत्यादिना श्रुतोपनिषत्कस्य ब्रह्मविदो या गतिर्देवयानाख्या तस्या एतत्प्रकरणेऽभिधानात् । चकाराद्ब्रह्मशब्दादेरन्यत्रानुपपत्तेः ॥ १६ ॥

अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥ ( ४ ) इति ।

पुरुषान्तरसंनिधानं विनाऽक्षिणि च्छायापुरुषस्यावस्थानाभावेनोपास्यत्वासंभवाच्छ्रुतिलिङ्गाभ्यां केवलस्य च्छायात्मलिङ्गस्य बाधाद्वामनीत्वादिबहुलिङ्गकृतप्रत्ययसंवादस्य तात्पर्यनिमित्तत्वादुपक्रमस्थपुरुषपदार्थचेतने यदेतत्पदयोः पर्यवसितत्वेन प्रथमस्यैतत्पदोक्तार्थत्वेन च दृश्यत इत्यस्य भाक्तत्वाच्च । यश्चक्षुषि तिष्ठन्नित्युक्तान्तर्यामिणः प्रत्यभिज्ञायमानत्वाच्चान्तर ईश एवेति भावः । यद्यपि कं ब्रह्मेतिप्रयोजनवत्प्रकरणस्य बलवत्त्वात् ' सर्वत्र प्रसिद्धोपदेशात् ' इत्यनेन गतार्थता । न च कं ब्रह्मेत्यत्राग्नेर्य एषोऽक्षिणीत्यत्र चाऽऽचार्यस्य वक्तृत्वमतो नैकवाक्यतेति वाच्यम् । आचार्यस्तु ते गतिं वक्तेत्यनेनाग्निवाक्येनैकवाक्यतानिर्णयात् । तथाऽप्युक्तन्यायान्तरसूचनमत्र फलमिति भावः ॥ १७ ॥ ( ४ )

स्थानादिव्यपदेशादक्ष्यन्तर ईशो निर्णीतस्तत्र स्थानोपदेशकेन ' यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त[1] आत्माऽन्तर्याम्यमृतः ' [ बृ० ३। ७।३] ' योऽप्सु तिष्ठन्नद्भ्योऽन्तरः ' [ बृ० ३।७।४ ] इत्यादि । ' योऽग्नौ ' ' योऽन्तरिक्षे ' ' यो वायौ ' ' यो दिवि ' ' य आदित्ये ' ' यो दिक्षु ' ' यश्चन्द्रतारके ' ' य आकाशे ' ' यस्तमसि ' ' यस्तेजसि ' ' इत्यधिदैवतमथाधिभूतम् ' ' यः सर्वेषु भूतेषु ' ' अथाध्यात्मम् ' ' यः प्राणे ' ' यो वाचि ' ' यश्चक्षुषि ' ' यः श्रोत्रे ' ' यो मनसि ' ' यस्त्वचि ' ' यो विज्ञाने ' ' यो रेतसि ' ' अदृष्टो द्रष्टाऽश्रुतः श्रोताऽ-

---

१ नास्मिन्ना° ।

मतो मन्ताऽविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तम्' [ बृ० ३।७।५—२३ ] इत्यादिवाक्यैः पृथिवी स्वाधिष्ठातृदेवतातादात्म्यापन्नाऽपि न वेद शरीरमिति पृथिव्यादेरीशप्रयत्नेन साक्षाज्जनितक्रियाश्रयत्वादीशशरीरत्वं जीवप्रलयसाक्षाज्जनितक्रियाश्रयस्यैव जीवशरीरत्वात्। यमयति नियमयति नियमनं केवलस्य पृथिव्यादेर्देशकालविशेष एव स्थाप्यमानत्वचाल्यमानत्वादिकं देवताविशिष्टस्य प्रवर्त्यमानत्वादिकम्। त इत्युद्दालकं प्रति याज्ञवल्क्यस्य संबोधनम्। विज्ञाने जीवे। अदृष्टत्वादिकं चाक्षुषादिवृत्तिफलाविषयत्वात्। द्रष्टृत्वादिकं चाक्षुषादिवृत्त्यवच्छिन्नचित्तादात्म्यात्। मन्ता संकल्पयिता। विज्ञाता निश्चेता। अमृतः संसारधर्मराहितोऽतोऽन्यत्सर्वमार्तं विनाशि बाधेन पीडितं मिथ्येति यावदिति वेत्याद्यर्थकेन जीवकथनादशरीरत्वेनेशस्यानियन्तृत्वादिति प्रत्याह—

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ इति।

तद्वाक्यार्थ ईश एव 'यं पृथिवी न वेद' इत्यादिना पृथिव्याद्यधिष्ठातृदेवाज्ञेयत्वादिव्यपदेशात् ॥ १८ ॥ अदृष्टत्वादिगुणेभ्यः प्रधानं स्यात्तत्राऽऽह—

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥ इति।

स्मृत्यैव प्रतिपाद्यं यत्प्रधानं तदपि न तथाऽप्रधानधर्माणां द्रष्टृतादृष्टत्वादीनामदृष्टो द्रष्टेत्यादिनाऽभिलापात् ॥ १९ ॥

शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥ ( ५ ) इति।

शारीरोऽपि न तथा हि यस्मादुभये काण्वा माध्यंदिनाश्च जीवपरयोर्भेदेन 'यो विज्ञाने तिष्ठन्' [ बृ० ३।७।२२ ] 'य आत्मनि तिष्ठन्' इत्यादिना पठन्ति उपक्रमोपसंहारपर्यालोचनाज्जीवगतसाधनान्तराधीननियन्तृत्वे बुद्धिगौरवादीश्वरो न नियन्ताऽशरीरत्वाद्घटवदित्यनुमानेऽशरीरत्वस्याचेतनत्वोपाधिमत्त्वादीश्वराभिन्ने मुक्तात्मनि पक्षनिक्षिप्ते साध्याव्यापकत्वशङ्काभावाच्च नियन्तृत्वमीशस्यैवेति भावः ॥ २० ॥ ( ५ )।

---

१ क. °शेषेऽवस्था°। २ ख. °न.तन्न°।

द्रष्टृत्वादिश्रवणादन्तर्यामीश इति निर्णीतम् । 'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विदितं भवतीति' । 'तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च' 'तत्रापरा, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते' । 'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' । 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्' । 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्' । 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' [ मु० १।१।३—९ ] इति वाक्ये—अदृश्यं ज्ञानेन्द्रियाविषयम्, अग्राह्यं कर्मेन्द्रियाविषयम्, ऊर्णनाभिरिति जन्तुविशेषः, गृह्णते स्वस्मिन्विलीनं करोति, पृथिव्यामित्यपादानाधिकरणयोर्विवक्षायां सप्तमी, सतः प्राणादिना सह स्थितात्, आद्यदृष्टान्ते लयाधारत्वं द्वितीये स्थित्याधारत्वं तृतीये स्वाभाविकधर्मसहितस्योपादानत्वं ब्रह्मणो लभ्यते, तपसा कर्तव्यालोचनेन, चीयत उपचीयते, अन्नं व्याचिकीर्षा भूतानि च, प्राणो हिरण्यगर्भः, मनस्तदीयसंकल्पादि, सत्यं स्थूलभूतानि, अमृतं कर्मफलमित्याद्यर्थके तादृशाभावादक्षरं प्रधानमस्तु विसदृशस्य ब्रह्मण उपादानत्वासंभवादिति प्रत्याह—

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥ इति ।

अदृश्यत्वादिगुणक ईश एव वाक्यशेषे सर्वज्ञत्वादिधर्मोक्तेः ॥ २१ ॥

जीवप्रधानयोरपि संनिहितधर्मोक्तिस्तत्राऽऽह—

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ इति ।

'दिव्यो ह्यमूर्तः पुरुषः' [ मु० २ । १ । २ ] इति जीवाद्विशेषणेन 'अक्षरात्परतः परः' इति प्रधानाद्भेदेन च भूतयोनेर्व्यपदेशाभ्यां न जीवप्रधाने ॥ २२ ॥

---

१ मुद्रितपुस्तके—विशात ।

## रूपोपन्यासाच्च ॥ २३ ॥ (६) इति ।

रूपस्य भूतयोनिस्वरूपस्य पुरुष एवेदं विश्वमित्यादिनोपदेशात् । चकारादन्यत्र तदसंभवात् । यद्यप्यक्षरपदमक्षरात्परतः पर इत्यत्र येनाक्षरं पुरुषं वेद सत्यमित्यत्र च प्रधाने चेतने च प्रत्यभिज्ञापकं समं तथाऽप्युपादानमक्षरं प्रक्रम्य ' यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपस्तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ' [ मु० १ । १ । ९ ] इति श्रवणादुपादानमक्षरं सर्वविदिति विधानादचक्षुःश्रोत्रमित्यस्य निरिन्द्रियसर्वज्ञपरतयैव सार्थक्याच्चाक्षरं ब्रह्मैव । न चाक्षरपदप्रत्यभिज्ञानाद्भूतयोनिरेवाक्षरादित्यत्राप्युक्त इति वाच्यम् । प्रथमश्रुते यः सर्वज्ञ इत्यादौ सर्वज्ञजगदुपादानप्रत्यभिज्ञाया बलीयस्त्वात् । विसदृशस्यापि जीवादेर्देहैक्यादिविवर्तोपादनत्वदर्शनादिति भावः ॥ २३ ॥ (६)

सर्वात्मत्वादिरूपोपन्यासादक्षरं ब्रह्म निर्णीतम् । तादृशं रूपं च जाठराग्नावनेकान्तम् । ' यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ' ' तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ' [ छा० ५ । १८ । १–२ ] 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा ' [ छा० ५।१९। १ ] इत्यादि । ' अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहा ' [ छा० ५ । २० । १ ] इत्यादिवाक्ये एतं पूर्वोक्तम् , एवं द्युलोकादिसमुदयरूपम्, अभिविमानमहमितिबुद्ध्या प्रत्यगात्मरूपेण सर्वपुरुषैर्गृह्यमाणम्, आत्मानं परमात्मानं, वैश्वानरं विश्वेषां नराणां कर्मफलप्रापकं, भूतेषु चराचरेषु, आत्मसु शरीरेन्द्रियमनोबुद्धिषु, अन्नं भोगान्, अत्ति भुङ्क्ते सर्वात्मकोपासनया सार्वात्म्यप्राप्तेः । सुतेजा द्युलोकः, विश्वरूपः सूर्यः, पृथग्वर्त्माऽऽत्मा वायुः, बहुल आकाशः, संदेहो मध्यदेहः, रयिर्जलसमुदायः, बस्तिर्मूत्रं वैश्वानरोपासकस्य भोजनेऽग्निहोत्रहोमदृष्टिं विदधाति—उर एवेत्यादि । द्युलोकशिरस्कत्वादिनेश्वरोपासकेन भोजनकाल उरआदौ वेद्यादिदृष्टिर्भोजने होमदृष्टिश्च कार्येत्यर्थः । वैश्वानरपदेन जाठराग्निमुक्त्वा तदीयगार्हपत्यत्वादिना

हृदयादि प्रकल्प्य तदुपासनाप्रतिपादनात् । समाने प्रकरणे वाजसनेयके स होवाच मूर्धानमुपदिशन्नेष एवातिष्ठात्मा वैश्वानर इत्यन्तेन मूर्धाद्यवयवानां द्युलोकाद्यात्मना संपादितत्वात्तैश्च जाठरेऽपि द्युमूर्धत्वादेः संभवादारोपितेन च तेन ब्रह्मादिपदार्थबृहत्वादेः संभवादित्याक्षिप्याग्नित्रेतादेर्द्युमूर्धत्वादेश्च वाक्यशेषगतत्वेऽपि जाठरेऽग्नावारोपणीयादग्नित्रेतादेर्ब्रह्मणि साहजिकत्वेन प्रसिद्धस्य द्युमूर्धत्वादेर्बलवत्त्वेन तदनुसारेणाग्निवैश्वानरशब्दयोर्जाठरेऽग्नौ समारोपणीयब्रह्मपरत्वम् । यद्यपि ब्रह्मसंबन्धिद्युलोकादौ ब्रह्ममूर्धत्वादिकं सिद्धान्तेऽप्यारोप्यते तथाऽपि मूर्धत्वाद्यारोपविषयद्युलोकादिसंबन्धो ब्रह्मणि साहजिक इति वैश्वानरस्य मूर्धैव सुतेजा इत्यनेन ब्रह्म मूर्धादिभावेनोपास्यसुतेजआदिसंबन्धो ब्रह्मणि ज्ञापयितुं शक्यो जाठराग्नौ द्युलोकादिभावेनोपास्यमूर्धादिसंबन्धो न ज्ञापयितुं शक्योऽप्रसिद्धत्वात् । तथा च मूर्धा यः प्रसिद्धो वर्तते उपासकस्य तत्रैव जाठराग्निसंबन्ध आरोपितो ज्ञाप्नीय इति ब्रह्मैव प्रकृतार्थ इत्याशयेन समाधत्ते—

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥ इति ।

वैश्वानर ईश एव, अग्निजीवसाधारणयोर्वैश्वानरात्मशब्दयोर्द्युमूर्धत्वादिबोधकशब्दयोगरूपाद्विशेषात् ॥ २४ ॥

स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥ इति ।

'द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे' इत्यादिना स्मर्यमाणरूपमीशस्य वाक्यार्थत्वेऽनुमानं लिङ्गं स्यात् ॥२५॥

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥ इति ।

अग्न्यादिशब्दादिनाऽग्नित्रेतादिकल्पनात् 'पुरुषेऽन्तः प्रतिष्ठितं वेद' इत्यादिना पुरुषस्यान्तरवस्थानश्रवणाच्च नेश इति चेन्न । जाठर ईशदृष्टेस्तथोपदेशाज्जाठरे द्युमूर्धत्वादेरसंभवात् । चो हेतौ यस्मादेनं वैश्वानरं वाजसनेयिनः पुरुषमप्यधीयते 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' [ शत० प० ब्रा० १०।६।१ । ११ ] इत्यादिना पुरुषविधमपीति पाठे तु पुरुषविधं 'पुरुषेऽन्तः प्रतिष्ठितं वेद' इत्यादिना ॥ २६ ॥

अत एव न देवता भूतं च ॥ २७ ॥ इति ।

द्युमूर्धत्वादेरेव वैश्वानरो नाऽऽदित्यो देवता न वा भूताग्निः ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥ इति ।

जैमिनिस्तु साक्षाज्जाठरस्य प्रतीकत्वं विनैव वैश्वानरस्येशस्योपासनमविरुद्धं मन्यते ॥ २८ ॥

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥ इति ।

जैमिनीयपक्षे प्रादेशमात्रमितिश्रुतिरीश्वरस्याभिव्यक्त्यपेक्षयेत्याश्मरथ्य आह ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥ इति ।

बादरिस्तु प्रादेशमात्रहृदयस्थमनसा प्रादेशमात्रत्वेन वेश्वरस्य स्मृतिमपेक्ष्येत्याह ॥ ३० ॥

संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥ इति ।

जैमिनिस्तु संपत्तिमपेक्ष्येत्याह । हि यस्मात्समानप्रकरणे वाजसनेये प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एनान्वक्ष्यामि यथा प्रादेशमात्रमभिसंपादयिष्यामीति । स होवाच मूर्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति । एवं नासिके एष पृथग्वर्त्मात्मा मुख्यमाकाशमेष बहुलो मुख्या अप एष रयिश्चिबुकमेष वै प्रतिष्ठेतिस्तुतिः । देवा द्युलोकसूर्यादयः प्रादेशमात्ररूपेण संपन्नाः सुविदिता यथा भवन्ति वो युष्मभ्यमौपमन्यवादिभ्योऽहं कैकेयराजस्तथा वक्ष्यामि । अतिष्ठा पृथिव्यादीनतिक्रम्य तिष्ठति द्युलोकः सुतेजाः सर्वोत्कृष्टतेजाः सूर्यः प्रतिष्ठा पृथिवीत्याद्यर्थिका मूर्धादिचिबुकान्तेषु देहावयवेषु द्युप्रभृतीन्सर्वानीशावयवान्संपादयन्ती प्रादेशमात्रसंपत्तिमीशस्य दर्शयति ॥ ३१ ॥

आमनन्ति चैनमस्मिन् ॥ ३२ ॥ (७) इति ।

' अत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यः सोऽविमुक्ते प्रतिष्ठित इति । अत्रिः सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति । याज्ञवल्क्यः वरणायां च नास्यां च मध्ये प्रतिष्ठित इति । अथ का वै

---

१ स. श्रुतिः ।

वरणा का च नासीति । याज्ञवल्क्य इयं वै वरणा इयं च नासीति सर्वानिन्द्रियकृतान्दोषान्वारयति तेन वरणा सर्वानिन्द्रियकृतान्पाप्मनो नाशयति तेन नासीति । कतमच्चास्य स्थानं भवति भ्रुवोर्घ्राणस्य च यः संधिः स एष द्यौर्लोकस्य च परस्य च संधिर्भवति ' [ जाबाल० ख० २ ] इतिश्रुत्याऽविमुक्तेऽव्यक्ते जीवस्य स्वरूप इति यावत् । उपास्यः श्रवणादिना सेव्यः । प्रतिष्ठित ऐक्यापन्नः । कस्मिन्प्रतिष्ठितः किंनिष्ठेन व्यापारेण ज्ञातुं शक्यः । प्रतिष्ठितो दृष्टिस्थापनाधीनमनःस्थैर्याधीनध्यानादिना ज्ञातुं शक्यः । वारयतीति । तादृशध्यानादिद्वारेति शेषः । भ्रूनासयोरप्यवान्तरविशेषं पृच्छति कतमदिति । प्राणस्य नासिक्यस्य द्यौर्लोकस्य शिरसः परस्य चिबुकरूपमूलोकस्येत्याद्यर्थिकयैनमीशं मूर्धाचिबुकान्तराले दृष्टिस्थापनाधीनमनःस्थैर्याधीनध्यानादिविषयतारूपेण प्रतिष्ठितत्वेन जाबाला आमनन्ति । कल्पतरौ तु श्रुतावविमुक्तः प्रतिष्ठित इति जीवः स्थित इत्यर्थो वरणानास्योः पापनाशकत्वमीशनियम्यजीवस्थानत्वेनेशस्थानत्वादित्युक्तं तन्न । सर्वेषामप्यवयवानां तथात्वात्तयोरेव पापनाशकत्वं तन्मध्यस्यैव स्थानत्वं कथम् । न च तत्स्थान उपास्यत्वात्तथेति वाच्यम् । अविमुक्ते जीवे परमात्मा प्रतिष्ठितस्तादात्म्यादनेन जीवेनाऽऽत्मनेतिश्रुतेरिति भामतीवाक्यात्प्रकृतवाक्यस्यैक्यपरत्वेनोपासनपरत्वाभावात् । दीपिकायां तु कथं केनोपायेन सोऽविमुक्तः कुरुक्षेत्रादिरूपत्वेन पूर्वोक्त ईश इत्युक्तम् । एवं च विश्वे नरा एव वैश्वानरो विश्वे नरा यस्येति वा, अङ्गयति प्रापयत्युपासकान्ब्रह्मलोकमितिव्युत्पत्तिभिर्वैश्वानराग्निशब्दावीशपरौ ॥ ३२ ॥ (७)

इति प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## अथ प्रथमाध्यायस्य तृतीयः पादः ।

---

' यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ ' आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ' [ मु० [ २ । २ । ५ ] इत्यत्रामृतस्य मुक्तस्य जीवावस्थायां भोगमात्रस्य प्रधानविकारानतिक्रान्तत्वान्मर्यादारूपः सेतुः प्रधानमेव ब्रह्मणश्च

---

१ क. °कदेश ।

न कथंचिदपि मर्यादात्वमपरिच्छिन्नत्वात्तथा च द्युभ्वाद्यायतनं प्रधानं प्रत्याह—

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ इति ।

ब्रह्मैव द्युभ्वाद्यायतनं स्वस्य ब्रह्मण आत्मशब्दात् ॥ १ ॥

ननु तस्य स्वभावोऽर्थस्तत्राऽऽह—

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ इति ।

' विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ' [ मु० ३ । २ । ८ ] इत्यनेन मुक्तैरुपसृप्यस्य प्राप्यस्य ब्रह्मणो व्यपदेशा- दिति ॥ २ ॥

ननु मुक्तोपसृप्यं ब्रह्मास्तु जगत्कारणं तु प्रधानमस्तु तत्राऽऽह—

नानुमानमतच्छब्दात् ॥ ३ ॥ इति ।

अनुमानमनुमेयं प्रधानं नात्र जगत्कारणतया बोध्यं तन्निर्णायकश- ब्दाभावात् ॥ ३ ॥

तर्हि जीवोऽस्तु तथा तत्राऽऽह—

प्राणभृच्च ॥ ४ ॥ इति ।

चो नञोऽतच्छब्दस्य चानुकर्षकः । *अतच्छब्दाज्जीवविरुद्धाद्यः सर्वज्ञ* इत्यादिशब्दात् ॥ ४ ॥

भेदव्यपदेशात् ॥ ५ ॥ इति ।

तमेवैकं जानथेत्यादिना भेदस्य ज्ञातृज्ञेयत्वस्य व्यपदेशाच्च ॥ ५ ॥

प्रकरणात् ॥ ६ ॥ इति ।

प्रकरणात् ' कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम् ' मु० १ । १ । ३ ] इत्यादेः ॥ ६ ॥

स्थित्यदनाभ्यां च ॥ ७ ॥ (१) इति ।

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति '[मु०३।१।१] इति श्रुतावनश्नन्नित्यनेनौदासीन्येन स्थितेः स्वाद्वत्तीत्यनेन चादनस्यो- क्त्या जीवानुवादेनाज्ञाते तदीयब्रह्मस्वरूपे तात्पर्यमिति भावः । एतद्वा- क्यस्य भूतयोनिवाक्यमध्ये पठितत्वेनादृश्यत्वादिगुणको धर्मोक्तेरित्यस्य प्रपञ्चोऽयम् । तरितव्यभवाहस्य धारकत्वे सति तरसंभावितयायद्दुःखनि-

वृत्तिरूपतरणसाधनत्वं सेतुसादृश्यं प्रकृते सेतुशब्दार्थे न तु परिच्छिन्नत्वादिघटितः । तथा च तरितव्यसंसारप्रवाहधारकत्वाज्ज्ञानविषयतया तत्संभावितयावद्दुःखनिवृत्तिरूपामृतत्वसाधनत्वाच्चामृतस्यैष सेतुरिति ब्रह्मैवोक्तम् । जानथेत्यनेन प्रकृतं ज्ञानमेव वा तथात्वेनोक्तमतो मर्यादार्थत्वासंभवादात्मशब्दस्य ब्रह्मण्येव मुख्यत्वाच्च तदेवार्थ इति भावः ॥ ७ ॥ ( १ )

आत्मशब्दाद्ब्रह्म निर्णीतम् । स च 'भूमा त्वेव विजिज्ञासितव्यः' [ छा० ७ । २३ । १ ] इत्यादौ प्राणेऽनेकान्तः । 'अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳहोवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच । ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि । सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य परं पारं तारयत्विति तꣳहोवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् । नाम वा ऋग्वेदो यजुर्वेदः' [ छा० ७।१ । १—४ ] इत्यादि 'नामोपास्स्वेति'। 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति' [ छा० ७ । १ । ५ ] । 'वाग्वाव नाम्नो भूयसी' इत्यादि 'यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति' [छा०७।१४।२]। 'प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणः प्राणाय ददाति प्राणो ह पिता प्राणो माता' [छा० ७ । १५ । १] इत्यादि 'प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुः' [ छा० ७ १५ । ४ ] इत्यादि 'एष तु वा अतिवदति यः सत्येनातिवदति' [ छा० ७ । १६ । १ ] 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा

---

१ ख. °र्थत्वप्र° । २ म. °णेऽश्यानीतित्यनेका° ।

न कथंचिदपि मर्यादात्वमपरिच्छिन्नत्वात्तथा च द्युभ्वाद्यायतनं प्रधानं प्रत्याह—

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥ इति ।

ब्रह्मैव द्युभ्वाद्यायतनं स्वस्य ब्रह्मण आत्मशब्दात् ॥ १ ॥

ननु तस्य स्वभावोऽर्थस्तत्राऽऽह—

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥ इति ।

'विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' [ मु० ३ । २ । ८ ] इत्यनेन मुक्तैरुपसृप्यस्य प्राप्यस्य ब्रह्मणो व्यपदेशादिति ॥ २ ॥

ननु मुक्तोपसृप्यं ब्रह्मास्तु जगत्कारणं तु प्रधानमस्तु तत्राऽऽह—

नानुमानमतच्छब्दात् ॥ ३ ॥ इति ।

अनुमानमनुमेयं प्रधानं नात्र जगत्कारणतया बोध्यं तन्निर्णायकशब्दाभावात् ॥ ३ ॥

तर्हि जीवोऽस्तु तथा तत्राऽऽह—

प्राणभृच्च ॥ ४ ॥ इति ।

चो नञोऽतच्छब्दस्य चानुकर्षकः । अतच्छब्दाज्जीवविरुद्धाद्यः सर्वज्ञ इत्यादिशब्दात् ॥ ४ ॥

भेदव्यपदेशात् ॥ ५ ॥ इति ।

तमेवैकं जानथेत्यादिना भेदस्य ज्ञातृज्ञेयत्वस्य व्यपदेशाच्च ॥ ५ ॥

प्रकरणात् ॥ ६ ॥ इति ।

प्रकरणात् 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातम्' [ मु० १ । १ । ३ ] इत्यादेः ॥ ६ ॥

स्थित्यदनाभ्यां च ॥ ७ ॥ (१) इति ।

'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' [मु० ३।१।१] इति श्रुतावनश्नन्नित्यनेनौदासीन्येन स्थितेः स्वाद्वत्तीत्यनेन चादनस्योक्त्या जीवानुवादेनाज्ञाते तदीयब्रह्मस्वरूपे तात्पर्यमिति भावः । एतद्वाक्यस्य भूतयोनिवाक्यमध्ये पठितत्वेनादृश्यत्वादिगुणको धर्मोक्तेरित्यस्य प्रपञ्चोऽयम् । तरितव्यप्रवाहस्य धारकत्वे सति तत्संभावितयावद्दुःखनि-

वृत्तिरूपतरणसाधनत्वं सेतुसादृश्यं प्रकृते सेतुशब्दार्थे न तु परिच्छिन्नत्वादिघटितः । तथा च तरितव्यसंसारप्रवाहधारकत्वाज्ज्ञानविषयतया तत्संभावितयावद्दुःखनिवृत्तिरूपामृतत्वसाधनत्वाच्चामृतस्यैष सेतुरिति ब्रह्मैवोक्तम् । जानथेत्यनेन प्रकृतं ज्ञानमेव वा तथात्वेनोक्तमतो मर्यादार्थत्वासंभवादात्मशब्दस्य ब्रह्मण्येव मुख्यत्वाच्च तदेवार्थ इति भावः ॥ ७ ॥ ( १ )

आत्मशब्दाद्ब्रह्म निर्णीतम् । स च ' भूमा त्वेव विजिज्ञासितव्यः ' [ छा० ७ । २३ । १ ] इत्यादौ प्राणेऽनेकान्तः । ' अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तꣳहोवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच । ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि । सोऽहं भगवो मन्त्रविदेवास्मि नाऽऽत्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य परं पारं तारयत्विति तꣳ होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् । नाम वा ऋग्वेदो यजुर्वेदः ' [ छा० ७।१ । १—४ ] इत्यादि 'नामोपास्स्वेति' । ' यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ' [ छा० ७ । १ । ५ ] । 'वाग्वाव नाम्नो भूयसी ' इत्यादि ' यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति' [छा०७।१४।२]। 'प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणः प्राणाय ददाति प्राणो ह पिता प्राणो माता' [छा० ७ । १५ । १] इत्यादि ' प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुः ' [ छा० ७ १५ । ४ ] इत्यादि ' एष तु वा अतिवदति यः सत्येनातिवदति ' [ छा० ७ । १६ । १ ] ' यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा

---

१ ख. °र्थत्वसं° । २ ख. °णेऽनेकाशमीतिस्यनेका° ।

त्वेव विजिज्ञासितव्य इति [ छा० ७ । २३ । १ ] 'यत्र नान्यत्पश्यति' [ छा० ७ । २४ । १ ] इत्यादिश्रुतौ वेदानां वेदं ज्ञापकं व्याकरणं पित्र्यं श्राद्धकल्पं राशिं गणितं दैवमुत्पातज्ञानं निधिं महाकालमतादिनिधिशास्त्रं वाकोवाक्यं तर्कशास्त्रमेकायनं निरुक्तं ब्रह्मविद्यां शिक्षाकल्पच्छन्दश्चितीर्भूतविद्यां भूततन्त्रं क्षत्रविद्यां धनुर्वेदं नक्षत्रविद्यां ज्योतिषं सर्पविद्यां गारुडं देवजनविद्यां गन्धर्वोक्तयुक्तिनृत्यगीतवाद्यशिल्पादिज्ञानान्यध्येमि स्मरामि । मन्त्रविदिति । मन्त्रो मन्त्रणीयः संकेतविषयो वाच्य इति यावत् । तस्य ज्ञाताऽहं न त्ववाच्यशुद्धात्मवित् । अतिवादी प्राणोऽहमित्युत्कृष्टवादी सत्येन ज्ञायमानेनातिवदति सत्यमहमिति वदतीत्यर्थिकायां प्रश्नोत्तरभावेन पूर्वं वागादिकथनात्प्राणकथनानन्तरं च प्रश्नोत्तराभावात्पित्राद्यात्मना प्राणस्य सार्वात्म्यनिर्देशानन्तरमेव भूम्नि वाक्यसमापनात्तदनुसारेण 'तरति शोकमात्मवित्' 'नाम ब्रह्मेत्युपासीत' इत्याद्यात्मब्रह्मपदयोरपि प्राणपरत्वात्प्राणस्यैव भूमतया प्रतिपादनात् । तदर्थमेव च पूर्वपूर्वभूमप्रतिपादनम् । न च प्राणं भूमानमधिकृत्य यत्र नान्यत्पश्यतीत्यादि यो वै भूमा तत्सुखं तदमृतमित्यादि च कथमिति वाच्यम् । सुषुप्तं प्रकृत्य 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' [ प्र० ४ । ३ ] इति 'यत्रैष देवः स्वप्नान्न पश्यत्यथैतस्मिञ्शरीरे सुखम्' [ प्र० ४ । ६ ] इति 'प्राणो वाऽमृतम्' [ कौ० ३ । २ ] इति श्रुतेरिति प्राप्ते आह—

भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥ इति ।

भूमा ब्रह्मैव सुषुप्तिरूपसंप्रसादावच्छिन्नप्राणनिर्देशात् । अध्युपरि । 'एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यम्' [ छा० ७ । १६ । १ ] इत्यत्र सत्यत्वेन ब्रह्मण एव निर्देशात् ॥ ८ ॥

ननु प्राणस्यापि प्रकरणमतिवादित्वं प्रश्नोत्तराभावश्च लिङ्गे अतः प्रत्ययसंवादात्स एव स्यात्तत्राऽऽह—

धर्मोपपत्तेश्च ॥ ९ ॥ (२) इति ।

यत्र नान्यत्पश्यतीत्यादीनां साहजिकतया ब्रह्मण्येवोपपत्तेः । तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयादित्यनेन प्राणदर्शिनोऽतिवा-

१ क. °दिति नि°

दित्वं स्वीकृत्य ' एष तु वा अतिवदति यः सत्येनातिवदति ' इत्यनेन ब्रह्मरूपसत्यविदः पूर्वस्माद्व्यवच्छेदो दर्शितः प्रकरणलिङ्गापेक्षया ब्रह्मरूपसत्यश्रुतितद्घटितवाक्ययोर्बलवत्त्वादिति सत्यतया प्रस्तुतं ब्रह्म साकाङ्क्षं भूमान्वितम् । अथवा संनिहितस्यापि प्राणप्रकरणस्य निराकाङ्क्षत्वात्तदपेक्षोपक्रमगतात्मश्रुतेर्बलीयस्त्वा आत्मरूपमहाभूमप्रतिपत्त्यर्थत्वेन प्राणान्तवाक्यैः साहजिकब्रह्मधर्मप्रतिपादकैश्च यत्र नान्यत्पश्यतीत्यादिवाक्यैरेकवाक्यतासमर्थनादन्यप्रकरणेऽपि गोदोहनादिवन्नामादिषु ब्रह्मदृष्टेर्विधानादात्मविदिरयन्तेनोपक्रान्तं ब्रह्म भूमोपसंहारेणोपादीयते । न च प्राणवेदिनः सत्यवदनगुणः सत्येनातिवदतीत्यनेन विधीयत इति वाच्यम् । एष तु वाऽतिवदतीत्युक्तमतिवादित्वं प्रति सत्यहेतुताबोधकतृतीयाश्रवणात्तृतीयायाः सहार्थत्वेऽतिवादित्वे हेत्वलाभादमुख्यत्वापत्तेश्चाब्रह्मणश्च प्राणस्य सार्वात्म्यं गौणमिति भावः ॥ ९ ॥ ( २ ) ।

अब्रह्मणः सार्वात्म्यं गौणमुक्तं तत्प्रणवेऽनेकान्तम् ' सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं चेति [ बृ० ३ । ८ । ३ ] स होवाच यदूर्ध्वमित्याद्याचक्षत इत्यन्तम् । ' आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ' [ बृ० ३ । ८ । ७ ] स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन ' [ बृ० ३ । ८ । ८ । ] ' एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः ' [ बृ० ३ । ८ । ९ । ] इत्यादि ' यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः ' [ बृ० ३ । ८ । १० ] ' तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतꣳ श्रोतृ ' [ बृ० ३ । ८ । ११ । ] इत्यादिश्रुतावाकाशोऽव्याकृतम् । ओतं वर्तमानकाले स्थितम् । प्रोतं कालान्तरेऽपि

---

१ ख. °स्त्वा° । २ क. °पेक्षोप° । ३ क. °मर्थत्वाद° । ४ ख. हेतुता° ।

स्थितम्। अक्षरं न क्षरति । अस्थूलं स्थूलान्यत्स्थूलशून्यं च विनिगमकाभावात् । अस्नेहमित्यादौ स्नेहादिशून्यमेवार्थस्तत्पुरुषे क्लीबत्वानुपपत्तेः । प्रशासन उत्पादनपालनादौ । तिष्ठत उत्पादनादिभाजौ । विधृतौ नियमितौ तत्तद्देशकालादिनियतोदयास्तमानादिभाजौ । द्यावापृथिव्योर्विधृतत्वं पतनशून्यत्वमपि गुरुत्वे सत्यपि न पततः प्रशासनं विधृतत्वानुकूलयत्नरूपा मायावृत्तिस्तया विधृतौ तत्तन्मर्यादासु स्थापिताविति वाऽर्थः । कृपणोऽल्पसुखः । ब्राह्मणः स्वप्रकाशब्रह्मसुखं प्राप्त इत्याद्यर्थिकायां सर्वात्मकाव्याकृतात्मकत्वेन प्रणवोक्तिसंभवादक्षरशब्दस्य ब्रह्मणि निरूढिमपेक्ष्य वर्णे रूढेर्बलवत्त्वाद्घटोऽयमित्यादिषु घटाद्यभिन्नत्वेनानुभूयमानघटादिशब्दाभिन्नत्वस्य 'यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक्संतृण्णा' [ छा० २ । २३ । ३ ] इतिश्रुत्या प्रणवे कथनात्प्रणवस्य सार्वात्म्यसंगतेः शङ्कुना पत्रमध्यस्थशिरया पर्णानि पर्णावयवाः संतृण्णानि संबद्धानीति तदर्थाविति प्रत्याह—

अक्षरमम्बरान्तधृतेः ॥ १० ॥ इति ।

अक्षरं ब्रह्मैवाम्बरस्याप्यन्तो नाशो यत्र तादृशस्य सर्वात्मकस्याव्याकृतस्य धृतेः ॥ १० ॥

कथममूर्तेन धृतिस्तत्राऽऽह—

सा च प्रशासनात् ॥ ११ ॥ इति ।

अस्त्वौपचारिकं प्रशासनं तत्राऽऽह—

अन्यभावव्यावृत्तेश्च ॥ १२ ॥ ( ३ ) इति ।

अदृष्टं द्रष्ट्रित्यादिनाऽक्षरत्वस्यान्यधर्माद्व्यावृत्तेः । शब्दार्थयोर्मतो ग्राहकतः फलतश्च भेदादभेदधियश्च पूर्वयोः शब्दार्थधियोर्नैरन्तर्याधीनत्वात्प्रणवेऽनुपपन्नेन प्रश्नप्रतिवचनाभ्यां विवक्षितेन जगदाधारत्वलिङ्गेनानुगृहीताया निरूढेस्तात्पर्यवत्त्वेन रूढ्यपेक्षयाऽपि बलवत्त्वाद्योगवृत्त्या ब्रह्मैवाक्षरमिति भावः ॥ १२ ॥ ( ३ ) ।

'अथ हैनं शैब्यः सत्यकामः पप्रच्छ । यो ह वै स तद्भगवन्मनुष्येषु प्रायणान्तमोंकारमभिध्यायीत । कतमं वाव स तेन लोकं जयतीति तस्मै स होवाच [ प्र० ५ । १ ] 'एतद्वै सत्यकाम परं चापरं ब्रह्म यदोंकारः । तस्माद्विद्वानेतेनैवाऽऽयतनेनैकतरमन्वेति ' [ प्र० ५ । २ ] 'स यद्येक-

मात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ' [ प्र० ५ । ३ ] ' अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकम् । स सोमलोके विभूतिमनुभूय पुनरावर्तते ' [ प्र० ५ । ४ ] ' यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः' [प्र०५।५] 'तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः । क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः । ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्कवयो वेदयन्ते । तमोंकारेणैवाऽऽयतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति ' [ प्र० ५ । ६ ७ ] इतिश्रुतौ प्रायणान्तं मरणान्तं जयति प्राप्नोति तस्मै शैब्याय स पिप्पलादः परं चेत्यादि परं शुद्धमपरं विराड्हिरण्यगर्भाख्यं ब्रह्म तादृशब्रह्मणोरुपासनायां प्रतीकमायतनेन प्रतीकेन विष्णूपासनायां शालग्रामेणैवैकतरं परापरब्रह्मणोरेकमेकमात्रमेकमात्रामात्रविशिष्टं प्रणवं यदि ब्रह्माभेदेनाभिध्यायीत । अकारसहितः प्रणवः प्राण इति ध्यायीत । अकारस्य विराड्वाचकत्वेन तत्र तदुपास्तिस्तु युक्ता । भाष्ये परं चापरं चेत्यत्रापरं प्राणाख्यं प्रथमजमितिव्याख्यानस्योभयपरत्वसंभवाद्विराट्प्राणयोः कार्यकारणभावेनैक्यात् । तेन प्रथममात्राविशिष्टप्रणवध्यानेन संवेदितोऽकारविशिष्टब्रह्मध्याताऽहं मनुष्यलोकं यास्यामीति ज्ञापितो जगत्यामकाररूपायां भुवि द्विमात्रेणाकारोकारविशिष्टं प्रणवमभिध्यायन्मनसि स्वप्नात्मके द्वितीयमात्रारूपे यजुर्मये संपद्यत उपासनयैकाग्रतयाऽऽत्मभावं याति । स मृतः सन्नन्तरिक्षस्थं सोमलोकम् । त्रिमात्रेणेत्यादौ तृतीया द्वितीयार्थे । परमं सूर्यान्तर्गतत्वेनोपलक्षितं शुद्धमुत्कृष्टोपाधित्वात्सूर्यान्तर्गतमित्युक्तं पुरुषमपि सर्वेषु पुरेषु दृश्येष्वधिष्ठानतया शयानं तत्त्वेनोपलक्षितं शुद्धसूर्ये तृतीयमात्रारूपे संपन्नस्तृतीयमात्राध्यानस्यैकाग्रतया तदात्मतां गच्छति । पादोदरः सर्पः । जीवघनात्सर्वजीवलिङ्गाभिमानिहिरण्यगर्भात् । उक्तार्थौ श्लोकौ मन्त्रौ । मात्रा अकारादयः । मृत्युमत्यो विनाशिन्योऽप्यात्मनो ध्यानक्रियासु प्रयुक्ताः । किंचाविप्रयुक्ता

---

१ क. शुद्धं सू° ।

न किंतु विशेषेणैकध्याने । बाह्याभ्यन्तरमध्यमासु जाग्रत्स्वप्नसुषुप्तिसहितात्मध्यानक्रियासु प्रयुक्तासु प्रयुक्ताश्चेत्तदा ज्ञ उपासको न कम्पते स्वस्य सर्वात्मकत्वादिति । एतेन माण्डूक्योक्तोपासनाऽप्युक्तेत्यार्थिकायां त्रिमात्रप्रणवायतनत्वेन ध्येयं ब्रह्मोक्तम् । तद्धिरण्यगर्भरूपमपरं ब्रह्मलोकरूपपरिच्छिन्नफलालिङ्गात्परशब्दनिर्दिष्टाद्ध्येयादीक्षणीयस्य परात्परशब्देनोक्तेर्भेदलाभाच्चेति प्रणवस्य बुद्धिस्थत्वात्प्रातं प्रत्याह—

ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥ (४) इति ।

फलीभूतेक्षणकर्मण एव ध्यातव्यतयोपदेशात्फलफलिनोः समानविषयकत्वे बाधकाभावाज्जीवघनात्परादित्यस्य ब्रह्मलोकपरत्वात्तस्य यावज्जीवोपाध्यभिमान्यधिष्ठितत्वात्परब्रह्मप्रकरणलिङ्गापेक्षयोपसंहारेणैकवाक्यतासमर्थत्वेन बलवता परब्रह्मप्रकरणेनानुगृहीतायाः परपुरुषश्रुतिप्रत्यभिज्ञाया बलीयस्त्वाच्च परमेव ब्रह्म ध्येयं क्रममुक्तिफलायाः परोपास्तेर्ब्रह्मलोकोऽवान्तरफलमतो न दोष इति भावः ॥ १३ ॥ ( ४ )

परमपुरुषपदप्रत्यभिज्ञानाद्ध्येयस्य परब्रह्मत्वं निर्णीतम् । तत्र दहरवाक्योपक्रमोक्तजीवस्य वाक्यशेषे ‘ स उत्तमः पुरुषः ’ [ छा० ८ । १२ । ३ ] इत्यनेनैव परपुरुषपदेनापि जीवस्योक्तिसंभवात् । तथा हि ‘ अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् ’ [ छा० ८ । १ । १ ] इत्यादौ *तस्मिन्नित्यनेनाव्यवहितमप्याकाशं न परामृश्यते तथा* सति तदन्तस्थत्वेनोक्तस्य द्वित्वादेरुपास्यत्वापत्तेः । किंतु पुण्डरीकं तथात्वे च तदन्तस्थाकाशस्योपास्यत्वसिध्द्या ‘यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः ’ [ छा० ८।१ । ३ ] इत्यनेन महिमवर्णनोपपत्तेः । ‘ य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारः ’ [ छा० ८ । १ । ६ ] इत्यात्मोपास्तेः फलवत्त्वोपगमात् । ‘ उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि' यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम् ’ [ छा० ८ । १ । ३ ] इति समाधानाधारत्वेनोक्ताकाशस्य ‘ अस्मिन्कामाः समाहिता एष आत्मा ’

---

१ ख. °त्य'द् । ए° । २ ख. °वम° । ३ क. °जारस्य° । ४ क. °या यश्चेव त° ।

[ छा० ८ । १ । ५ ] इत्युक्तस्याऽऽत्मनश्च समाधानाधारत्वेन प्रत्यभिज्ञयैक्यावगतेः । एवं च ' ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः ' इत्यनेन पुण्डरीकाकाशं प्राधान्येन प्रदर्श्य तस्मिन्यदन्तरित्यादिना तदनुवादेनोपासनं विहितम् । पश्चाच्चोक्तक्रमेणैवानूद्योपास्यस्वरूपनिर्णयाय प्राप्तं दहरत्वं प्रसिद्धाकाशसाम्येन निवर्तयति यावानित्यादिना । ब्रह्मपुरे शरीरे दहरं सूक्ष्मं तत्र यद्यप्युक्तयुक्तेरेवाऽऽकाशो न भूतम् , आकाशस्तल्लिङ्गादित्यनेनैव रूढेर्निराकृतत्वाच्च यावानित्युपमाया अभेदे विरोधाच्च तथाऽपि जीवः संभवति न तु ब्रह्मपुरस्वामित्वेन संनिहितजीवस्यैव तस्मिन्नित्यनेनाऽऽधेयत्वावगमात्तदनुसारेण च ब्रह्मात्मादिशब्दानां कथंचिज्जीवे नेयत्वादिति प्रत्याह—

दहर उत्तरेभ्यः ॥ १४ ॥ इति ।

दहराकाशो ब्रह्मैव यावान्वेत्यादिनोक्तेभ्यः ॥ १४ ॥

ननु पुरस्वामिश्रवणाज्जीवः स्यात्तत्राऽऽह—

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥ इति ।

' अहरहर्गच्छन्त्ये( न्त्य ए )तं ब्रह्मलोकम् ' [ छा० ८ । ३ । २ ] इत्यादौ गतेर्ब्रह्मलोकशब्दाच्च । तथा हि दृष्टं ' यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नः ' [ छा० ६ । ८ । १ ] इत्यत्राहरहर्गमनं तदेव च ब्रह्मात्मकं लोकमित्यभेदे लिङ्गम् ॥ १५ ॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ इति ।

' स सेतुर्विधृतिः [ छा० ८ । ४ । १ ] इत्युक्ताद्धारणात्तच्च ब्रह्मण्येवेत्याह । अस्य धारणस्य महिम्नोऽस्मिन्ब्रह्मणि ' अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते ' [बृ० ३ । ८ । ९] इत्यत्रोपलब्धेः ॥ १६ ॥

भूतप्रसिद्धमाकाशपदं कथं ब्रह्मणि तत्राऽऽह—

प्रसिद्धेश्च ॥ १७ ॥ इति ।

अस्मिन्नित्यस्यानुषङ्गेन[ण] ब्रह्मण्याकाशशब्दस्य प्रसिद्धेः 'आकाशो वै नाम नामरूपयोर्निर्वहिता [ छा० ८ । १४ । १ ] इत्यादौ । चकारादन्यस्यानुपपन्नत्वात् ॥ १७ ॥

इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥ इति ।

अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच ' [ छा० ८।३।४ ] इत्यादिना जीवस्य परामर्शाज्जीव आकाश इति चेन्न । यावान्वेत्यादिनोक्तस्य स्वजन्यमात्रमपेक्ष्यापरिच्छिन्नत्वस्य लिङ्गस्य जीवेऽसंभवात् । सुषुप्तौ ब्रह्मप्राप्त्या संप्रसीदतीति संप्रसादो जीवः प्रकृतेर्निरपेक्षतया प्रत्ययापेक्षया बलवत्त्वेन ब्रह्मशब्दानुसारेण ब्रह्मणः पुर इत्यत्र षष्ठ्या उपलब्धिहेतुत्वार्थकतया नेयत्वात् । स्वाम्यर्थकत्वेऽपि संनिध्यपेक्षयाऽहरहर्ब्रह्मगत्यादिलिङ्गानां बलवत्त्वाद्दहराकाशो ब्रह्मैवेति भावः ॥ १८ ॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥ इति ।

' य आत्माऽपहतपाप्मा ' [ छा० ८ । ७ । १ ] इत्यादि ' य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म ' [ छा० ८।७।४ ] इत्याद्यौ ' एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच' [ छा० ८।९।३ ] ' य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म ' [ छा० ८ । १० । १ ] इत्यादेः प्राजापत्यादुत्तरवाक्याद्दहरो जीव एव । तत्र जीवस्यैवापहतपाप्मत्वादेरक्ष्यादिशब्दितजाग्रदाद्यवस्थावत्त्वस्योपाध्यपगमादमृतत्वादेरुक्तत्वादिति चेत् । तदा तु शब्दान्नेत्यर्थः । यतोऽयमवस्थावानाविर्भूतब्रह्मतादशायामत्र वाक्ये तात्पर्येणोक्तः ॥ १९ ॥

*अन्यार्थश्च परामर्शः* ॥ २० ॥ इति ।

' य एष संप्रसादः ' [ छा० ८।३।४ ] इत्यादिना जीवपरामर्शस्तु तस्य ब्रह्मत्वज्ञापनार्थः । चकाराज्जीवग्रहणेऽधिगतार्थत्वमपुरुषार्थत्वं च ॥ २० ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ (५) इति ।

दहर इत्यनेनाल्पस्य सूक्ष्मस्य श्रुतेर्न ब्रह्मेति चेत्तदा नेत्यनुपज्जते । यतस्तच्चोद्यसमाधानं निचाय्यत्वादित्यनेनोक्तम् । अवस्थावत्त्वलिङ्गापेक्षयाऽमृतमभयमेतद्ब्रह्मेतिश्रुतिलिङ्गयोर्बलत्वाज्जीवज्ञानस्य पुरुषार्थत्वाद्ब्रह्मैवार्थ इति भावः ॥ २१ ॥ ( ५ )

---

१ ख. °वस्य ज्ञाता पु° ।

पूर्वत्र 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' इत्यत्रैतत्पदेन प्रकृतं जीवमाकृष्य तस्य ब्रह्मत्वप्रतिपादनेन प्रजापतिवाक्यस्य ब्रह्मपरत्वाद्दहरो ब्रह्मोक्तस्तत्र। 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' [ मु० २।२।१० कौ० ५।१५ ] इत्यत्राप्रकृतस्यापि तेजसस्तत्पदेन बोधनात्। प्रकृतब्रह्मणोऽतेजस्त्वेन सूर्यादितेजोभिभावकत्वानुभास्यत्वलिङ्गाभ्यां तत्प्रकरणबाधात्। तत्रेत्यत्र विषयसप्तमीस्वीकारे भाति भान्तीत्यत्र भासयत इत्यादिणिजर्थाध्याहारापत्तेः। सति सप्तम्या तस्मिन्विलक्षणे तेजसि भाति सति सूर्यादि न भात्यभिभूतत्वात्। अत एव तमर्थं सूर्यादिप्रकृतरूपं सर्वमनुभाति। अभिभूततया भातीत्यर्थः। न च तादृशतेजोऽप्रसिद्धमिति वाच्यम्। प्रकृतश्रुत्यन्यथाऽनुपपत्त्या तत्कल्पनात्। अन्यथा ब्रह्मणि तेजोभिभावकत्वानुभास्यत्वयोर्द्वयोः कल्पनागौरवात्। तस्यापत्यमित्यादौ तच्छ्रुतेः प्रकृतापरामर्शित्वाच्च। तस्मात्तेजोविशेषोऽत्रोपास्यत इति प्रत्याह—

अनुकृतेस्तस्य च ॥ २२ ॥ इति।

ब्रह्मैव तत्पदार्थः। 'तमेव भान्तमनुभाति सर्वम्' इत्यनुभास्यत्वरूपादनुकरणात्तस्येति पदयुक्तात्। 'तस्य भासा सर्वमिदं विभाति' इति वाक्यात् ॥ २२ ॥

अपि च स्मर्यते ॥ २३ ॥ (६) इति।

अपि स्मर्यते—'न तद्भासयते सूर्यः' इत्यादिना। तथा च सूर्यादीनां भासमानत्वेन न भातीत्यादिवर्तमानत्वविरोधान्न भास्यतीति भविष्यत्वं कल्प्यम्। तथा च श्रुतहान्यश्रुतकल्पनाभ्यां वरं भातीत्यादौ णिजर्थस्यैव कल्पनाऽस्तु। न वा सा घट आलोको भातीत्यादौ भासकत्व एव भातेर्निरूढत्वात्। सर्वपदस्य सूर्यादिमात्रपरत्वेऽपीदंपदवैयर्थ्यापत्त्या द्वाभ्यां भास्यमात्रोक्तेः। तत्पदस्य प्रकृतपरत्वासंभव एवाप्रकृतपरत्वात्तत्पदश्रुतिभिरेव लिङ्गयोर्बाधात्स्वान्यसर्वभासकत्वस्य स्वान्याभास्यत्वस्य च प्रकृतवाक्यार्थत्वेनाभिभावकत्वादेरतत्त्वाच्च ब्रह्मैव तत्पदार्थ इति भावः ॥ २३ ॥ ( ६ )

न तद्भासयत इत्यादिस्मृत्या न तत्रेत्यत्र सप्तम्या विषयार्थत्वं चेत्तदा 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमः' [ म० भा० ३ । २९७ ।

१७ ] इति जीवपरस्मृत्या 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति'। [ का० २ । ४ । १२ ] 'ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तत्' [ का० २ । ४ । १३ ] इत्यत्रापि जीव उपास्योऽस्तु। अङ्गुष्ठमात्रत्वस्य ब्रह्मण्यसतः प्राथम्यात्तदनुसारेण भूतादीशानत्वस्याऽऽपेक्षिकतया नेयत्वादिति प्रत्याह—

शब्दादेव प्रमितः ॥ २४ ॥ इति।

ईशानादिशब्दादेवाङ्गुष्ठमात्रो ब्रह्म प्रमितः। अद्य वर्तमानकाले श्वो भविष्यत्काले 'अन्यत्र धर्मात्' [ का० १ । २ । २४ ] इत्यादिना पृष्टं तदेतत् ॥ २४ ॥

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ ( ७ ) इति।

शास्त्रस्य मनुष्याधिकारत्वान्मनुष्यहृदयस्य चाङ्गुष्ठपरिमितत्वात्तत्र जीवरूपेणाधिष्ठानापेक्षया ब्रह्मणोऽङ्गुष्ठमात्रत्वोक्तिः 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' [ का० १ । २ । १४ ] इति जडाजडप्रपञ्चविलक्षणस्य पृष्टत्वात्तस्यैव प्रथमत्वात्तदनुसारेण प्रकृतस्य नेयत्वादङ्गुष्ठमात्रानुवादेनेशानत्वादिप्रतिपादनात्प्रतिपाद्यधर्मस्य तात्पर्यवत्त्वेनानुवाद्यधर्मबाधकत्वाद्ब्रह्मैवार्थ इति भावः ॥ २५ ॥ ( ७ )

अङ्गुष्ठमात्रश्रुतिरिव वेदान्तविचारोऽपि मनुष्यमेवापेक्षतां तदधिकारत्वाच्छास्त्रस्येति प्रत्याह—

तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥ इति।

मनुष्योपरि देवादीनामपि विचारेऽधिकारं बादरायणो मन्यते। 'जगृभ्णा ते दक्षिणमिन्द्रहस्तं वज्रहस्तः पुरंदरः' इत्यादिमन्त्रार्थवादानां प्रमाणान्तरप्राप्तिविरोधहीनार्थप्रमितिद्वारेव विध्यपेक्षितस्तुत्यादिसमर्पकत्वात्प्रमितानामर्थित्वादिसंभवात्। जगृभ्णा गृह्णामि ॥ २६ ॥

विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥ इति।

नानादेशेषु युगपत्क्रियमाणे कर्मणि कारकान्तरवद्देवानामसांनिध्याद्विरोध इति चेन्न। एकस्यापि युगपदनेकैः प्रतिपत्तेरुद्देशस्य दर्शनात्।

---

१ क. 'नामधिता'। २ क. ताद्धे'। ३ ख. 'त्वात्वि'।

कति देवा इत्यादिश्रुत्या देवानां नानादेहस्य प्रतिपत्तेः प्राप्तेर्दर्शनाद्वा ॥ २७ ॥

शब्द इति चेन्नातः प्रभवात्प्रत्यक्षा-
नुमानाभ्याम् ॥ २८ ॥ इति ।

प्रलय इन्द्रादेस्तच्छब्दस्य चात्यन्तोच्छेदेन नित्यसंबन्धाभावाद्युगपदनेकावृत्तित्वेनेन्द्रत्वादेरजातित्वाच्च कुतो नित्यसंबन्धमूलकमिन्द्रादिश्रुतीनां प्रामाण्यं कुतस्तरां चापौरुषेयत्वमिति शब्दे विरोध इति चेन्न । 'एत इति वै प्रजापतिर्देवानसृजत ' असृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरः पवित्रमिति ग्रहानाशव इति स्तोत्राणि विश्वानीति शस्त्राण्यभिसौभगा इति प्रजा इत्यादिस्तुत्या 'एते असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्यभिसौभगा ' इत्यस्या ऋचः पदैर्देवादीन्स्मृत्वा ससर्ज ब्रह्मा । तत्रैतच्छब्दः संनिहितवाचित्वेन करणाधिष्ठातृतया संनिहितदेवानां बोधकः । असृग्रुधिरं तत्प्रधाने देहे रमन्ते मनुष्या इन्दुमण्डलस्थाः पितरः पवित्रं सोमं पीत्वाऽन्तस्तिरस्कुर्वन्ति । ग्रहा ऋचाऽश्नुवन्ति स्वाधीनी कुर्वन्ति । ऋचाऽङ्गानुरूपाणि स्तोत्राणि स्तोत्रोत्तरं प्रयोगं विशन्ति । शस्त्राणि गानहीनमन्त्रसाध्यानि गुणकथनानि । अभि सर्वतः सौभगं प्रजानामित्याद्यर्थिकया ।

' अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ।
आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः ' ॥

इति स्मृतिरूपेणानुमानेन च प्रमितावन्तरप्रलयानन्तराद्वैदिकशब्दाधीनजगत्प्रभवात् । यद्वा शब्दानुविद्धप्रतीत्या घटादिसृष्टिः कुलालादौ प्रत्यक्षा तद्वच्च प्रजापतिसृष्टिरित्यनुमानम् । ताभ्यां शब्दादर्थप्रभवः प्रलयानन्तरं तस्मात् । तथाचावान्तरप्रलये शब्दसत्त्वात्तेषां जातौ शक्तत्वादयुगपद्वृत्तित्वेऽपि जातित्वे बाधकाभावाच्च शब्दार्थयोर्नित्यसंबन्धानुपपत्तिः ॥ २८ ॥

अत एव च नित्यत्वम् ॥ २९ ॥ इति ।

अतः प्रलयस्थवेदशब्दाज्जगदुत्पत्तेरेव वेदस्य नित्यत्वमनुच्छिन्नव्यवहारकत्वम् । तेन चास्मर्यमाणकर्तृकत्वविशिष्टेनापौरुषेयत्वम् । ततश्च न

१ ख. ऋचोऽश्नु° ।

तस्याप्रामाण्यशङ्का । न च शब्दज्ञानस्य हेतुत्वेऽपि शब्दस्याहेतुत्वात्कथं वेदस्य नित्यत्वमिति वाच्यम् । शब्दस्य हि वेदान्तमते सर्गादावुत्पत्तिः सर्गान्त एव नाशः । तथा च तत्तद्वर्णकालोत्तरकालवृत्तितत्तद्वर्णत्वं नाऽऽनुपूर्वीविघटकमनभिव्यक्तिकालेऽपि घटादिपदानुपूर्वीसत्त्वापत्तेः । किंतु घकारव्यक्त्यभिव्यक्त्युत्तराभिव्यक्तिविषयटकारव्यक्ति( क्ते )रिव घकारादिव्यक्तेरेकत्वेन घत्वटत्वादिजात्यस्वीकारात । तथा च पदस्वरूपस्यैवार्थोपस्थित्यादौ कारणत्वात्प्राकृतप्रलय एव तन्नाशादवान्तरप्रलये सृष्टिहेत्वर्थज्ञानकारणपदसत्त्वमावश्यकमिति भावः ॥ २९ ॥

तथाऽपि प्राकृतप्रलये शब्दार्थयोः सव्यवहारयोरत्यन्तोच्छेदात्कथं तयोर्नित्यसंबन्धः कथं वा वेदस्यापौरुषेयत्वं तत्राऽऽह—

समाननामरूपत्वाच्चाऽऽवृत्तावप्यविरोधो
दर्शनात्स्मृतेश्च ॥ ३० ॥ ( ८ ) इति ।

निरन्वयनाशस्यानङ्गीकारात्कारणे लीनानां सूक्ष्मभावेन सतां नामरूपाणां पूर्वसृष्टिमपेक्ष्य साम्येनाभिव्यक्तिमात्रस्यैव सृष्टित्वाच्छब्दार्थयोर्नित्य एव संबन्धः । वेदस्य च सजातीयोच्चारणसापेक्षोच्चारणकत्वरूपापौरुषेयत्व आवृत्तौ प्राकृतप्रलयेऽपि न विरोधः । सृष्टिसाम्यं च 'धाता यथापूर्वमकल्पयत्' [ ऋ० सं० १० । १९० । ३ ] इतिश्रुतिदर्शनात् ।

'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः ।
शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥

इत्यादिस्मृतेः । चकारात्सत्कार्यवादयुक्तेः । शर्वर्यन्ते प्रलयान्ते ॥ ३० ॥ (८)

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥ इति ।

'असौ वा आदित्यो देवमधु' [छा० ३।१।१] इत्यादावादित्यादिषु मध्वाद्यध्यासेनोपासनास्वादित्यादेरादित्यत्वा[१]दिरूपस्य तत्फलस्य सिद्धत्वेनानधिकारात्तत्साम्येन ब्रह्मविद्यायामपि देवतानामनधिकारं जैमिनिराह ॥ ३१ ॥

१ ध. 'दि' वर्गोत्पत्ति' ।

आदित्यादिरूपान्तराप्तिरेव फलमस्तु तत्राऽऽह—

ज्योतिषि भावात्* ॥३२॥ इति ।

तेजोमण्डलाद्यावेशाऽऽदित्यादिभावात्तस्य चाचेतनत्वान्नाधिकारित्वम् ॥ ३२ ॥

जैमिनिं निरस्यन्नुपसंहरति—

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥ ( ९ ) इति ।

मध्वादिषु तथाऽस्तु ब्रह्मविद्यायां तु देवानामधिकारस्य भावं बादरायणोऽहं मन्ये हि यस्मात् । 'यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' [ बृ० १ । ४ । १० ] 'ते होचुर्हन्त तमात्मानमन्विच्छामः' [ छा० ८ । ७ । २ ] इत्यादिश्रुतिस्तद्बोधिकाऽस्ति । ते देवासुराः । अतः 'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह' इत्यादिस्मृतेश्चाऽऽदित्यादीनां चेतनत्वाज्जन्मान्तराधीतवेदान्तस्मारकत्वाच्च सगुणोपासनया देवीभूतस्य ब्रह्मविचारार्थमयं प्रसङ्गः ॥ ३३ ॥ ( ९ ) ।

अत्रैवर्णिकस्य देवस्य 'यो यो देवानाम्' [ बृ० १ । ४ । १० ] इत्यादिलिङ्गादिव शूद्रस्यापि 'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' [ छा० ४ । २ । ३ ] इत्यादिलिङ्गाद्ब्रह्मविद्याधिकारोऽस्तु 'स्वाध्यायोऽध्येतव्यः' इत्यस्यानारभ्याधीतत्वेन न तत्र क्रत्वपेक्षितार्थज्ञानायाध्ययननियमः । तथा च स्वाध्यायेनाधीयीतेति विपरिणामेनाध्ययनस्यादृष्टार्थत्वात्तत्र च शूद्रस्यापि कर्तृत्वसंभवादध्ययनेन लिपिदृष्टिमात्रेण वा शूद्रस्यापि वेदार्थावगतिसंभवान्निषादस्थपतेरपीष्ट्यधिकारदर्शनाच्चेति प्रत्याह—

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥ इति ।

जानश्रुतिः शयानो हंसरूपेण खचारिभिर्ऋषिभिः कृतार्थां स्वप्रशंसायां प्रस्तुतायां तदन्यतमेनोक्तं कम्वर एनमित्यादिस्वानादरवाक्यं श्रुतवान् । तेनास्य शुक्शोको जाता । तया शुचा रैक्वं प्रत्याद्रवणाद्गमनादस्य शूद्रत्वं न तु जात्या । 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी

---

* आनन्दाश्रममुद्रितपुस्तके 'भावाचेति' पाठः ।

---

१ क. °था प्र° । २ क. °नादागम° ।

बहुपाक्य आस स ह सर्वत * एवाऽऽवसथान्मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति ' [ छा० ४ । १ । १ ] ' अथ ह हꣳसा निशायामतिपेतुस्तद्ध + हꣳसो हꣳसमभ्युवाद हो होऽयि मल्लाक्ष मल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ' [ छा० ४ । १ । २ ] तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ' [ छा०४।१।३ ] ' यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ' [ छा० ४ । १ । ४ ] ' तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह संजिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथꣳ सयुग्वा रैक्व इति ' [ छा० ४ । १ । ५ ] ' यथा कृताय ' इत्यादि ' मयैतदुक्तः ' [ छा० ४ । १ । ६ ] इत्यन्तं ' स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्छेति ' [ छा० ४ । १ । ७ ] सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहꣳ ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ' [ छा० ४ । १ । ८ ] ' तदु ह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं × तमादाय प्रतिचक्रमे तꣳ हाभ्युवाद ' [ छा० ४ । २ । १ ] ' रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति ' [ छा० ४ । २ । २ ] इति ' ' तमु ह परः प्रत्युवाचाह हारे त्वा शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः ' इत्यादि प्रतिचक्रमे ' [ छा०४ । २ । ३ ] तस्मै स होवाच ' [ छा० ४ । २ । ५ ] ' वायुर्वाव संवर्गः ' [ छा० ४ । ३ । १ ] इत्यादि ' प्राणो वाव संवर्गः ' [ छा० ४ । ३ । ३ ) इत्यादि ' अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे ' [ छा०४ । ३ । ५ ] इत्यादिश्रुतेः । मापयांचक्रे कारितवान् । हंसा हंसरूपधरा देवा राज्ञो दानादितोषिता

---

* आनन्दाश्रमस्थमुद्रितपुस्तके 'त आव' इति पाठः । + आनन्दाश्रमस्थमुद्रितपुस्तके 'तद्धैव हꣳ' इति पाठः । × आनन्दाश्रमस्थमुद्रितपुस्तके 'तदादा' इति पाठः ।

अतिपेतुर्हर्म्ये शयानं राजानं प्रति दर्शनायाऽऽगताः । हो होऽयि हे मल्लाक्ष मल्लाक्ष विरोधिलक्षणयाऽमद्राक्ष दिवा द्युलोकेन समं मा प्रसाङ्क्षीर्न संस्पृश । त्वां मा तत्प्रधाक्षीः प्रदहतु । कम्वरे कमु अरे एनं जानश्रुतिमेतत्सन्तमीदृशं सयुग्वानं शकटीसहितम् । यो रैक्वः स कथमिति प्रश्ने मल्लाक्ष आह यथेत्यादि । यथा कृताय द्यूते प्रसिद्धश्च-तुरङ्कस्तस्मै विजिताय जययुक्ताय तदर्थमितरे त्रिद्येकाङ्कास्त्रयश्चेताद्वाप-रकलिनामकाः कृतनामके चतुरङ्क आये संयन्त्यन्तर्भवन्ति । चतुरङ्के कृताये त्रिव्येकानामङ्कानामन्तर्भावात् । एवं प्रजानां सर्वं साधु कर्मैनं रैक्वमेतदीयधर्मेऽन्तर्भवति । यद्विद्यं रैक्वो वेद तदन्यो यो वेद तदीयं तदपि फलसहितं रैक्वेऽन्तर्भवति । स तादृशो रैक्वो मयैतदुक्तः । स हि जानश्रुतिः संजिहानो निद्रां त्यजन्नेव । अङ्ग वत्स । अरे आत्थ रैक्वस्य दिदृक्षा मेऽस्तीति रैक्वं प्रति वदाच्छान्वेषयेत्याद्यर्थिकायास्तथा प्रत्ययात् । कथं तादृशार्थकशूद्रपदेन रैक्वेन स संबोधितस्तत्राऽऽह हि यस्मात्तव शोको मया ज्ञायत इति स्वस्य सर्वज्ञत्वं रैक्वेन सूच्यते । यद्वा शुश्रूषां पुष्कलं धनं वा विनैव धर्मविद्याग्रहणायाऽऽगतोऽसीति सूच्यते ॥ ३४ ॥

द्रव्यान्तरग्रहणाय—

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥ इति ।

संवर्गविद्याप्रकरणे जानश्रुतिरुक्तः । तत्र कापेयमभिप्रतारिणं च काक्ष-सेनिं ब्रह्मचारी विभिक्ष इत्यादिनाऽभिप्रतारी विद्याधिकार्युक्तः । स च क्षत्रियस्तदुचितकाक्षसेनिनामत्वात् । 'चित्ररथं कापेया अयाजयन्' [ ताण्ड्यब्रा० २० । १२ । ५ ] इत्यनेन क्षत्रियचित्ररथयाजकत्वेन निर्णीतकापेयवंशजं कापेयसमभिव्याहारेण चैत्ररथत्वेन निर्णीतत्वाच्च तेन चैत्ररथेन समभिव्याहारालिङ्गात्क्षत्रियत्वावगतेर्जानश्रुतिर्न शूद्रः । चकाराच्छ्रद्धादेयो बहुदायीत्यादिविशेषणाच्च ॥ ३५ ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥ इति ।

'तं होपनिन्ये' [ शत० ब्रा० ११ । ५ । ३ । १३ ] इत्यादिना विद्याधिकारिण उपनयनसंस्कारोक्तेः । 'शूद्रश्चतुर्थो वर्ण एकजातिः' [ मनु० १० । ४ ] 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' [ मनु० १० । १२ । ६ ] इत्यादिस्मृत्या शूद्रे तदभावोक्तेश्च ॥ ३६ ॥

---

१ क. °मैव रैक्वे तदी°।

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ इति ।

अध्ययनार्थं गतं जाबालं किंगोत्रोऽसीति पृष्टे न ज्ञायत इति च सत्यं यदुक्तं 'नैतदब्राह्मणो विवक्तुमर्हति' [ छा० ४ । ४ । ५ ] इत्यनेनाशूद्रत्वं निर्धार्यैव तदुपनयने गौतमस्योप त्वा नेष्य इत्यनेन प्रवृत्त्युक्तेः ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥ (१०) इति ।

'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' इत्यादेः श्रवणस्योदाहरणे जिह्वाछेदो धारणे शरीरभेद इत्यादेरध्ययनस्य 'न शूद्राय मतिं दद्यात्' इत्यादेरर्थज्ञानस्य प्रतिषेधाच्च । विदुरादेश्च भरतादिवज्जातिस्मरत्वादेव ज्ञानित्वात् । तथा चाधीतवेदादेवाभ्युदयनिश्रेयसौपयिकार्थबोधोत्पादस्वीकारात्सामर्थ्यादध्ययनस्यार्थबोधे विनियोगात्पूषानुमन्त्रणमन्त्रेऽपि समाख्यया मन्त्रविशेषस्य सामान्यसंबन्धे पूषदेवत्यकर्मणि बुद्धे सत्येव तदीयदेवताप्रकाशनद्वारा लिङ्गेन तदङ्गत्वबोधस्य सिद्धत्वेऽपि प्रकृते लिङ्गस्य विशेषनिष्ठत्वेन सामान्यसंबन्धबोधकसमाख्यादिनिरपेक्षत्वाच्छ्रुतपदार्थान्वयानुरोधेनाध्ययनस्य गुणकर्मत्वनिर्णयात्फलं यक्तुं त्वपेक्षितबोधरूपदृष्टार्थतया नियमसंभवेऽदृष्टार्थत्वाकल्पनादुपनीतत्रैवर्णिकस्यैवाध्ययनाधिकारित्वान्न शूद्रस्य वेदपूर्वकविद्याधिकार इति भावः ॥ ३८ ॥ ( १० )

'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' [ का० २ । ६ । २ ] इत्यत्र वायुरेवोपास्यः प्रतीयते तस्यैव प्राणत्वात् । पर्जन्यद्वारा वज्रत्वात्तेश्च प्राणवज्रश्रुत्युपपत्तेः । जगत्सर्वमित्यस्य प्राणकार्यापेक्षया संकोचेऽपि स्वार्थत्यागादित्यर्थम् । शब्दादेव प्रमित इत्यत्र ब्रह्मवाक्ये जीवस्यानुवादस्तस्य ब्रह्मत्वबोधाय । इह तु प्राणस्य तदसंभवात्स उपास्य इति प्रत्यवस्थानात्प्राप्तं प्रत्याह—

कम्पनात् ॥ ३९ ॥ (११) इति ।

प्राणो ब्रह्म जगत्कम्पनलिङ्गात् । 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' [ का० २ । ३ । १ ]

---

१ ख. 'इवि° । २ ह. °था फलव व° ।

इति पूर्वस्य 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' [ का० २ । ३ । ३ ] इति परस्य चाऽऽलोचनादेकवाक्यतासाङ्क्षब्रह्मप्रकरणानुगृहीतानां जगत्कम्पनाश्रयत्वभीहेतुत्वामृतत्वसाधनत्वलिङ्गानां बहूनां प्रत्ययसंवादहेतूनां तात्पर्यवत्त्वात्तदपेक्षया श्रुतेर्दुर्बलत्वेन ब्रह्मैवार्थ इति भावः । अस्य च 'अत एव प्राणः' [ ब्र० सू० १ । १ । २३ ] इत्यनेन न गतार्थता तद्विषये प्राणमेवाभिसंविशन्तीत्यत्रेव निरपेक्षकारणत्वपरैवकाराद्यभावात् । नापि 'प्राणस्तथाऽनुगमात्' [ ब्र० सू० १ । १ २८ ] इत्यनेन । तत्रैवात्रोपक्रमोपसंहारैक्यस्यास्पष्टत्वात् । प्राण एजतीतिसप्तम्यपादानाधिकरणयोर्विवक्षया । प्राणान्निःसृतं प्राणे कम्पत इत्यर्थः । उद्यतं निःक्षिप्यमाणं वज्रमिव भयं भीहेतुरमृता मुक्ताः ॥ ३९ ॥ ( ११ )

'अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' [ छां० ८।१२।३ ] न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [ छा० ८।१२।१ ] 'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते' [छा० ८।१२।२ ] 'एवमेवैष संप्रसादः' 'स उत्तमः पुरुषः' [ छा० ८। १२।३ ] इति श्रुतौ ह प्रसिद्धौ सशरीरस्य शरीराभिमानिनः प्रियाप्रिययोर्वैषयिकसुखदुःखयोरपहतिरुच्छेदो नास्ति । अशरीरं वावैव प्रियाप्रिये न स्पृशतः । अशरीरत्वे हेतुमाह—एष इत्यादि । एष पूर्वोक्तः संप्रसादः सुषुप्त्यवस्थोपलक्षितो जीवः परं ज्योतिर्देहादिविलक्षणमात्मानमुपसंपद्य साक्षात्कृत्य तत्र हेतुः—शरीरात्समुत्थाय शरीरादिभिन्नतयाऽऽत्मानं निश्चित्य । तत्र दृष्टान्तो यथैतानि वाय्वादीनि यथापूर्वमाकाशरूपेण गृहीतानि ग्रीष्मकाले सूर्यतापेन स्पष्टीभूतान्याकाशस्वरूपाद्भिन्नतया ग्रहणात्स्थूलानि भवन्ति । पश्चाद्वृष्ट्यादिक्रमेण स्वेन रूपेण निष्पद्यन्त इत्याद्यर्थिकायां ज्योतिष्पदस्य ब्रह्मपरत्वे परज्योतिष एव स्वरूपत्वादुपसंपद्येत्यस्य व्याप्तित्वाच्च समुत्थायेत्यस्यासङ्गतिः । अतोऽपहतपाप्मत्वादिप्रकरणबाधात् 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति' [ छा० ८।६।५ ] इति प्रकृतत्वाच्चाऽऽदित्य एवार्थः । एवं

---

१ क °वशाया प्रा° । २ क. °या स्युञ° ।

चार्चिराद्यपेक्षया परमूर्धभूतमादित्यमुपसंपद्य कार्यब्रह्म प्राप्य मुच्यत इति क्रममुक्त्युक्तिरिति प्रत्याह—

ज्योतिर्दर्शनात् ॥ ४० ॥ (१२) इति।

ज्योतिर्ब्रह्मैव 'स उत्तमः पुरुषः' इत्युपसंहारश्रुत्यनुग्राहकोपक्रमगतापहतपाप्माविप्रकरणदर्शनात्। तस्य चैकवाक्यतार्हत्वेन बलवत्त्वात्। अशरीरं वाव सन्तमित्यादिना प्रकृतवाक्यस्य निर्गुणविषयत्वात्सगुणविद्यायामर्चिरादिमार्गस्य पूर्वमेवोक्तत्वेन प्रकृत आदित्योक्तिवैयर्थ्यात्। स यावदित्यादिना निर्गुणविद्यास्तुत्यर्थं प्रागुक्तदहरविद्याया एव फलोक्तेः सगुणविद्यायामेवाऽऽदित्यादिघटितमार्गेण गतिर्निर्गुणविद्यायां तु तां विनैवेति स्तुतिप्रकारात्। समुत्थानस्य च शरीरपदपरोक्षधीरूपत्वात्तदुत्तरपरज्योतिरुपसंपत्तेरात्मसाक्षात्काररूपाया उत्तरं स्वेन रूपेणाभिनिष्पत्तेर्मोक्षत्वात्। सता सोम्य तदा संपन्न इत्यादौ संपदेरैक्यार्थकत्वेऽप्युपसंपदेः साक्षात्कारार्थकत्वसंभवान्मुखं व्यादाय स्वपितीत्यादाविव व्यत्ययेनाभिनिष्पद्योपसंपद्यत इत्यर्थकत्वसंभवाच्चाभिनिष्पदेरैक्यार्थकत्ववदज्ञातज्ञानार्थकत्वसंभवात्। रज्जुरियं सर्पतया ज्ञाता संप्रति स्वेन रूपेणाभिनिष्पन्नेत्यादिप्रयोगात्। वस्तुतः स्वेन रूपेणाभिनिष्पत्तिः स्वरूपाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वानधिकरणकालवृत्तिस्वरूपतादात्म्यं ब्रह्म वेद ब्रह्मैव भवतीत्यादावपि ब्रह्मभवनं तादृशं ब्रह्मज्ञानरूपत्वापातज्ञानकालेऽपि तथा प्रयोगापत्तेरप्रामाण्यज्ञानानास्कन्दितज्ञानरूपत्वेऽपि ब्रह्म वेदेत्यस्यानन्वयापत्तेर्ज्ञानाद्ब्रह्मभाव इत्यादिव्यवहारानुपपत्तेश्च ॥ ४० ॥ (१२)

ब्रह्मप्रकरणाभावात् 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' [ छा० ८।१४।१ ] इत्यादावाकाशश्रुतेर्भूतरूढ्या उपक्रमस्थत्वाद्भिन्नलिङ्गशब्दैर्निर्देशेन निर्वोढुरन्तरालस्य च भेदादाकाशशब्दं भूतं तथा चाऽऽकाशो नामरूपहेतुर्नामरूपान्तरालं ब्रह्मेति ब्रह्मज्ञानोपायतया भूताकाशोक्तिरिति प्रत्याह—

आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ (१३) इति।

अर्थो नामरूपमात्रं तदन्तरालत्वनिर्वोढृत्वामृतत्वादिलिङ्गानां बहुत्वेन प्रत्ययसंवादहेतुत्वाद्बलवतां ब्रह्मण्येव संभवतां व्यपदेशात्। संभवति वाक्यैकत्व उपायोपेयभावेन वाक्यभेदस्यायुक्तत्वाद्यत्तदोश्च सति प्रस्तुते प्रस्तोष्यमाणागोचरत्वात्प्रधानस्य यत्प्रकृतेरनुसारेण नपुंसकलिङ्गस्य

विपरिणेयत्वाद्ब्रह्मैव प्रकृतमिति भावः। पूर्वपक्ष आकाशकार्यवाच्यादेः सिद्धान्ते च नामरूपमात्रस्याधिष्ठानत्वेन ब्रह्मप्रतीतिः फलम्। निर्वोढृत्वं कर्तृत्वमन्तरालत्वमधिष्ठानत्वेनोपादानत्वम् ॥ ४१ ॥ ( १२ )

नामरूपाभ्यां भेदव्यपदेशाद्ब्रह्म निर्णीतं तत्र 'प्राज्ञेनाऽऽत्मना संपरिष्वक्तः' [ बृ० ४ । ३ । २१ । ] इत्यौपचारिकमेदमुक्त्वाऽपि बृहदारण्यके 'योऽयं विज्ञानमयः प्राणेषु' [ बृ० ४ । ३ । ७ ] इत्यादिसंदर्भे जीवस्यैव प्रतिपादनात्। आद्यन्तयोर्योऽयं विज्ञानमयः प्राणेष्विति मध्ये 'स वा एष एतस्मिन्संप्रसादे' [ बृ० ४ । ३ । १९ ] इत्यवस्थात्रयवाक्यैर्जीवनिर्णयात्तदनुसृत्य 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' [ बृ० ४ । ४ । २२ ] इत्यादिवाक्यस्थस्य महानजः सर्वस्य वशीत्यादेर्जीवपरत्वात्। प्राज्ञेनाऽऽत्मनेत्यत्रैवाऽऽत्मशब्दस्य प्राज्ञस्वरूपार्थकत्वेन जीवस्याऽऽत्मा प्राज्ञ इत्येवंरूपेण ब्रह्मपरत्वस्यासंभवात्। कर्माधिकारार्थं च जीवस्यापि प्रतिपाद्यत्वादिति प्रत्याह—

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥ इति।

विज्ञानमयादिशब्दं ब्रह्मैव 'तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नाऽऽन्तरमेवमेवायं पुरुषः प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नाऽऽन्तरम्' [ बृ० ४ । ३ । २१ ] इति सुषुप्तौ 'तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवायं [ शारीर आत्मा ] प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवति' [ बृ० ४ । ३ । ३५ । ] इत्युक्त्वाऽन्ते प्रतिपादितेन जीवात्प्राज्ञस्य भेदेन ॥ ४२ ॥

ननु भेदेऽपि कुतो ब्रह्मैवार्थस्तत्राऽऽह—

पत्यादिशब्देभ्यः ॥ ४३ ॥ ( १४ ) इति।

सर्वस्याधिपतिः सर्वस्य वशीत्यादिभ्यः। तथा च जीवेशयोर्लिङ्गाविशेषेऽपि जीवस्याधिगतत्वेन निष्फलत्वेनातात्पर्यत्वात्। स वा एष

इत्यादिना जीवानुवादेन महत्त्वाभिधानात्प्राणाद्युपाधेर्विविच्य ब्रह्मत्व-प्रतिपादनार्थमेवाऽऽदिमध्यान्तेषु जीवोक्तेर्ब्रह्मैवार्थ इति भावः । प्राज्ञे-नेश्वरेणाऽऽत्मना जीवस्याऽऽत्मना संपरिष्वक्तो लीनदेहेन्द्रियकरूपेण संबद्धः सुसमाहितं स्थलान्तरे भोक्तव्यैः पूरितमनः शकटमुत्सर्जत्पूर्व-स्थानं त्यजत्पुरुषः सुसमाहितो लोकान्तरे भोक्तव्यैर्धर्माधर्मैः पूरितः प्राज्ञेनाऽऽत्मना जीवस्याऽऽत्मनाऽन्वारूढः प्रेरित उत्सर्जन्पूर्वदेहं त्यज-न्याति लोकान्तरम् ॥ ४३ ॥ ( १४ )

इति प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

अथ प्रथमाध्यायस्य चतुर्थः पादः ।

---

केषुचिद्वाक्येषु प्रधानादिकारणत्वशङ्कानिरासार्थमयं पादः ।

' इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥
एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते ।

दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ' [का० १।३।१०—१२ इतिश्रुतौ त्वात्माऽग्र्ययाऽनुद्रिक्तरजोगुणया सूक्ष्मयाऽनुद्रिक्ततमोगु[णया] त्याद्यर्थिकायामव्यक्तं प्रधानं सांख्यस्मृतिक्रमेण महदव्यक्तपुरुषयो[रुप]योगाच्च । तथा च महत्तत्त्वपरत्वनिर्देशात्तदेव जगत्कर्तृ[इति] शङ्क्ते—

आनुमानिकमप्येकेषामिति चेन्न शरीररू-
पकविन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥ इति ।

एकेषां कठानामुक्तश्रुतावव्यक्तशब्दादानुमानिकं प्रधानमिति रथरूपकेन विन्यस्तं यच्छरीरं तस्यैवाव्यक्तशब्देन गृहीतेः । दर्शयति पूर्वस्मिन् ' आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ।

---

१ ख. °त्वादिवेया° । २ ख. °दिकर° ।

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् '[ का० १३ । ३–४ ]

' यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥
यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।

सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ' [ का० १ । ३ । ७–९ ) इतिवाक्ये शरीररूपकम् । तथा च संसाररूपस्याध्वनः पारमाप्नोतीत्युक्त्वा परं किमित्याकाङ्क्षायामुक्तेभ्य इन्द्रियादिभ्यः परमितिप्रकृतवाक्येनोक्तं परत्वं चोत्कृष्टत्वम् । तच्चेन्द्रियादितोऽर्थादेस्तद्ग्राह्यत्वरूपं पुरुषे त्वव्यक्तात्तद्गतदुःखादिशून्यत्वतदनुवृत्त्यानन्दरूपत्वादिकं परत्वमपि तदेव । तादृशपरत्वान्यथानुपपत्त्या भेदोऽपि लभ्यते । महाञ्जीवः पुरुषपदेन रथिनो निर्विशेषतयैव ग्रहणाद्धिरण्यगर्भीया बुद्धिर्वा । तत्र पूर्ववाक्योक्तानां सर्वेषामिन्द्रियादीनां पृथक्शब्दैरुपात्तत्वादव्यक्तशब्देनावशिष्टस्य शरीरस्यैव ग्रहणं स्मार्तक्रमलिङ्गापेक्षया श्रौतक्रमप्रकरणयोः संनिधानेनैकवाक्यतासमर्थेन बलवत्त्वात्सांख्यमात्रकल्पनया रूप्यसिद्धेश्च ॥ १ ॥

अथ यद्यपि स्थूलशरीरं नाव्यक्तं तथाऽपि मिथ्यात्वख्यापनाय कारणीभूतमायैकत्वविवक्षया तथोक्तम् । ' गोभिः श्रीणीत मत्सरम् ' ( ऋ० सं० ९ । ४६ । ४ ) इत्यत्र पयोभिः सोममिश्रणोक्तिवद्विकारस्यापि प्रकृतिशब्दत्वादित्याशयेनाऽऽह—

सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥ इति ।

स्थूलमपि सूक्ष्मार्थकाव्यक्तशब्देनोक्तं विकारत्वेन प्रकृतिशब्दार्हत्वात् ॥ २ ॥

ननु प्रकृतेरव्यक्तस्याङ्गीकारे प्रधानवादस्तत्राऽऽह—

तदधीनत्वादर्थवत् ॥ ३ ॥ इति ।

सिद्धान्ते तदधीनत्वादीशाधिष्ठितत्वात् । ईशस्य चापरिणामित्वात्परिणामिकारणमव्यक्तमर्थवत् । परेषां चानधिष्ठितं तन्नार्थवदित्यर्थः ॥

१ ख. °तत्सुखादि° । २ ख. °ङ्गकर्मलि° ।

ज्ञेयत्वावचनाच्च ॥ ४ ॥ इति ।

पुरुषान्यत्वेन कैवल्याय ज्ञेयमैश्वर्यायोपास्यमव्यक्तं सांख्या वदन्ति । प्रकृते च तथात्वेनावचनादन्यथोक्तेश्च 'पैयर्थ्यान्महतः परमि'त्यादिना सिद्धान्ते ब्रह्मप्रतिपत्त्यर्थं विवेकमात्रप्रतिपादनान्न प्रधानमर्थः ॥ ४ ॥

वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ इति ।

'निचाय्य तं मृत्युमुखात्प्रमुच्यते' [ का० २ । ३ । १५ ] इति श्रुतिः प्रधानस्य ज्ञेयत्वं वदतीति चेन्न । हि यस्मात्सा काष्ठा सा परा गतिरिति प्रकरणात्प्राज्ञ ईश्वर एव निचाय्यः ॥ ५ ॥

अग्निजीवाविव प्रधानमपि प्राज्ञप्रकरणेऽस्तु तत्राऽऽह—

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ इति ।

नचिकेतोनामकेन जरद्गवीर्यज्ञदक्षिणा ददतं पितरमृषिं प्रत्युक्तमीदृशो गावो दीयन्ते कुतो धनाभावश्चेदहमेव देय इति । ततः क्रुद्धः पिता तमाह मृत्यवे त्वं देय इति । स च तद्वाक्यं सत्यं कर्तुं मृत्योर्निकटं गतः । तस्मै तुष्टेन मृत्युनोक्तं वरत्रयं याच्यतां त्वया हि त्रिरात्रं मन्निकटेऽस्थीयतेति । ततस्तेन नचिकेतसा मृत्युतः पितृसौमनस्यमग्निविद्याऽऽत्मविद्या चेति त्रयं वृतम् । तत्राग्नेः 'अग्निं स्वर्ग्यमध्येपि मृत्यो प्रब्रूहि तम्' [ का० १ । १ । १३ ] इति प्रश्नः । 'लोकादिमग्निं तमुवाच तस्मै' [ का० १ । १ । १५ ] इत्युपन्यासः । आत्मविद्यायां च 'प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके' [ का० १ । १ । २० ] इत्यात्मनोऽस्तित्वांशे प्रश्नः । 'मरणं प्राप्याऽऽत्मा भवति' [ का०२।५।६ ] इत्युपन्यासः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' [ का०१।२।१४ ] इति शुद्धात्मनि प्रश्नः। 'न जायते म्रियते वा' [ का०१।२।१८ ] इत्याद्युपन्यासः । तदेवं त्रयाणामग्निजीवपरमात्मनामेव यत उपन्यासः प्रश्नश्चातः प्रधानस्यापृष्टस्य नाव्यक्तशब्देनोपन्यास इत्यर्थः । स्वर्ग्यं स्वर्गप्रापकमग्निमाहवनीयादित्रयमध्येपि जानासि लोकादिं लोककारणं विराड्रूपेण चयनावस्थायामुपास्यं प्रेते मृते मनुष्ये विचिकित्सा संदेहो जातोऽस्तीत्यादि । भवति, अस्ति । अन्यत्र, अन्यदत्यन्तभिन्नमिति यावत् । तथा च धर्मादिशून्यस्यैव शुद्धात्मनः प्रश्नो विशिष्टात्मनस्तु धर्मादिना स्वधर्मेण तादात्म्यान्न तदत्यन्तभेदः ॥ ६ ॥

महद्वच्च ॥ ७ ॥ ( १ ) इति ।

यथा 'महान्तं विभुमात्मानम्' [ का० १ । २ । २२ ] इत्यादावात्मादिशब्दस्य न सांख्याभिमतमहत्तत्वमर्थस्तथा प्रकृते प्रधानम् । चकारात्तदभिमतयोर्महदव्यक्तयोर्मानाभावः ॥ ७ ॥ ( १ )

अप्रत्यभिज्ञेयत्वात्प्रधानं नाव्यक्तशब्दमित्युक्तम् । 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः [ श्वे० ४ । ५ ] इत्यत्र त्रिगुणत्वेन प्रत्यभिज्ञायमानत्वादजाशब्दं तदस्तु न जायत इति योगाल्लोहितादिशब्दानामपि रजआदिषु गौणत्वादेकोऽन्य इत्यात्मभेदेन प्रधानवादप्रत्यभिज्ञानाच्चेति प्रत्याह—

चमसवदविशेषात् ॥ ८ ॥ इति ।

यथा 'अर्वाग्बिलश्चमसः' [ बृ० २ । २ । ३ ] इत्यस्मात्केवलाच्चमसविशेषो नावधारयितुं शक्यते शिरस इव वस्त्वन्तरस्यापि वक्तुं शक्यत्वात्तथा प्रकृतेऽप्रकृतं प्रधानमविशेषात् ॥ ८ ॥

अथ यथा तत्र तच्छिर एष ह्यर्वाग्बिलश्चमस इति वाक्यशेषाच्चमसविशेषो निर्णीतस्तथेहापि वाक्यान्तरात्तेजोबन्नान्यजाशब्दितानीत्याह—

ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ इति ।

अजा ज्योतिरुपक्रमा तेजआदिका तु स्यात् । हि यस्मादेके छन्दोगा 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति तेज उपक्रम्याधीयते । अग्नेस्त्रिवृत्कृतभूतत्रयजन्यत्वेन पृथिव्यप्तेजोरूपत्वाद्रूपत्रयवत्त्वम् ॥ ९ ॥

अन्नस्य पृथिव्या रूढियोगयोरभावात्कथं तत्राजाशब्दस्तत्राऽऽह—

कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ (२) इति ।

यथाऽजा प्रसिद्धा लोहितादिरूपा सरूपाणि प्रसुवन्त्येकेनाजेन सेव्यमानाऽन्येनोपेक्ष्यमाणा तथेयमपीति प्रकृतवाक्ये रूपकक-

ल्पनयाऽजाशब्दस्योपदेशान्न विरोधः । यथाऽऽदित्यवागादिषु मधुधे-न्वादिरूपककल्पनया तच्छब्दोपदेशः । तथा च रूढिद्वारकगौण-वृत्ते रूढिलोपकं योगमपेक्ष्य बलवत्त्वादात्मभेदस्य च तात्पर्यायो-ग्यत्वात् ‘ ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्नि-रूढाम् ’ इत्यनेन प्रकृताया मायाया अभेदेन भूतत्रयस्य ग्रहणे योगस्यापि संभवादेकवचनस्य जात्यभिप्रायकत्वादेकाभिरित्यस्य च प्रजा-मात्रे तन्मात्रमूलपरिणामिकत्वसूचनार्थत्वान्न प्रधानं प्रकृतेऽर्थ इति भावः ॥ १० ॥ ( २ )

यथा रूढ्यर्थस्यान्वयासंभवादर्थान्तरं कृतं तथा ‘ यस्मिन्पञ्च पञ्च-जना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृ-तम्’ [ बृ० ४ । ४ । १७ ] इत्यत्र पञ्चजनशब्दस्य रूढ्यर्थमनुष्यान्व-यासंभवाज्जनशब्दस्य जन्याजन्यलक्षणया पञ्चपञ्चजनशब्देन सांख्य-सिद्धपञ्चविंशतितत्त्वान्युच्यन्तामिति प्रत्याह—

न संख्योपसंग्रहादपि नानाभावाद-
तिरेकाच ॥ ११ ॥ इति ।

प्रकृते संख्याग्रहणादपि न सांख्याभिमतसिद्धिर्यथाकथंचित्तत्त्वग्र-हणे तेषामसंख्यत्वात्प्रधानत्वमहत्तत्त्वादिना ग्रहणेऽतिरेकादधिकसंख्या-पत्तेः पार्थक्येनाऽऽकाशात्मनो निर्देशात् । चकारादाश्रयाश्रयिभावानुप-पत्तेः ॥ ११ ॥

प्राणादयो वाक्यशेषात् ॥ १२ ॥ इति ।

वाक्यशेषात्तु प्राणादयः पञ्चजनशब्दाः स्यू रूढ्यर्थमनुष्यसंब-न्धात् ॥ १२ ॥

ननु ‘ प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म ’ [ बृ० ४ । ४ । १८ ] इति वाक्यशेषेऽन्नस्यान्नमिति माध्यंदिनैरेव पठनात्काण्वानां कथं पञ्चत्वनि-र्णयस्तत्राऽऽह—

ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥ ( ३ ) इति ।

एकेषां काण्वानामन्न पाठेऽसत्यपि ‘ तद्देवा ज्योतिषां ज्योतिरायु-

१ ख. °ल्पनाया त° । २ ख. °या भे° । ३ क. °इत्यादि° ।

र्ह्योपासते' इति पूर्वोक्तज्योतिषा प्राणादीनां पञ्चत्वम् । न च विभिन्नपञ्चत्वे विरोधः । एकशाखायामन्नान्नत्वस्थेवान्यशाखायां तत्स्थले ज्योतिर्ज्योतिष्ट्वस्यैवोक्त्या तदुपलक्षितब्रह्मप्रतिपादनाय पञ्चकयोरुक्तिसंभवाद्द्वारीभूतार्थभेदेऽपि मुख्यार्थाभेदेनाविरोधात् । अथ वा प्रकृते पञ्चसु ब्रह्माश्रितेषूपासनं विहितम् । तस्य ब्रह्मसाक्षात्कारार्थस्य मनसैवानुद्रष्टव्यमित्यनुवादादुपासने च शाखाभेदेन विकल्पादविरोधः । अथ यस्मिन्पुरुषे भोग्यतया पञ्च पञ्चजनास्तत्त्वानि प्रतिष्ठिता इत्यर्थः । अहंकारस्य सात्त्विकराजसतामसरूपेण त्रिविधस्योक्तत्वादाकाशस्य पृथगुक्तिरिति चेन्न । तत्त्वतानवच्छेदकरूपेण गणने मानाभावस्योक्तत्वात्पञ्चत्वविशिष्टजने निराकाङ्क्षत्वेन पञ्चपदानन्वयात् । रक्तः पटो भवतीत्यत्र तु पटस्य सजातीयान्वयानवरुद्धत्वेन रक्तान्वयार्थमाकाङ्क्षोत्थापनसंभवात्पञ्चत्वसंख्याया विशेषणत्वेन तत्राप्यन्वयासंभवात् । पञ्चजनपदे मनुष्यस्य रूढ्यर्थस्य शीघ्रोपस्थित्या बलवत्त्वेन तन्मूलकगौणवृत्तेरङ्गीकारात् ॥ १२ ॥ ( ३ )

उपासनस्य विकल्पेनानुष्ठानसंभवादविरोध उक्तः । अननुष्ठेयरूपे सिद्धे तु जगत्कारणे विकल्पासंभवान्मिथोविरुद्धार्थश्रुतिभ्यः कथं निर्णयः । तथा हि—'सदेव सोम्येदमग्र आसीत्' [ छा० ६ । २ । १ ] इति सतः । 'असदेवेदमग्र आसीत्' [ छा०६ । २ । १ ] असद्वा इदमग्र आसीत' [ तै०२ । ७ । ] इत्यसतः । 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' [ बृ० १ । ४ । ७ ] इति कर्मकर्तरि प्रत्ययात्स्वतः । 'आत्मन आकाशः' [ तै० २ । १ ] इत्याकाशादिः 'तत्तेजोऽसृजत' [ छा० ६ । २ । ३ ] इति तेजआदिका सृष्टिरतः स्वतः कार्यतश्च विशिष्य कारणस्यानिर्णयः । तथा च स्मृतिन्यायाभ्यां कारणान्तरनिर्णयोऽस्त्विति कारणे विरोधं प्रत्याह—

कारणत्वेन चाऽऽकाशादिषु यथा-
व्यपदिष्टोक्तेः ॥ १४ ॥ इति ।

द्वितीये तु कार्ये विरोधं प्रतिवक्ष्यति । चकार उक्तशङ्कां व्यवच्छिनत्ति । आकाशादिषु कारणत्वेन यथैकत्र व्यपदिष्टं तथैवान्यत्रोक्तेः ॥ १४ ॥

१ क. च. भि° । २ ख. °भेदोऽपि ।

समाकर्षात् ॥ १५ ॥ (४) इति ।

'असदेवेदमग्र आसीत्' इत्यनन्तरं 'तत्सदासीत्' [छा० ३।१९।१] इत्यमतः समाकर्षणात् । एकस्य सत्त्वासत्त्वविरोधादनभिव्यक्त्यपेक्षयैव सत्त्वोक्तेः । असद्वेत्यादावपि 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' इत्यसद्वादमपोह्यास्तित्वलक्षणं ब्रह्मान्नमयादिपरम्परया प्रत्यगात्मरूप-मुक्त्वा 'सोऽकामयत' इत्यादिना ततः सृष्टिमुक्त्वा सत्त्वमुपसंहृत्य तदेव प्रकृत्य 'असद्वा इदमग्र आसीत्ततो वै सदजायत तदात्मानꣳ स्वयमकुरुत' [तै० २।७] इत्यनेनाभिव्यक्त्यपेक्षयैवासत्त्वोक्तेः । 'व्याक्रियत' इत्यपि ब्रह्मण एव विवर्तरूपेणाभिव्यक्त्यवस्थस्य कर्म-त्वमनभिव्यक्त्यवस्थस्य कर्तृत्वमिति कर्मकर्तृप्रत्ययात् । अत एव 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' [बृ०१।४।७] इत्याद्युक्तिः । संभवति चाऽऽर्थिकं कर्तारमपेक्ष्यैव कर्मण्येव प्रत्ययः । तेजआदिसृष्टिश्रुतावप्याका-शवाय्वोरुपसंहार इत्यविरोधेनैव श्रुतिभिर्जगत्कारणनिर्णय इति भावः । श्रुतेरसत्कारणवादस्वभाववादपरशङ्कानिरासात्पादसंगतिः ॥१५॥ (४)

एकवाक्ये सच्छब्दानुसारेणासच्छब्दो नीतः । 'गार्ग्यो ह वै बाला-किरनूचानः संस्पृष्ट आस सोऽवसतोशीनरेषु स वसन्मत्स्येषु कुरु-पञ्चालेषु काशीविदेहेष्विति स हाजातशत्रुं काश्यमेत्योवाच । ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः । सहस्रं दद्म त एतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति' [कौ० २।१] 'स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास्ते' [कौ० २।३] इत्यादि । 'तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुः । एता-वन्नु बालाका ३ इ इत्येतावद्धीति होवाच बालाकिस्तं होवाचाजात-शत्रुर्मृषा वै किल मा समवादयिष्ठा ब्रह्म ते ब्रवाणीति । स होवाच यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः' [कौ० २।१९] इति श्रुतौ गार्ग्यो गर्गगोत्रोद्भवस्तन्नामा वा वै प्रसिद्धो बलाकस्यापत्यमनूचानोऽधीतसाङ्गवेदः संस्पृष्टः ख्यातोऽवसतावसन्म-त्स्यादयो देशभेदाः कुरुषु पञ्चालेषु काशीविदेहेषु काश्युपलक्षितविदेहेषु काश्यां गमनस्य वक्ष्यमाणत्वात् । ब्रह्म सर्वापेक्षयोत्कृष्टं शुद्धं ब्रह्म सहस्रं दद्म दद्मस्ते तुभ्यं वा उ वै प्रसिद्धा उ अपि जना जनक एव ब्रह्म-विद्याया दाता जनक एव परीक्षक इति बुद्ध्या धावन्ति मामज्ञात्वा ततोऽप्युत्कृष्टम् । एतावद्धीत्युपहासः । नु भो । मृषेति, आदित्यस्य-

पुरुषादीनां शुद्धब्रह्मरूपत्वाभावात् । उवाचाजातशत्रुः । एतेषामादित्यस्थपुरुषाणां कर्तोत्पादक एतद्भूतभौतिकरूपं कार्यमात्रं यस्य कर्मोत्पाद्यं करोतेरुत्पादनार्थकत्वात्स वै वेदान्तेषु प्रसिद्धो वेदितव्यः श्रवणादिना साक्षात्कर्तव्य इत्याद्यर्थिकायां भिन्नवाक्यस्थब्रह्मशब्दानुसारेण कर्मशब्दः कार्यमात्रपरतया न नेतुमनर्हः । ब्रह्म ते ब्रवाणीतिवाक्यं चाजातशत्रूक्तप्रकृतवाक्याद्भिन्नं बालाक्युक्तत्वात् । ततश्च बालाकिना पश्चाद्ब्रह्मनिर्देशात्पूर्वं ब्रह्मपदेनाप्यब्रह्मैवोपक्रान्तम् । अतो ब्रह्मणोऽनुपक्रान्तत्वात्कर्मशब्दस्य च क्रियारूढत्वाद्यस्य प्राणस्यैतत्क्रियामात्रमिति प्राणोऽर्थः 'प्राण एवैकधा भवति' इति शेषाच्च । जीवो वाऽर्थः कर्मशब्दस्यादृष्टे निरूढत्वाद्यष्टिघातेन शयनादुत्थाप्य जीवस्य बोधनात् । वेदितव्य इत्यन्तोक्तवाक्योत्तरे 'तत उ ह बालाकिः प्रतिचक्राम उपायानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेव स्याद्यत्क्षत्रियो ब्राह्मणमुपनयेत् । एहि व्येव त्वा ज्ञपयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीयतुस्तं हाजातशत्रुरामन्त्रयांचक्रे । बृहन्पाण्डरवासः सोम राजन्निति । स उ ह तूष्णीमेव शिश्ये । तत उ हैनं यष्ट्याऽऽविचिक्षेप स तत एव समुत्तस्थौ' [ कौ० २।१९ ] इति वाक्ये प्रतिचक्राम राजानं प्रति ब्रह्मविद्याग्रहणार्थमुपससाद । उपायानि त्वामुपगच्छामि । प्रतिलोमं विपरीतम् । व्येव ज्ञपयिष्यामि त्वां विज्ञापयिष्याम्येव । ब्रह्माभिपद्य गृहीत्वा बृहन्सर्वोत्तमः पाण्डरवासः पाण्डरा आपो वासो वा यस्य सोमात्मक राजन्दीप्तिमन्प्राणसंबोधनानि । शिश्ये शयनं चक्रे । तस्मात्प्राणो नाऽऽत्मा श्वासादिव्यापारवतोऽपि तस्य संबोधनेऽप्यनुत्थानादिति बालाकये ज्ञापितम् । स शयानः पुरुषो यष्टिघातजन्यदुःखं मोक्ष्यमाणोऽन्य इत्याद्यर्थके तथा प्रत्ययात् । यदि च ब्रह्म प्रब्रवाणीत्युपक्रम्याब्रह्म ब्रुवाणं बालाकिमुपहस्याजातशत्रुणा प्रकृतस्य वाक्यस्योक्तेर्वाक्यद्वयमेकमेवेति निर्णीयते तदाऽपि पूर्वाधिकरण उत्तरस्य सच्छब्दस्यानुसारेणासच्छब्द इव कर्मशब्दस्योत्तरस्यानुसारेण ब्रह्मशब्दो नेतुमर्हः । न च 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' [ कौ० २ । १९ ] इति शेषासंगतिर्हिरण्यगर्भरूपसर्वव्यष्टिकारणीभूतजीवाभिप्रायकत्वादत एव व्यष्ट्यभिधायकबालाक्यपेक्षया विशेष इति प्रत्याह—

---

१ ख. °मर्हः । २ ख. °क्षिपाते° । ३ ख. °रेण स° ।

जगद्वाचित्वात् ॥ १६ ॥ इति ।

पुरुषाणां कर्तेशः कर्मशब्दस्य कार्यस्वरूपेण जगद्बोधकत्वात् ॥१६॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तव्याख्यातम् ॥ १७ ॥ इति ।

"तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्त एवमेवैत आत्मानं भुञ्जन्ति' [ का० २ । २० ] इति 'जीवस्य प्राण एवैकधा भवति' इति प्राणस्य लिङ्गान्नोक्तोऽर्थ इति चेत्तर्हि 'उपासात्रैविध्यात्' [ ब्र० सू० १ । १ । ३१ ] इत्यनेन वाक्यभेदापत्त्या तद्व्याख्यातं तद्विरुद्धतयाऽऽख्यातं निरस्तमिति यावत् ॥ १७ ॥

अन्यार्थं तु जैमिनिः । इति ।

जीवस्याप्रतिपाद्यत्वेऽपि ब्रह्मप्रतिपत्त्यर्थमेव जीवोक्तिरिति जैमिनिर्वक्ति ।

* प्रश्नप्रतिवचनाभ्यामपि चैवमेके ॥ १८ ॥ ( ५ ) इति ।

सुप्तबोधनेन प्राणाद्यन्यं जीवं ज्ञापयित्वा सु॒प्त्यवच्छिन्नतदाधारब्रह्मविषयात् । 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट' [कौ० २।१९] इत्यादिप्रश्नात् । 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः' [ का० २ । १९ ] इत्यादिप्रतिवचनात् । 'प्राणबन्धनꣳ हि सोम्य मनः' [ छा० ६ । ८ । २ ] इत्यत्र ब्रह्मण्यपि प्राणशब्दस्य निरूढत्वाच्च । एके वाजसनेयिनोऽप्येवं 'य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्' [ बृ० २ । १ । १६ ] इति प्रश्नात् । 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते' [ बृ० २ । १ १७ ] इति प्रतिवचनात् । 'आकाशस्तल्लिङ्गात्' [ ब्र० सू० १।१।२४ ] इति न्यायेनाऽऽकाशशब्दितब्रह्मप्रतीतये जीवोक्तिं वदन्ति । तथा च कर्मशब्देन क्रियाऽदृष्टयोरन्यतरोक्तेरविनिगम्यत्वादुभयोक्त्या जीवप्राणोभयपरत्वे वाक्यभेदापाताद्ब्रह्म ते ब्रवाणि सहस्रमस्यां याचि दद्मेत्युपक्रम्य 'सर्वान्पाप्मनोऽपहत्य सर्वेषां भूतानां स्वाराज्यं

* आनन्दाश्रममुद्रितब्रह्मसूत्रभाष्यपुस्तके तु 'अप्येवमेका०' इति पाठः ।

१ क. °स्य प्र° ।

पर्येति य एवं वेद ' [ कौ० ४ । २० ] इत्युपसंहृतेर्ब्रह्मैकवाक्यतानिर्णयात्तदेवार्थ इति भावः । यस्य वैतत्कर्मेत्यस्य ब्रह्मविषयत्वेनानिश्चयान्न प्रतर्दनवाक्यनिर्णायकेन गतार्थत्वम् ॥ १८ ॥ ( ५ ) ।

ब्रह्मोपक्रमोपसंहाराभ्यां तत्परत्वं निर्णीतं तद्वत् ' आत्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम् ' [ बृ० ४ । ५ । ६ ] इत्यत्रापि प्रियसंबन्धसूचितभोक्तृताकेन जीवेनोपक्रमात् ' विज्ञातारमरे केन विजानीयात् ' इति तदुपसंहारात्तद्विज्ञानात्सर्वविज्ञानोक्तेश्च भोग्यजातस्य भोगार्थत्वाभिप्रायकत्वाज्जीव एव प्रतिपाद्यः संभवति । तत्र यद्यपि प्रियाद्युपक्रमस्यापि पूर्वम् ' अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ' [ बृ० ४ । ५ ] ' मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्तं करवाणीति ' [ बृ० ४ । ५ । २ ) ' सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृताऽऽहो नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव जीवितꣳ स्यादमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति ' [ बृ० ४।५।३ ]'सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति' [बृ० ४।५।४] इति वाक्यस्यान्यत्सांसारिकवृत्ताद्विलक्षणं वृत्तं कार्यमुपाकरिष्यन्निष्पादयिष्यन्प्रव्रजिष्यन्निति यावत् । बभूवेत्यनुपपद्यते । अन्तं धनादौ विभागं भगो भगवन्नुपकरणं धनादिकमित्याद्यर्थकस्योक्तत्वादमृतत्वसाधनोपक्रमात । ' इदं सर्वं यदयमात्मा ' इत्यादिनोपपाद्यमानस्यैकविज्ञानात्सर्वविज्ञानाभिधानस्य गौणत्वे बीजाभावाज्जीवलिङ्गानां सर्वात्मके ब्रह्मण्यपि संभवात् ' प्राणस्तथाऽनुगमात् ' [ ब्र० सू० १।१।२८ ] इत्येव निर्णायकं जीवानुवादेनाज्ञातप्रयोजनवद्ब्रह्मविधानमेव युक्तमिति ' सुषुप्त्युत्क्रान्त्योः ' [ ब्र० सू० १।३।४२ ] इत्येव वा निर्णायकं, तथाऽप्यनुवाद्यविधेययोः सामानाधिकरण्यं धर्मसत्ताको भेदाभेदावपेक्षत इत्याश्मरथ्यादिमतं निरस्य-

---

१ ख 'जनं च मद' ।

न्घटाकाशो महाकाशः सोऽयं देवदत्त इत्यादिवदौपाधिकभेदमपेक्षते न वास्तवमिति काशकृत्स्नमतानुमत्या जीवब्रह्मणोर्वास्तवमैक्यमिति समाधत्ते—

वाक्यान्वयात् ॥ १९ ॥ इति ।

प्रकृत आत्मा ब्रह्म तत्रैव 'येनाहं नामृता' [ बृ० २ । ४ । ३ ] इत्यादिपर्यवसानात् । आत्मनस्तु कामायेत्यादिषष्ठचर्थोऽशांशिभावः । तथा चापरिच्छिन्नसुखरूपात्मनोऽशरूपाय कामाय काम्यावच्छिन्नात्मस्वरूपविषयसुखाय पुत्रादिकं प्रियमिष्टमित्यर्थः ॥ १९ ॥

विज्ञानात्मनो जीवस्य लिङ्गं किमर्थं तत्राऽऽह—

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥ इति ।

अत्यन्ताभेदे घटः कलश इतिवदात्यन्तिकभेदे घटः पट इतिवत्सामानाधिकरण्योक्तिर्न स्यादतो जीवेशयोर्भेदाभेदौ । अत एव तयोः कार्यकारणभावोऽपि श्रूयते । एवं चाभेदांशमादाय विज्ञानात्मनोऽप्युपक्रमादिलिङ्गमीशप्रकरण उक्तम् । एकविज्ञानात्सर्वविज्ञानप्रतिज्ञासिद्धेः सूचनायाभेद एव तादृशप्रतिज्ञासिद्धिसंभवात् । एतावता च नाऽऽत्यन्तिकाभेदसिद्धिरित्याश्मरथ्यो वक्ति ॥ २० ॥

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥ इति ।

औडुलोमिस्तु संसारदशायां भेद एव वैलक्षण्यात्, मुक्तावस्थायामभेद एवावैलक्षण्यात् । 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' [ मु० ३ । २ । ८ ] इति श्रुत्या तथा चोदनात् । अत एव पाञ्चरात्रिकाः 'आ मुक्तेर्भेद एव स्याज्जीवस्य च परस्य च ।
मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः'

इत्येवं चोत्क्रमिष्यतो भाविमुक्त्यवच्छिन्नमभेदमादाय ब्रह्मप्रतिपत्त्यर्थमपि विज्ञानात्मनो लिङ्गं सामानाधिकरण्यं च सोऽयं देवदत्त इत्यादिवदित्यूचे ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ ( ६ ) इति ।

काशकृत्स्नस्तु 'अनेन जीवेनाऽऽत्मना [ छा० ६ । ३ । २ ] 'स एष इह प्रविष्टः' [ बृ० १ । ४ । ७ ] इति श्रुत्या ब्रह्मण एव जीव-

रूपेणावस्थितेर्वास्तवमैक्यमादायैवोपक्रमादिलिङ्गं वैलक्षण्यादित्यतात्त्विकं भेदमादाय । अत एव 'नान्योऽतोऽस्ति द्रष्टा' [ बृ० ३ । ७ । २३ ] इति 'न चात्र काचन भिदाऽस्ति' [ नृसिंहो० ता० ८ ] इत्यादिश्रुत्या भेदो निषिद्ध इत्याहुः। एतदेव मतं चरमोक्तत्वाच्छ्रुत्यनुयायित्वाच्च भेदस्य सत्यत्वे ज्ञानानाश्यत्वापत्तेश्च सूत्रकृन्मतमिति ॥ २२ ॥ ( ६ )

एकविज्ञानात्सर्वविज्ञानप्रतिज्ञया ब्रह्मपरत्वं निर्णीतम् । सा च ब्रह्मण उपादानत्व एव संगच्छते। ब्रह्म च नोपादानमाकाशादिद्रव्यस्य चेतनत्वाज्जीववत् । न पृथिव्यादेर्निर्गन्धत्वादितो भाववदिति । अत उक्तप्रतिज्ञाया गौणत्वाज्जीवपरत्वमेवोक्तवाक्यस्येति प्रत्याह—

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥ इति ।

ब्रह्म प्रकृतिरुपादानमेव । प्रतिज्ञायाः 'तमादेशमप्राक्ष्यो येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' [ छा० ६ । १ । ३ ] इत्यादेः तदुपपादकदृष्टान्तस्य च 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' [ छा० ६ । १ । ४ ] 'एवꣳ सोम्य स आदेशः' [ छा० ६ । १ । ६ ] इत्यादेरुपरोधो निमित्तकारणविषयत्वेन गौणता तदसंभवान्मुख्यत्वस्यैव संभवात् । यतो वेत्यादि स ऐक्षतेत्यादिब्रह्मरूपधर्मिग्राहकश्रुतिभिरुपादानत्वनिमित्तत्वबोधनान्मानान्तरेण तस्य निषेद्धुमशक्यत्वाच्छ्रुतिविषयातिरिक्ते एव सामान्यतो दृष्टप्रवृत्तेः । तमादेशमुपदेशैकगम्यमात्मानं त्वं श्वेतकेतुर्गुरुं प्रत्यप्राक्षः पृष्टवान् । सर्वमन्यद्दृश्यं चेतनं वा घटत्वपटत्वादिरूपेणाश्रुतमपि येन श्रुतेन निजरूपेण श्रुतं भवति यस्य श्रुतत्वेन सर्वस्य श्रुतताद्यारम्भनिष्पत्तिरिति यावत् । एवममतं मननाविषयोऽपि मतमविज्ञातं निदिध्यासनाविषयो विज्ञातमित्युद्दालकस्योक्तिः । हे सोम्य श्वेतकेतो मृत्पिण्डेनैकेन विज्ञातेन मृन्मयं तस्य मृत्पिण्डस्य विकारो मृत्पिण्डाद्विभक्तभागेभ्य उत्पाद्यमानविकारेषु भागानामिव मृत्पिण्डस्यापि परम्परयोपादानत्वात् । अन्यथा गोमयाद्वृश्चिको जायत इत्याद्यनुपपत्तेः। अथवा मृत्पिण्डः स्थूलपृथिव्येव मृन्मयं वृक्षादयः पार्थिवविकाराः । अत एव पिण्डपदमपि महामृदो लाभार्थं न व्यर्थम् । आरम्भणमारभ्यमाणं कार्यमात्रं वाचा वागेव केवलं कार्यमात्रं तथाऽनादि दृश्यमात्र-

---

१ ख. लिङ्गैर्वै । २ ख. 'हुः । तदेतन्मतं । ३ ख. °रणादि° । ४ ख. 'क्ता°।

मेपि विकारो विनाशित्वेन विकृतं नामधेयं नाममात्रं मृत्तिकेति यद्ब्रह्म-भाणं विकृतत्वेन यदज्ञायमानं तदिति यावत् । दृष्टान्तज्ञानकाले ब्रह्म न निश्चितमित्यविकृतत्वेनैव ब्रह्मोक्तं न तु ब्रह्मरूपेण । एवं च नेति-शब्दो व्यर्थो न वा वाचारम्भणपदं व्यर्थमिति ध्येयम् ॥ २३ ॥

अभिध्योपदेशाच्च ॥ २४ ॥ इति ।

'सोऽकामयत बहु स्याम्' इत्यनेन कार्याभेदेन भवनगोचराभिध्यो-पदेशात् । अभिध्या कामनारूपो मायावृत्तिविशेषः ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ २५ ॥ इति ।

'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति' [ छा० १ । ९ । १ ] इत्यादिश्रुत्या ब्रह्मण्येवोत्पत्तिप्र-लययोरुक्तेस्तस्य सर्वस्योपादान एव संभवात् ॥ २५ ॥

आत्मकृतेः । इति ।

'आत्मानं स्वयमकुरुत' [ तै० २ । ७ ] इत्यनेन कर्तृ कर्म ताभ्या-मात्मसंबन्धिकृतिश्रवणात् ।

परिणामात् ॥ २६ ॥ इति ।

'सच्च त्यच्चाभवत्' ( तै० २ । ६ । १ ) इति कार्याभेदोक्तेः । सत्पृ-थिव्यप्तेजांसि त्यद्वाय्वाकाशौ ॥ २६ ॥

योनिश्च हि गीयते ॥ २७ ॥ ( ७ ) इति ।

हि यस्मात् 'यद्भूतयोनिं परिपश्यन्ति' ( मु० १ । १ । ६ ) इत्य-नेन 'यथोर्णनाभिः सृजते गृह्णते च' ( मु० १ । १ । ७ ) इति विशे-षानुगृहीतेन ब्रह्मैव योनिरुपादानं गीयते । यद्यपीदं जन्मादिसूत्रानन्तरं वक्तुं युक्तं तथाऽपि सिद्धे वेदान्तसमन्वयेऽनुपादानत्वानुमानबाधं वक्तु-मिहोक्तम् ॥ २७ ॥ ( ७ )

'न्यग्रोधफलमत आहरतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति' ( छा० ६। १२ । १ ) 'तं होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति' ( छा०

---

१ क. °त्स्यवि° । २ क. 'रोऽपि वि° । ३ क. °मित वि° । ४ क. 'रेवेति भ° । ५ ध. 'मैतामा° ।

६ । १२ । ) ' स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा ' [ छा० ६ । १२ । ३ ] इत्यादिवाक्ये अतो वृक्षादिदमानीतमुद्दालकश्वेतकत्वोः संवादः । अण्व्यः परमाणव इव धाना बीजान्यङ्ग वत्सात्र भिन्नावस्थधानायामणिमानमणुमागं न निभालयसे भिन्नधानायां न पश्यसि । एतस्याणिम्नोऽणुमागस्तस्य कार्यो महान्यग्रोधः । एवंदृश्यमानन्यग्रोधसजातीय एवंतादृशमागात्तिष्ठत्युत्तिष्ठति । एवंभूत मागे सूक्ष्मरूपेणेदानीमपि तिष्ठतीति वा । अत एषोऽणिमा सद्ब्रह्मरूपो जगदुपादानीभूतो य उक्तः स तादृश एवेति श्रद्धत्स्व, अतिसूक्ष्मस्यापि स्थूलोपादानत्वसंभवात् । इत्याद्यर्थकेऽणिमादिपदान्यतिपरिच्छिन्ने रूढान्यप्यात्मादिपदानुसारेणानिरूढ्याऽतिसूक्ष्मपरतया नेयानि । अन्यथाऽऽत्मादिपदाना निरूढ्याऽण्वादौ नेतुमशक्यत्वादिति ' कारणत्वेन चाऽऽकाशादिषु ' [ ब्र० सू० १ । ४ । १४ ] इत्यत्र स्थितम् । तत्र यदि मृदादिदृष्टान्तानुरोधेन ब्रह्म प्रकृतिस्तत्वा प्रकृतेऽ[१] णुदृष्टान्तानुरोधेन परमाणुत्वमुपादानस्य स्यादित्यधिकमाशङ्क्य प्रधानवादोपदिष्टाशब्दत्वाद्यतिदेशेन प्रत्याह—

एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥ ( ८ )

एतेनोक्तवाक्यस्य परमाणूपादानकं जगदित्यर्थबोधकशब्दशून्यत्वरूपेणाशब्दत्वेन सर्वं तादृशवादा विरुद्धतया व्याख्याताः । मृदादिदृष्टान्तोपपादितसर्वविज्ञानप्रतिज्ञाया उपक्रमे सत्त्वेन प्राबल्यात्तामनुसृत्यातिसूक्ष्मतामात्रांशस्य प्रकृतस्य दृष्टान्तत्वानणयात् । न निभालयस इत्यस्य दुर्दर्शपरत्व दहर[२]परत्वेऽपि न्यग्रोधादिकार्यस्यादृश्यपरमाणोरुत्पत्तावपि कार्यद्रव्यमात्रस्य परमाणुप्रयोज्यत्वे मानाभावादाकाशादिकार्यसूक्ष्मोत्तरदण्डाभिघातादिना परमाणुरूप[३] वक्ष्यमाणत्वाच्च कार्यद्रव्यमात्रस्य साक्षात्परम्परया वा परमाण्वाद्युपादानकत्वमशब्दमेवेति भावः ॥ २८ ॥ ( ८ )

इति प्रथमाध्यायस्य चतुर्थः पादः ॥ ४ ॥

इति श्रीपरमानन्दसरस्वतीपूज्यपादशिष्यश्रीब्रह्मानन्दयतिविरचितवेदान्तसूत्रमुक्तावल्यां प्रथमाध्यायः समाप्तः ।

---

१ क. °त्स्वाप्रमत्र व° । २ ख. °रेण मि° । ३ क. °दाद्रिव° ।

अथ द्वितीयोऽध्यायः ।

तत्र प्रथमः पादः ।

---

सर्वोपनिषदां ब्रह्मणि समन्वयस्योक्तस्य विरोधपरिहारार्थं द्वितीयोऽध्यायः । तत्र कापिलस्मृतेः सर्वज्ञनिर्मितत्वेन वेदतुल्यत्वेऽपि प्रधानकारणत्वादन्यत्रानवकाशत्वाच्छ्रुतेश्चाभ्युदयफलकोपासनादिविषयतया सावकाशत्वादुपादानीभूतप्रधानस्वामित्वमात्रेण चेतनस्य श्रुत्योपादानत्वोक्तिसंगतेश्च कापिलस्मृत्या श्रुतिर्बाध्यतामिति प्रत्याह—

स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ इति ।

स्मृतेः प्रधानोपादानत्वबोधिकायास्तदनुपादानत्वेऽनवकाशप्रसङ्ग इति चेन्न । अन्यस्याः

'सर्वभूतेषु चाऽऽत्मानं सर्वभूतानि चाऽऽत्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति'

[ मनुस्मृ० १२ । ९१ ] इत्यादिमनूक्तायाः ।

'ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः ।
एकश्चरति भूतेषु स्वैरचारी यथासुखम्' इति ।
'प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
स्रष्टा सृजति चाऽऽत्मानं विष्णुः पाल्यं च रक्षति'
'स एव सृज्यः स च सर्गकर्ता
स एवपाल्य(लय)ति च पाल्यते स च'
स विष्णुः सर्वमेवेदं यतो नाऽऽवर्तते यतिः'
'तस्मात्कायात्प्रभवन्ति सर्वे समूलमेतस्य चराचरस्य' ।
'मत्तः सर्वं प्रवर्तते' इत्यादिभारतोक्तायाः ।
'विस्तारः सर्वभूतस्य विष्णोर्विश्वमिदं जगत् ।
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्ति भ्राम्यन्तो मोहसंप्लवे ॥

तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नवृत्तैर्विविधं ह्युपेतम् ॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
सज्ञाव एषो भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ॥

ज्ञात्वैतद्ध्रुवमचलं सदैकरूपं
तत्कुर्याद्विशति हि येन वासुदेवम् ।

इति विष्णुपुराणोक्तायाः स्मृतेरनवकाशप्रसङ्गात् । सर्वभूतेषु भोक्तृतया नियन्तृतया च विद्यमानमेकमात्मानं समं पश्यन्न तूत्कृष्टत्वापकृष्टतया पश्यन् । सर्वभूतानि चाऽऽत्मन्येकस्मिन्नुपादेयत्वास्तित्वलीयमानत्वभोग्यत्वादिरूपैर्विद्यमानानि समं यथा स्यात्तथा पश्यन्न त्वाकाशादिकमनुपादेयत्वादिना पश्यन् । आत्मयाजी स्वस्वरूपज्ञानरूपयागशीलः स्वाराज्यं स्वस्वरूपे स्वप्रकाशानन्दरूपे संसारशून्यतया राजमानत्वं प्राप्नोति । सर्वेषामन्तरात्मा साक्षिभूतः स्वैरचारी स्वतन्त्रोऽपि मूढ इव यथा सुखमुत्पद्यते तथा चरति यतते । सर्वभूतस्य सर्वात्मकस्य विज्ञानं चिद्रूपम् । एषो इति सोरलोप आर्षः । न च 'ऋषिं प्रसूतं कापिलं यस्तमग्रे ज्ञानैर्बिभर्ति' [ श्वे० ५ । २ ] इत्यादिश्रुत्युक्तमाहात्म्यवान्कपिलः प्रबल इति वाच्यम् । 'यद्वै किंचन मनुरवदत्तद्भेषजम्' [ तै० सं० २।२।१०।२ ] इत्यादिश्रुत्या मन्वादिस्मृतीनामेव प्रामाण्योक्तेः । यद्यपि प्रत्यक्षाद्वैतश्रुतिविरोधोऽप्यस्ति तथाऽपि स्मृत्या प्रत्यवस्थाने स्मृत्यैव समाहितम् ॥ १ ॥

इतरेषां चानुपलब्धेः ॥ २ ॥ (१) इति ।

महदादीनां लोकवेदयोरनुपलब्धेस्तत्कारणत्वेन कल्प्यस्य प्रधानस्याप्रामाणिकत्वात् ॥ २ ॥ (१)

अथ योगस्मृत्याऽपि विरोधे पूर्ववदेव पूर्वपक्षसिद्धान्तसंभवेऽप्यस्तु कापिलस्मृतेरप्रामाण्यं न तु योगस्मृतेः 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्' [ का० २।६।११ ] 'त्रिरुन्नतं स्थाप्य समं शरीरम्' [ श्वे० २ । ८ ] इत्यादिश्रुत्युक्ताष्टाङ्गकयोगप्रतिपादकत्वात् । न च योगांशे तत्प्रामाण्यमिष्टं प्रधानाद्यंशे तु न श्रुतिसंवाद इति वाच्यम् । एकदेशप्रामाण्ये प्रधानाद्यंशस्मृत्याऽप्यष्टकादिस्मृत्येव श्रुत्यनुमानसंभवात् ।

---

१ क. 'तेः प्रा॰ ।

अन्यथैकदेशाप्रामाण्ये सर्वांश एव तच्छङ्कापिशाचीसंभवादित्यधिक-माशङ्क्यातिदिशति—

एतेन योगः प्रत्युक्तः ॥ ३ ॥ (२) इति ।

तथा च प्रयोजनवदद्वैतसाक्षात्कारोपयोगिप्रतिपादनार्थमनादिपूर्वप-क्षन्यायाभाससिद्धप्रधानादिप्रक्रियोदिता न तु तत्र तत्स्मृतेस्तात्पर्यम् । अत एवार्थवादानां विध्यपेक्षितार्थे एव तात्पर्यम् । अष्टकादिस्मृतेस्तु श्रुत्या न विरोध इति नाप्रामाण्यम् । अत एव

' गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् '

इति योगस्मृतावेवाद्वैतवादः स्फुटः । अत एव ' सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते ' ( श्वे० ६ । १३ ) इति श्रुतौ सांख्ययोगौ वैदिके-ज्ञानध्याने सांख्ययोगाभ्यामादौ ज्ञात्वा श्रौतरीत्या पश्चाज्ज्ञात्वा मुच्यत इति वाऽर्थः ॥ ३ ॥

वेदविरुद्धस्मृतेरमूलत्वादमानत्वमतो न तथा वेदः संकोच्यते लोक-मूलेन स्वनुमानेन संकोच्यतामित्युत्तराधिकरणेषु संगतिः । तत्र विरु-द्धार्थतया विलक्षणाया योगबोधकश्रुतेः प्रधानाद्यंशस्मृत्यमूलत्वमिव चेतनत्वादिना विलक्षणस्य ब्रह्मणो जगदमूलत्वं स्यात् । प्रधानमेव सुखदुःखमोहात्मकत्वात्तादृशजगदुपादानम् । न तु ब्रह्मातादृशत्वा-ज्जीववत् । मोहादयो जगदुपादनस्था जगद्वृत्तित्वात्सत्तावदिति शङ्कते—

*न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ इति ।*

अस्य जगतो चेतनत्वादिना वैलक्षण्यात्साधर्म्याभावाद्ब्रह्म नोपादा-नम् । जगतो वैलक्षण्यं च ' विज्ञानं चाविज्ञानं च ' (तै० २ । ६) इति शब्दात् ॥ ४ ॥

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥ इति ।

यत्तु ' मृदब्रवीत् ' ' आपोऽब्रुवन् ' ' तेज ऐक्षत ' ' आप ऐक्षन्त ' ' ते हेमे प्राणा अहंश्रेयसे विवदमाना ब्रह्म जग्मुः ' इत्यादिनिर्देशश्चेत-नत्वादि ज्ञापयति तत्र भूतेन्द्रियेषु किंतु तदभिमानिदेवतासु भोक्ता

---

१ ख. 'क्योगध्या°'।

चेतनो भोग्यमचेतनमिति विशेषात् । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' [ऐ० आ० २।४।२।४] इत्यादिना भूतेन्द्रियेष्वभिमानिदेवतानामनुगतिश्रवणाच्च । अत एव 'एता ह वै देवता अहंश्रेयसे विवदमानाः (कौ० २।९) इति कौषीतकिश्रुतिरहं श्रेष्ठ इति निश्चयाय ॥ ५ ॥

प्रत्याह—

दृश्यते तु ॥ ६ ॥ इति ।

तुशब्दाच्चैवम् । यतो लोके विलक्षणादपि गोमयादितो वृश्चिकादेर्यद्वद्यथा सतः पुरुषात्केशलोमानीत्यादौ पुरुषादितः केशादेरुत्पत्तिर्दृश्यते । उपादानसर्वांशसाम्यस्य कुत्राप्यसत्त्वात्सत्त्वादिना प्रकृतेऽपि साधर्म्याद्बाकाशनैल्यादौ तथानियमस्य व्यभिचाराच्च ॥ ६ ॥

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ इति ।

शब्दादिमत्कार्यं स्वोत्पत्तेः प्राग्ब्रह्मण्यसत्ततश्च सत्कार्यवादबाध इति चेन्न । त्वदुक्तवाक्यस्यार्थशून्यत्वेन प्रतिषेधवाक्यमात्रत्वात् । 'सदेव सोम्येदमग्र आसीत्' [छा० ६।२।१] 'सर्वं तंपरादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद' (बृ० २।४।६) इत्यादिश्रुत्या दृश्यमात्रस्य सद्ब्रह्मतादात्म्योक्तेः । सर्वं दृश्यं सन्घट इत्यादिधीविषयीभूतं सत्परादान्निराकुर्यादन्यत्रान्यत ॥ ७ ॥

ननूक्तमसमञ्जसं प्रलये ब्रह्मणः कार्यतादात्म्य इदानीमुपलभ्यमानकार्यधर्मस्थौल्यादिमत्त्वापत्तिरिति शङ्कते—

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥ इति ।

अपीतौ प्रलये ॥ ८ ॥

समाधत्ते—

न तु दृष्टान्तभावात् ॥ ९ ॥ इति ।

नैवम् । घटाद्युत्पत्तेः प्राक्न तत्तादात्म्यायत्तस्य मृदादेर्घटत्वादिमत्त्वमभिव्यक्तिदशायामेव मृद्घट इत्यनुभवेन तत्पूर्वं तत्संबन्धानङ्गीकारादित्यादिदृष्टान्तभावात् । कार्याणामभिव्यक्तौ च मायिकस्तत्संबन्धो ब्रह्मणीष्यत एवेति भावः । यद्वा तद्वत्प्रसङ्गाद्विशेषविलयेनापीतौ

१ ख. 'सन् । अत' । २ ख. 'त्पापत्तस्य ।

कारणमावापन्नकार्ये पुनः प्रतिनियतविशेषाभिव्यक्त्यभावप्रसङ्गान्न तु दृष्टान्तभावादिति यथा सुषुप्तौ सर्वलयेऽपि 'यद्यद्भवन्ति । तदाभवन्ति' [ छा० ६ । ९ । ३ ] इत्यादिश्रुत्युक्तः, प्रतिनियतोऽज्ञानादिमूलकः पुनः कार्यविभाग एवमपीतावपीत्यर्थः ॥ ९ ॥

स्वपक्षदोषाच्च ॥ १० ॥ इति ।

शब्दादिहीनस्य प्रधानस्योपादानत्वात ( *सृष्टेः पूर्वं शब्दाद्यसत्त्वेन ) अभिव्यक्तिदुर्वचत्वेन च सत्कार्यवादहानात्प्रधानवाद एव दोषात् । अस्मत्पक्षस्यानिर्वचनीयवादत्वेनादोषत्वात् ॥ १० ॥

तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति
चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥(३) इति ।

किंच प्रधानवादो न युक्तः प्रधानादिसाधकतर्काणां काणादाद्युक्ततर्कदुष्टत्वरूपादप्रतिष्ठानात् । अत एवोक्तम्—

'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः ।
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ' इति ।

अथाप्रतिष्ठानशून्यतर्केणैवानुमेयम् । न च तर्कमात्रमप्रतिष्ठितं तथा सत्यप्रतिष्ठानसाधकतर्कस्यापि तथात्वापत्त्येष्टासिद्धेस्तर्कमूलकलौकिकवैदिकव्यवहारोच्छेदापत्तेश्चेति चेत् । एवंप्रकारेण कस्यचित्तर्कस्य व्यवहारादिनिर्णायकत्वं दृष्ट्वा तर्कमात्रेण प्रत्यवस्थाने तत्त्वविषयकतादृशतर्काणां मिथोविरोधेन तत्त्वानिर्णयात्तत्त्वनिर्णयाधीनमोक्षाभावप्रसङ्गः । अविरवधारणे । तस्माच्छ्रुत्यविरुद्धतर्क एवार्थनिर्णायकः । अत एव 'नैषा तर्केण मतिरापनेया ' [ का० २ । ९ ] इत्यादिश्रुत्या

'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् ।
आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ' ॥

इत्यादिस्मृत्या च श्रुत्यविरुद्धतर्कस्यैवोपादेयत्वमुक्तम् । अन्यथा बृहस्पत्यादिमहानुभावनिर्मितनास्तिकशास्त्रान्तर्गततर्काणामप्युपादेयतापत्तेरिति भावः ॥ ११ ॥ ( ३ )

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः ।

ब्रह्म नाऽऽकाशाद्युपादानं तन्न्यूनपरिमाणाभावात् । यत्र यस्मान्न्यूनपरिमाणाभावस्तत्र तस्यानुपादानत्वम् । यथा घटे कपालस्येत्यणुरेवोपादानमित्यधिकमाशङ्क्यातिदिशति—

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ (४) इति ।

गिरिस्थदीर्घतरौ दूर्वाध्यासोपादाने न्यूनपरिमाणाभावदर्शनात्समानपरिमाणैकावयवे न्यूनपरिमाणावयवान्तरयोगाद्द्रव्योत्पत्तेः पराभ्युपगमत्वाद्दीर्घेणैकतन्तुना तन्तुद्वयेन वा द्विगुणीकृतेन ह्रस्वद्रव्योत्पत्तेर्दृष्टत्वाच्च शिष्टैर्मनुव्यासदेवलादिभिरपरिगृहीताः परमाण्वादिकारणवादा व्याख्याता विरुद्धतया आख्याता ज्ञेयाः । अत एव मोक्षधर्मे—

'आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ।
तस्यैवं फलनिर्वृत्तिः सृगालत्वं वने मम' ॥

मनुरपि—

'हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्' इति ।

यत्तु याज्ञवल्क्येनोक्तम्—

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश' इति ।

तच्छ्रुत्यविरुद्धपदार्थशोधकन्यायस्योपयोगित्वादविरुद्धम् ॥१२॥(४)

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥ ( ५ ) इति ।

उपदेशाधिकरणे तर्काप्रतिष्ठानमुक्तम् । ब्रह्मजगतोरभेद उपादानोपादेयभावसामर्थ्यरूपतर्कसिद्धभोग्यस्य भोक्तृजीवाभिन्नब्रह्माभिन्नत्वाद्भोक्तृभेदापत्तिरतो विभागस्य भोक्तृभोग्यभेदव्यवहारस्याभावः स्यादतो भवन्मतेऽपि तर्काप्रतिष्ठानं स्यादिति चेत्तर्हि लोकवत्सोऽपि व्याख्यात इति वचनविपरिणतेनानुषक्तेनान्वयः । यथा लोके समुद्रादभिन्नयोरपि तरङ्गबुद्बुदयोर्नाभेदस्तथा ब्रह्माभिन्नयोरपि तयोरिति भावः ॥ १३ ॥ ( ५ )

नन्वेवं लौकिकयोः कारणकार्ययोरिव ब्रह्मप्रपञ्चयोरपि समानसत्ताकत्वं स्यात् । त्रिविधा हि चिद्रूपा सत्ता तत्त्वदीपनादावुक्ता—शुद्धचि-

१ ख. °गतत्वा° । २ ङ. भोगस्य ।

ऐक्यरूपा पारमार्थिकी मायावच्छिन्नचिद्रूपा व्यावहारिकी मूलाविद्याप्रयुक्तदृश्यतादात्म्यापन्नचिद्रूपेति यावत्। तत्प्रयुक्तत्वं च तदुच्छेदकज्ञानोच्छेद्यत्वमनादिदृश्येऽप्यस्ति । पल्लवाविद्योच्छेदकज्ञानोच्छेद्यदृश्यात्मकचित्प्रातिभासिकी । पल्लवाविद्यानङ्गीकारे तु नोक्तरूपा व्यावहारिकी प्रातिभासिकी वा ब्रह्मज्ञानेनैव सर्वदृश्यानामुच्छेदात् । किंतु सर्वदृश्यमिथ्यात्वनिश्चयपूर्वं निश्चितमिथ्यात्वकदृश्यात्मकचित्प्रातिभासिकी सत्ता । तादृशनिश्चितान्यमिथ्यात्मकं यद्दृश्यं तदात्मकचिद्व्यावहारिकी सत्ता । तथा चाद्वैतसमन्वयो विरुद्ध इति मत्वाह—

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ इति ।

प्रपञ्चमात्रे तस्माद्ब्रह्मणोऽनन्यत्वमभेद आध्यासिकः संबन्ध इति यावत्। तथा च दृक्दृश्ययोः संबन्धानिरूपणाद्दृश्यमात्रं दृशि चैतन्येऽनिर्वचनीयसंबन्धेन संबद्धमनिर्वचनीयमेवेति भावः। अथ वा तस्य ब्रह्मणोऽनन्यत्वमन्यशून्यत्वमद्वयत्वमिति यावत् । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' [ छा० ६।१।४ ] 'एवꣳ सोम्य स आदेशः' [ छा० ६।१।६ ] इत्याद्यारम्भणशब्दोपलक्षितश्रुत्यादिभ्यः। आदिना दृग्दृश्यसंबन्धानिरूपणयुक्तिभ्यः । उक्तश्रुतौ हि यथा घटादिविकारो वाचारम्भणहेतुर्नामधेयमात्रं मृदादिकारणेभ्यो भिन्नाभिन्नत्वाभ्यामनिर्वचनीयत्वात्। भिन्नत्वे सति सत्कार्यवादहान्यापत्तेरभिन्नत्वे कारणव्यापारवैयर्थ्यात्। उत्पत्तेः पश्चात्कार्यं ब्रह्मवत्सत्त्वभावं पूर्वं चासत्त्वभावं नरविषाणवदित्यस्य वक्तुमशक्यत्वात् । नीलरूपस्य पीतरूपत्व इव सत्त्वभावस्यासत्त्वभावत्वे विरोधात्। सत्त्वासत्त्वयोर्धर्मत्वे घटानधिकरणकालावच्छेदेन च घटेऽसत्त्ववैशिष्ट्यासंभवात् । अधिकरणासंबद्धस्यानवच्छेदकत्वात्। घटाधिकरणकालावच्छेदेन च घटे सत्त्वासत्त्ववैशिष्ट्यविरोधात् । तस्मान्मृत्तिकेत्येव सत्यं घटादिविकारोऽसत्यः। तथा च यथा घटाद्यनुगतमृदादिज्ञानाद्घटादेर्मृज्जातीयत्वाज्ञाननिवृत्त्या मृदभिन्नतया तत्त्वतो ज्ञाततया च ज्ञातत्वं तथा कार्यमात्रस्य ब्रह्मणो भेदाभेदाभ्यामनिर्वाच्यस्य ब्रह्मस्वरूपाधिष्ठानज्ञानात्सर्वाज्ञाननिवृत्त्या ब्रह्माभिन्नतया च तत्त्वतो ज्ञाततया च विज्ञातत्वमुच्यत इति ब्रह्मवि-

१ क. 'तान्मभि°'। २ ख. 'त्तो''। ३ क. 'शिष्टमं°'।

ज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादिता । न च मृत्तिकापदस्वारस्यात्कार्यमात्रस्य ब्रह्मपरिणामत्वमात्रमर्थो न मिथ्यात्वमिति वाच्यम् । मृत्तिकेत्येवेत्यत्र मृत्तिकेति गृह्यमाणं सद्रूपं ब्रह्म सत्यं तदन्यत्सर्वं विनाशित्वेन विकाररूपं मिथ्येति । एवकारेण विकारमात्रे सत्त्वव्यवच्छेदस्य स्फुटत्वात् । ' निष्कलं निष्क्रियम् ' [ श्वे० ६।१९ ] इत्यनेन परिणामित्वनिषेधात् । ' कृत्स्नप्रसक्तिः ' [ ब्र०सू० २।१।२६ ] इत्यादिना परिणामवादे दोषमाशङ्क्य ' आत्मनि चैवं विचित्राश्च हि ' [ ब्र० सू० २।१।२८ ] इत्यादिना विवर्तवादस्यैवोपपादयिष्यमाणत्वात् । ' तत्सत्यꣳस आत्मा ' [ छा० ६।८।७ ] ' ऐतदात्म्यमिदꣳ सर्वम् ' [ छा० ६।८।७ ] ' आत्मैवेदꣳ सर्वम् ' [ छा०७।२५।२ ] ' नेहास्ति द्वैतसिद्धिः ' [ नृसिंहोत्त० ता० ९ ] ' न तु तद्द्वितीयमस्ति ' [ बृ० ४।३।२३ ] ' नेह नानाऽस्ति किंचन ' [ बृ० ४।४।२९ ] ' अथात आदेशो नेति नेति ' [ बृ० २।३।६ ] इत्यादिश्रुतेश्च । किंच मृद्घटयोर्यः संबन्धस्तस्य संबन्धान्तरमस्ति चेत्तदा तस्यापि संबन्धान्तरमित्येवमनवस्था । इष्टापत्तिरिति चेन्न । तादृशसंबन्धपरम्परायां योग्यसंबन्धिद्वयनिरूप्यतया योग्यत्वनियमेनानुपलब्ध्यसंभवान्मानाभावाच्च । न च विशिष्टबुद्ध्यनुपपत्तिर्मानमिति वाच्यम् ।

' अनवस्थादयो दोषाः सत्तां निघ्नन्ति वस्तुनः ।
अद्वैतिनां ते सुहृदः प्रपञ्चे तत्प्रसञ्जकाः ॥

इति खण्डनरीत्या संबन्धस्यानिर्वचनीयतयैवोपपत्तेः । न च स्वरूपमेव संबन्धः । आत्माश्रयत्वात्स्वं न स्वीयमित्यनुभवेन बाधात्स्वरूपनिश्चयेऽपि संबन्धानिश्चयाच्च । न च स्वरूपद्वयनिश्चयेऽपि तस्य संबन्धित्वं न निश्चितमिति वाच्यम् । असंबन्धत्वस्य दुर्वचत्वात् । प्रतीतिबलादखण्डं तदङ्गी क्रियत इति चेन्न । असंबद्धया प्रतीत्या विषयासिद्धेः । विषयिविषयभावसंबन्धेन विषयसंबन्धाप्रतीतिरिति चेन्न । घटावच्छिन्नस्फुरणेन यो घटस्य संबन्धः स किं तेनैव स्फुरणेन गृह्यतेऽन्येन वा । आद्ये तेन स्वमविषयीकुर्वता कथं स्वस्य विषयेण सह संबन्धो गृह्यतां संबन्धज्ञानस्य संबन्धिद्वयगोचरत्वनियमात् । अन्यथा

---

१ ख. °सत्त्वेऽप्यव° । २ ख. °दस्यास्कु° । ३ क. °भयात् । ४ क. °धात् । न च । ५ ख. °पत्वानि° । ६ क. °बन्धत्वं । ७ क. °म् । सं° ।

संबन्ध इत्येव गृह्येत न त्वस्यानेन संबन्ध इति। तादृशग्रहे च नोमयी-यत्वसिद्धिः। न चोमयीयत्वग्राहकमानशून्यः संबन्धो भवति। अथ स्वं विषयीकुर्वता स्वस्य विषयसंबन्धो गृह्यतामिति चेन्न। आत्माश्रया-त्स्वस्य स्वविषयकत्वे मानाभावाच्च। स्वयमेव स्वस्यं स्वविषयकत्वे मान-मिति चेन्न। विषयत्वस्य स्वानतिरिक्तत्वे स्वस्य स्वं विषय इति वाक्यस्य स्वस्य स्वं स्वमित्यर्थस्तथा चोद्देश्यासिद्धिः। विषयत्वस्य स्वातिरेके घटे-नेव तेन समं विषयिविषयभावे मानाभावः। तमपि तदेव स्फुरणं गृह्णा-तीति चेन्न। अनुभवविरोधान्मानाभावाच्च। अथ घटस्फुरणस्य घटविष-यकत्वमन्येन स्फुरणेन गृह्यत इति द्वितीयः पक्षोऽस्त्विति चेन्न। स्फुरणा-न्तरस्य घटविषयकस्फुरणाविषयकत्वं केन प्रमाणेन सिद्धमिति पर्यनुयो-गात्। स्फुरणान्तरेणेति चेद्धन्तैवमनवस्था। अविरललग्नवित्तिपरम्प-रास्वीकारे सा न तु विरलवित्तिधारामिरिति चेन्न। ताभिर्वित्तिधा-रामिरवश्यं माव्यमित्यत्र मानाभावादनिर्मोक्षापत्तेश्च। अथ मा भूत्स-र्वासां वित्तिधाराणां वित्तिस्तथाऽपि द्वित्रा वित्तयस्तद्विषयकवित्त्यन्तरे मानमिति चेन्न। अन्त्यवित्तेरुपान्त्यविषयकत्वासिद्धा उपान्त्यवित्त्य-सिद्धौ तद्द्वाराया असिद्धेर्वित्तेर्घटादिविषयकत्वासिद्धेः। तस्मात्प्र-माणाभावादृदृशा दृश्यैश्च दृश्यमात्रस्य संबन्धो निर्वक्तुमशक्यत्वान्मा-यिकः। तादृशेन च संबन्धेन यत्संबद्धं तत्सुतरां मायिकमिति सिद्धम्॥ १४॥

ब्रह्मान्यन्मिथ्या दृश्यत्वादित्यनुमानं मानमित्याशयेनाऽऽह—

भावे चोपलब्धेः॥ १५॥ इति।

ब्रह्मान्यस्मिन्भावे वस्तुमात्र एवोपलब्धेर्दृश्यत्वात्। भावाच्चोपलब्धे-रिति पाठे, उपलब्धेर्मिथ्यात्वांशे प्रत्यक्षस्य सत्त्वादित्यर्थः। तेन प्रत्यक्षं प्रमाणमुपन्यस्तम्। घटोऽस्तीत्यादावस्तित्वशब्दितब्रह्मसत्तायां प्रतिप-न्नस्य घटादेर्घटो नास्तीत्यादिप्रत्यक्षेण तस्यामेवाभावावगाहनमिति विवरणोक्तेः। स्वसमानाधिकरणस्यावच्छिन्नवृत्तिकान्यस्यात्यन्ताभा-वस्य प्रतियोगित्वं हि मिथ्यात्वम्। न चोक्तप्रतीतौ वस्तुतो घटाधि-करणं सत्ता भाताऽपि तत्त्वेन न भातेति न मिथ्यात्वशरीरमानमिति वाच्यम्। तथाऽपि फलतो मिथ्यात्वमानावश्यकत्वात्। घटोऽस्तीति-

१ ख. 'स्य वि'। २ ख. विरेणो'।

ज्ञानानन्तरं जायमाने घटो नास्तीति ज्ञानेऽस्तित्वांशे घटतदभावयो-र्भाने बाधकाभावात् । प्रत्यक्षज्ञाने शब्दव्युत्पत्तिविरोधासंभवात् । तत्त्वज्ञानां प्रपञ्चाधिकरणत्वेन गृह्यमाणेष्वेव तदभावप्रत्यक्षाच्च । न च कालविशेषावच्छिन्नवृत्तिक एवाभावस्तत्र भासत इति न मिथ्यात्वसि-द्धिरिति वाच्यम् ।

कालविशेषावच्छेदेन संबन्धानन्त्यकल्पने गौरवात् । अभावस्य सर्वत्र सर्वदा संबन्धाङ्गीकारात् । यद्देशकालावच्छेदेन प्रतियोगी गृह्यते तद्देशकालावच्छेदेन तदभावो न गृह्यत इत्यत्रास्माकमप्यविप्रतिपत्तेः । तत्तत्कालीनसंनिकर्षादेः शक्तिविशेषेण प्रतिबन्धकत्वात् । अत एवाभा-वस्यावच्छिन्नवृत्तिकत्वानङ्गीकाराद्घटावच्छेदकदेशकालावच्छेदेन तद-भावो वर्तत इति वाक्यस्य न प्रामाण्यम् । घटे घटत्वं नास्तीत्यस्य तु प्रामा-ण्यमिष्यते परैरपि । उक्तं हि दीधितिटीकादौ ज्ञायमानघटत्वादिसा-मान्यस्यातीतानागतघटादावभावेन व्यभिचारित्वात्प्रत्यक्षे कारणत्वासं-भवेन घटत्वादिसामान्यज्ञानस्य तत्कारणत्वपक्षस्वीकार इति । घटे प्रागभावध्वंसकालावच्छेदेन तत्प्रतियोगित्ववैशिष्टयस्येव घटत्वाभाववै-शिष्टयस्याङ्गीकार्यत्वात् । घटावच्छेदककालावच्छेदेन घटत्वं घटे नास्ती-त्यस्य तु पूर्ववदेवास्माकमप्यप्रामाण्यम् । तद्घटनाशकालावच्छेदेन तद्घटवति तद्घटो नास्तीति तु कालावच्छिन्नाभावावगाहि चेदप्रमा-णमेव । मीमांसकमते ककारानुपलम्भकाल इहेदानीं ककारो नास्ती-त्यादौ ( * प्रतियोग्युपलम्भस्य ) प्रतियोग्युपलम्भस्वरूपेणाभावमेतद्दे-शकालावच्छिन्नं यथाऽवगाहते तथा मन्मत एतद्देशकालावच्छिन्नस्वरू-पेण ( +प्रतियोग्युपलम्भस्याभावं प्रतियोगिन एव वैतद्देशकालावच्छि-न्नसंबन्धेभा( ना )मावं चेदवगाहते तदा प्रमाणमेव । व्याप्यवृत्तेरप्य-भावस्य ) प्रतियोगिनि संयोगादौ शाखाद्यवच्छिन्नत्वं वृक्षसंबन्धिशा-खावृत्तित्वं वेति वृक्षे शाखायां संयोग इत्यनुभवस्यैव बलम् ॥ १५ ॥

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थः ख. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतोऽयं ग्रन्थः ग. पुस्तकस्थः ।

---

१ ग. घटविच्छे° ।

न चैवमभावस्यावच्छिन्नवृत्त्यङ्गीकारे कारणत्वादिनिर्वचनानुपपत्तिः कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यवति या वृत्तिस्तद्विशिष्टाभावप्रतियोगितानवच्छेदकान्यथासिद्धिरूपकधर्मवत्त्वस्य तल्लक्षणस्य वक्तुमशक्यत्वात्तादृशवृत्तिमदभावाप्रसिद्धेरिति वाच्यम् । कारणत्वादेरखण्डत्वात् । अन्यथाऽनन्यथासिद्धेरन्यथा दुर्वचत्वेन यद्रूपेण प्रामाणिकानां न कारणत्वव्यवहारस्तावच्छेदककूटरूपायास्तस्या युगसहस्रेणापि दुर्ज्ञेयत्वादिति दिक् । न च घटः सन्नित्यादिप्रत्यक्षेण सत्यत्वमपि सिध्यतीति वाच्यम् । त्रिकालाबाध्यत्वादिरूपसत्यत्वस्यायोग्यत्वेनाधिष्ठानब्रह्मसत्ताया आध्यासिकसंबन्धस्यैव तद्विषयत्वात् । अत एव तादृशप्रत्यक्षादिबलादपि प्रपञ्चस्य मिथ्यात्वं सिध्यतीत्याह—

सत्त्वाच्चावरस्य ॥ १६ ॥ इति ।

अवरस्य कल्पितत्वेन स्वतः सत्ताहीनस्य प्रपञ्चस्याधिष्ठानसत्ताभावेव सत्तानुभवात् ॥ १६ ॥

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥ इति ।

'असदेवेदमग्र आसीत्' [ छा० ३ । १९ । १ ] इत्यादिना प्रपञ्चस्यासत्त्वोक्तेरसदन्यत्वव्याप्यं मिथ्यात्वं न स्यादिति चेन्न । तत्रानभिव्यक्तिरूपेण धर्मान्तरेणैवासच्छब्दोक्तिर्न तु निरूपाख्यत्वेन 'तत्सदासीत्' इति शेषात् ॥ १७ ॥

युक्तेः शब्दान्तराच्च ॥ १८ ॥ इति ।

युक्तेरसत्त्वेऽर्थक्रियाकारित्वानुपपत्तेः । शब्दान्तरात् 'नासदासीन्नो सदासीत्तम आसीत्' इति सदसद्विलक्षणमायारूपेण प्रागवस्थितप्रपञ्चबोधकात् ॥ १८ ॥

पटवच्च ॥ १९ ॥ इति ।

मायारूपेण प्राक्प्रपञ्चस्य स्थितावपि न तदानीमर्थक्रियाकारित्वम् । यथा संकुचितस्य पटस्य न प्रावरणादिकार्यकारित्वम् । चकारात्परेषा-

---

२ क. 'तावन्न' । ३ क. 'सिद्धयनि' ।

मपि तदानीमर्थक्रियाया दुर्वारत्वात्तदसाधारणकारणोत्पत्तेरप्यापाद्य-त्वात् ॥ १९ ॥

यथा च प्राणादिः ॥ २० ॥ ( ६ ) इति ।

यथा निरोधेन सूक्ष्मतापन्नेभ्यः प्राणादिभ्यो नार्थक्रिया, एवं कारणात्मतामापन्नात्प्रपञ्चात् ॥ २० ॥ ( ६ )

जीवानां ब्रह्मत्वमभिप्रेत्यैव ब्रह्मान्यमात्रस्य मिथ्यात्वमुक्तम् । तथा च ब्रह्मण एव स्वाभिन्नजीवस्य हिताकरणमहितकरणं च नोपपद्यत इत्यचेतनमेव हिताहितमयजगदुपादानं संगच्छत इति विरोधमाशङ्कते—

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ इति ।

ब्रह्मण एवेतरत्वेन जीवत्वेन श्रुतौ व्यपदेशात् ॥ २१ ॥

अधिकं तु भेदनिर्देशात् ॥ २२ ॥ इति ।

तुशब्दान्नैवं यतो हिताहितभाग्जीवरूपं ब्रह्मणोऽधिकमविद्योपाधिकल्पितभेदवत् । न चायं व्यावहारिको भेदोऽपलपनीयः । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यः' [ मु० ३ । १ ] 'ज्ञाज्ञौ द्वावजावीशानीशौ' [ श्वे० १ । ९ ] इत्यादिश्रुतिभिरनूक्तत्वात् ॥ २२ ॥

अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥ ( ७ ) इति ।

एवं च यथाऽश्मादिरूपमण्यादिगतस्य मुखादिप्रतिबिम्बस्यावच्छिन्नाकाशस्य वा तद्गतश्यामत्वपरिच्छिन्नत्वादिप्रतीतिर्न तु मुखादेर्महाकाशस्य वा तथाऽविद्यानिमित्तकहिताहितादिप्रतीतिर्जीव एव न तु ब्रह्मणीत्यतस्तस्या उक्तप्रसक्तेरनुपपत्तिः । चकारादविद्यासंबन्धस्यानादित्वादनिर्वाच्यत्वाच्च न तत्कारणाद्यन्वेषणम् ॥ २३ ॥ ( ७ )

उपसंहारादर्शनान्नेति चेत्क्षीरवद्धि ॥ २४ ॥ इति ।

औपाधिकनानात्वेन समाहितं ब्रह्मणि अन्यमात्रप्रपञ्चकारणे तदपि नास्तीत्यतो ब्रह्म नोपादानतयोपधायकं निमित्तासमवायिरूपनानाकारणोपसंहारेणैवोपादानस्यान्यत्र कार्योपधायकत्वदर्शनात् । यदि च

---

१ ख. °कार्योत्प° । २ क. °स्ववद्ब्रह्म° । ३ क °हाणोऽपील्य° । ४ क. °रादेधवि° । ५ ख. °द्.णा ज° । ६ ख. °मानत्र° ।

स्वाधिष्ठिताविद्याया अदृष्टादेश्च सहकारित्वं तथाऽपि यदुपादानं तच्छरीरिणा कर्त्रा सह कृतं यश्च कर्ता स्वस्वधर्मातिरिक्तेनोपादानेन सहकृतः कार्यं जनयति यथा मृदादि कुलालादिना कुलालादि मृदादिना ब्रह्म चातथाभूतमविद्यादेरपि स्वाध्यस्तत्वेन स्वधर्मत्वादतो नोपादानं न वा कर्त्रिति चेत्। नैवम्। हि यस्माद्यथा क्षीरं पाचकादिशरीरमनपेक्ष्यैव कालवशेन दध्यात्मकपरिणामं जनयति तथा ब्रह्मापि प्रपञ्चम् ॥ २४ ॥

देवादिवदपि लोके ॥ २५ ॥ ( ८ ) इति ।

यथा च देवादि योगैश्वर्यादिधर्मसहकारेणैव विचित्रस्वशरीरादि सृजति तथा ब्रह्मापि प्रपञ्चमिति । तथा चोक्तनियम एवासिद्ध इति भावः ॥ २५ ॥ ( ८ )

क्षीरवच्चेद्ब्रह्म कारणं तदा परिणामि तच्च च ब्रह्मणः कार्त्स्न्येन चेद् निरयत्वं स्यात्। एकदेशेनेति चेत् 'निष्कलं निष्क्रियं शान्तम्' [ श्वे० ६ । १९ ] इत्यस्य निरवयवत्वबोधकशब्दस्य विरोध इति शङ्कते—

कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥ इति ।

समाधत्ते—

श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥ इति ।

तुशब्दान्नैवम् । 'स * ऐक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' [ छा० ६ । ३ । २ ] इति प्रपञ्चे ब्रह्मणः प्रवेशश्रुतेः कार्त्स्न्येनापरिणामात् । तिस्रो देवतास्तेजोबलपृथिवीः ॥ २७ ॥
न चैवमेकदेशेन परिणामे निरवयवत्वश्रुतिकोपः । उपादानत्वनिरवयत्वयोर्द्वयोः श्रुतिमूलत्वात् । कथं विरुद्धं द्वयं श्रुतिमूलं तत्राऽऽह—

आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥ इति ।

आत्मनि स्वप्नादिद्रष्टर्येवं स्वरूपानुपमर्देनैव विचित्राः स्वाप्नवरतुशुक्तिरजतेन्द्रजालादीना सृष्टयो हि यस्माज्जायन्ते ताश्च सर्वानुभवसिद्धाः 'अथ रथान्रथयोगान्पथः सृजते' [ बृ० ४ । ३ । १० ] इत्यादिश्रुत्याऽप्यनूक्ताः । कार्यस्य निर्वक्तुमशक्यत्वोऽपि कश्चन तादात्म्य-

* अत्रत्यमुद्रितोपनिषत्पुस्तके—सेय देवतैक्षतेति पाठ ।

१ ख 'प्रप्चापि ।

रूपः संबन्धो विषयतात्वाश्रयो भासकचैतन्येन समं वाच्यो यमादाय 'तस्य भासा सर्वमिदं विभाति' [ का० ५।१५ ] इति श्रुतिः प्रवृत्ता। तथा च तादृशसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्न-कारणत्वमेव विवर्तोपादानत्वम्। न च कार्योत्पत्त्यधिकरणे ब्रह्मणि तादात्म्यसंबन्धेन तस्यासंबद्धतया कथमुपादानत्वम्। न चात्यन्ताभेदे तादात्म्यं सिद्धान्ते स्वी क्रियत इति वाच्यम्। कार्योत्पत्त्यव्यवहितपूर्व-क्षणोपहिते कार्योत्पत्त्युपलक्षिते ब्रह्मणि ब्रह्मणस्तादात्म्यसत्त्वात्। तत्र तत्तादात्म्याभावेऽपि तद्वृत्तिर्यः प्रतियोग्यवृत्तिभेदस्तत्प्रतियोगित्वेनैवो-पादानत्वसंभवाच्च। कार्योत्पत्त्यधिकरण उपहिते ब्रह्मणि शुद्धब्रह्मणो हि संबन्धो विषयता तादृशसंबन्धस्य भासकतानियामकत्वेऽपि परोक्षवृ-त्तिविषयीभूतस्याऽऽवृतत्वादेवाभानाद्बहिर्नि सृतापरोक्षवृत्त्यैवाऽऽवरणानि-वृत्त्याऽनावृतसाक्षितापन्नचैतन्यस्य तादृशसंबन्धसंभवेन साक्षात्करोमीति धीसंभवादाध्यात्मिकसंबन्धेन चैतन्यं संबध्याऽऽवृणोति विक्षेपरूपेण परिणमते चाज्ञानं चैतन्यस्यापरिणामित्वात्। 'मायां तु प्रकृतिं विद्या-न्मायिनं तु महेश्वरम्।' [ श्वे० ४।१० ] 'बह्वीः प्रजाः सृजमा-नाम्' [ श्वे० ४।५ ] इत्यादिश्रुत्या तस्योपादानत्वश्रुतेश्च। कारण-समसत्ताकतादात्म्यावच्छिन्नकारणतानिरूपिततादात्म्यसंबन्धावच्छिन्न-कारणत्वं च परिणाम्युपादानत्वमिति न ब्रह्मणः स्वरूपोच्छेदरूपकृत्स्न-प्रसक्त्याद्यापत्तिरिति भावः ॥ २८ ॥

नन्वेवमविद्यायामेव कृत्स्नप्रसक्त्यादि स्यात्तत्राऽऽह—

स्वपक्षदोषाच्च ॥ २९ ॥ ( ९ ) इति।

स्वस्य प्रपञ्चसत्यत्ववादिनः पक्षेऽप्युक्तदोषापत्तेः। यदि च गुणत्र-यस्य प्रधानस्य प्रतिगुणं कार्यवैचित्र्यसूचितविचित्रशक्तिसत्त्वात्तदंशा-नामेव परिणामान्नानित्यत्वमवयवानारभ्यत्वाच्च न सावयवत्वमित्युच्यते तदा तत्तच्छक्तीनामेव परिणाम्युपादानत्वं वाच्यम्। तच्च न संगच्छते। तासां स्वरूपेनाशापातात्। तस्मात्स्थिते नष्टे वा परिणामिनि परिणाम-वादायोगादनिर्वचनीयवाद एव युक्त इति भावः ॥ २९ ॥ ( ९ )

---

१ ख न ह्यत्य'। २ क ंर्योपल'। ३ क तदतिय। ४ क 'वृता सा साक्षिता यत्र धै'। ५ क 'चकारणत्व। ६ ख 'या एव। ७ ख 'दश एव। ८ ख. 'मान नि'। ९ क. मनपा'।

मायावित्वाद्विवर्तोपादानत्वमुक्तमयुक्तं विचित्रकार्याणामेकजातीयादुत्पत्त्यसंभवादिति प्रत्याह—

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ इति ।

'श्रुतेस्तु' [ ब्र० सू० २ । १ । २७ ] इत्यादिसूत्रात्तुशब्दोऽनुवर्तनीयम् । चो हेतौ । यस्माद्ब्रह्म चित्कारणीभूतमायाशक्त्यवस्थैः सर्वकार्यैरुपेता । 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तः' [ छा० ३ । १४ । ४ ] इति श्रुतौ 'पराऽस्य शक्तिर्विविधा' [ श्वे० ६ । ८ ] इत्यादिश्रुतौ च । तथा च मायाशक्तिवैचित्र्यमेव कार्यवैचित्र्यनियामकमिति भावः ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥ ( १० ) इति ।

हस्तादिकरणशून्यत्वान्न ब्रह्म मायावित्वेनोपादानमिति चेन्नेत्यनुपज्यते । यतस्तदुक्तम्—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' [ श्वे० ३ । १९ ] 'न तस्य कार्यं करणं च विद्यते' 'पराऽस्य शक्तिर्विविधैव' [ श्वे० ६ । ८ ] इत्यादिश्रुतौ जवनः पादकार्यकारी ग्रहीता हस्तकार्यकारी पश्यति रूपसाक्षात्कारी शृणोति शब्दसाक्षात्कारी कार्यं शरीरं करणमिन्द्रियम् ॥ ३१ ॥

( * सुखं दुःखाभावस्तत्साधनं प्रयोजनं स्वस्य ) तदिच्छतां तत्साधनत्वज्ञानवतामेव कर्तृत्वान्न ब्रह्मणः कर्तृत्वमित्याशङ्कते—

न प्रयोजनवत्त्वात् ॥ ३२ ॥ इति ।

न ब्रह्मणः कर्तृत्वं यत इच्छासंबन्धेन प्रयोजनवत्त्वादेव कर्तृत्वम् ॥ ३२ ॥

लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥ (११) इति ।

तुशब्दान्नैवम् । यथा लोके प्रयोजनमनिच्छतामपि राजादीनां लीलारूपचेष्टासु कर्तृत्वं तथेश्वरकर्तृकलीलाकैवल्यं जगत्सृष्ट्यादेः । न च राजादिषु लीलास्थानीयक्षुद्रसुखमिदमिति वाच्यम् । अनुभवविरोधात् । उन्मत्तवृथाचेष्टादौ तदभावाच्च । न च प्रयोजनेच्छायाः वत्सकारणताकत्वेन नियतपूर्वसत्त्वं कल्पनीयमिति वाच्यम् । तत्तत्प्रयोजनतावच्छेदकावच्छिन्नोद्देश्यताकेच्छानां प्रत्येकं स्वस्वरूपनिरूपित-

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः ।

१ क. °न्वार्थानु ।

कार्यत्वस्य स्वस्वविशिष्टत्वेनैवावच्छेदादननुगमालीलोन्मादस्थलीयप्रवृ-
त्तावश्यक्लृप्तनियतपूर्ववर्तिताकहर्षोन्मादविशेषादेरेवानन्यथासिद्धत्व-
मात्रकल्पनेन निर्वाहादनन्तप्रयोजनेच्छाकल्पने गौरवात् । अत एव
'सोऽकामयत' इति श्रुतिर्विनैव फलेच्छां स्रष्टव्येच्छामात्रेण कर्तृत्वं भग-
वतो वदति। तस्यां चेच्छायां वीक्षणस्य तत्र च शक्तिविशेषेणेशस्य हेतु-
त्वम् । तयोः संबन्धश्चाव्याप्यवृत्तिरिति न प्रलये सृष्ट्यापत्तिः । अथ वा
सांख्यानामिवास्माकमपि प्रलये क्षणिकानां साम्यावस्थापन्नसत्त्वादि-
परिणामानां स्वीकारादीक्षणाव्यवहितपूर्वपरिणामस्यैवेक्षणहेतुत्वमिति
भावः ॥ ३३ ॥ (११)

ब्रह्मणः कर्तृत्वे कस्यचित्सुखं कस्यचिद्दुःखमिति वैषम्यं सृष्टसंह-
र्तृत्वान्निष्कृपत्वं च स्यात् । रागद्वेषवत्त्वाद्राजादेस्तादृशं वैषम्यं सृष्टसंह-
र्तृत्वं च संगच्छते न त्वीशस्य वीतरागद्वेषत्वादिति प्रत्याह—

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा
हि दर्शयति ॥ ३४ ॥ इति ।

सापेक्षत्वात्सुखदुःखसंहारेषु पुण्यपापे अपेक्ष्यैवेशस्य कर्तृत्वान्न तस्य
वैषम्यनैर्घृण्यदोषः । तथा च भोक्तुः कर्मैव सुखदुःखादिनियामकं न तु
कर्तुरीशस्य रागद्वेषादीति वैषम्यनैर्घृण्ये न रागद्वेषापादके इति भावः ।
ननु 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते ।
एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' [कौ० ब्रा० ३।८]
इति श्रुतेरीश एव सदसत्कर्म कारयिता । तथा च रागद्वेषापत्तिस्तदव-
स्थैवेत्यत आह—तथेति । नैवं हि यस्मात्तथा कर्मणोऽपि कर्मा-
पेक्षत्वं दर्शयति 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन' [ बृ०
३।२।१३ ] इत्यादिश्रुतिः । तथा च पूर्वपूर्वकर्मसदसत्त्वमेवोत्तरोत्तरकर्म-
सदसत्त्वनियामकं न त्वीश्वरस्य रागद्वेषादिरिति भावः ॥ ३४ ॥

न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥ इति ।

'सदेव सौम्येदमग्र आसीत' [ छा० ६।२।१ ] इत्यवधारणात् ।
प्रलये ब्रह्मभिन्नं कर्म वर्तत इति विभागाभावान्न कर्मापेक्षा सृष्टिरिति

१ ख. 'दनु' । २ क. 'वृत्तक्ल' । ३ क. 'स्यात्वादि' ।

चेन्न कर्मणामनादित्वात्सृष्टिप्राक्कालवृत्तित्वात् । उक्तश्रुतौ नामरूपाभिव्यक्तेरेव व्यवच्छेद्यत्वात् । ॥ ३५ ॥

उपपद्यते चाप्युपलभ्यते च ॥३६॥ इति ।

पूर्वसृष्टिकाले कृतत्वात्कर्मणां प्रलयवृत्तित्वमुपपद्यते । उपलभ्यते च सृष्टेरनादित्वं 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' [ ऋ० सं० १०।१५०।३ ] इत्यादि श्रुतौ 'न रूपमस्येह तथोपलभ्यते नान्तो न चाऽऽदिः [ भ० गी० १५।३ ] इत्यादिस्मृतौ च । सुखदुःखादिवैचित्र्यान्यथानुपपत्तिरपि तत्र मानम् । ईश्वरस्य वैषम्यादि स्वीकृतमपि न प्रत्यवायाद्यापादकमनहंकारत्वादेव ।

'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ '

[ भ० गी० १८ । १७ ]

इति स्मृतेः । ईश्वरस्य कारणत्वं च श्रौतत्वान्न पर्यनुयोज्यमित्यादि चकारयोरर्थः ॥ ३६ ॥ (१२)

तथाऽपि निर्गुणत्वात्कथं ब्रह्मोपादानं तत्राऽऽह—

सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ इति ।

निर्गुणेऽपि सर्वेषां धर्माणामध्यस्तानामुत्पत्त्युपपत्तेः । समवायस्थानीयतादात्म्यसंबन्धेन जन्यं सत्प्रत्येव द्रव्यत्वेन कारणत्वाङ्गीकारात् । अविद्याया अपि द्रव्यत्वे बाधकाभावात् । तत्साधारणजात्यन्तरस्य चावच्छेदकत्वकल्पनात् । आध्यासिकेन विषयतारूपसंबन्धेन कार्योत्पत्त्यधिकरणे ब्रह्मणि न गुणत्वापेक्षा । न चैवं ब्रह्मण उपादानत्वं पारिभाषिकं स्याद्देवेति वाच्यम् । आध्यासिकविषयतासंबन्धो हि समवायस्थानीयसंबन्धवत्तादात्म्यमेव । तथा च तादात्म्यसंबन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वरूपमुपादानत्वमविद्यामिव ब्रह्मण्यक्षतम् । न च ब्रह्मसत्ताया कार्यस्य समवायस्थानीयतादात्म्यसंबन्धानङ्गीकारे घटः सन्निति सामानाधिकरण्येन धीर्न स्या-

---

१ क 'स्य नाऽन'। २ ख 'भ् । त्रि'।

दिति वाच्यम् । आध्यासिकतादात्म्यसंबन्धस्यैव तन्नियामकत्वादिति भावः ॥ ३७ ॥ ( १३ )

इति द्वितीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

अथ द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

वेदान्तवाक्ययोजनासहायतया प्रधानादिसाधकास्तर्काः प्रथमे प्रत्युक्ता द्वितीये तु स्वातन्त्र्येण तत्साधकांस्तान्प्रतिवक्ति । तत्र शब्दादिविषयमात्रं सुखदुःखमोहात्मकम् । य एव विषय एकस्य सुखतया भासते स एवान्यस्य दुःखतयाऽन्यस्य मोहतया । एवं च तदुपादानपरम्पराऽपि सुखाद्यात्मिका तथाविधयावदुपादेयकत्वादित्यनुमाने प्रधानं सुखदुःखमोहात्मकं सत्त्वरजस्तमोरूपं जगदुपादानं न ब्रह्मेति प्रत्याह—

रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥ इति ।

( * उक्तानुमानेन परस्येष्टसाधकं तादृशत्रिगुणात्मकेन चेतनानधिष्ठितेन जगतो रचनानुपपत्तेः ) तथा च चेतनाधिष्ठितं तादृशमादायार्थान्तरम् । चकाराच्चेतनानधिष्ठितसाधने सत्प्रतिपक्षादिः ॥ १ ॥

प्रवृत्तेश्च ॥ २ ॥ इति ।

प्रवृत्तिर्गुणानां साम्यावस्थातः प्रच्युतिस्तस्या अनुपपत्तेरिति चकारादनुपज्यते । चेतनाधिष्ठानमन्तरेणाचेतनस्य व्यापारादर्शनादिति भावः ॥२॥

पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥ इति ।

यथा चेतनेनानाधिष्ठितमपि दुग्धं क्षरति, अम्बु च निम्नाभिमुखं चलति तथा प्रधानं परिणमत इति चेन्नेत्यनुपज्यते । यतस्तत्रापि चेतनाधिष्ठानमस्ति । वत्सस्नेहेन गोव्यापाराधिष्ठितस्यैव दुग्धस्य क्षरणात् । जलादौ चाधिष्ठातृदेवतायाः सत्त्वात् । 'पृथिवीमन्तरो यमयति' ( बृ० ३ । ७ । ३ ) 'आपोऽन्तरो यमयति' ( बृ ३ । ७ । ४ ) 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः ।

---

१ ख. नेन प्र° । २ ख. 'नाधि° ।

श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्याः ' ( बृ० ३ । ८ । ९ ) इति श्रुतेः । रथादिस्थले तथादृष्टत्वेन दृष्टानुसारेणादृष्टस्य कल्प्यत्वाच्च ॥ ३ ॥

व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ इति ।

व्यतिरेकस्याऽऽधिक्यस्य सृष्टेः प्राग्गुणेष्वदर्शनात्साम्यस्यैव दर्शनात्त्रिगुणात्मकं प्रधानं महदादिरूपेण कदाचित्परिणमते कदाचिन्नेत्यत्र नियामकाभावः ॥ ४ ॥

यथा तृणादिरन्यानपेक्षोऽपि कदाचित्क्षीरादिरूपेण परिणमते तथा प्रधानं तत्राऽऽह—

अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ इति ।

क्षीरादिपरिणामस्यान्यत्र बलीवर्दादावभावात् । चकाराद्धेन्वादिजठरसंबन्धस्यैवापेक्ष्यत्वान्नानपेक्षतायां तृणादिर्दृष्टान्तः ॥ ५ ॥

अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ इति ।

स्वत एव प्रधानस्य परिणामाभ्युपगमेऽपि प्रयोजनस्य दुर्वचत्वेनाभावात् । पुरुषस्य भोगो न प्रयोजनम् । त्वन्मते पुरुषस्यानाधेयातिशयत्वेन भोगाभावात् । नापि मोक्षः सिद्धत्वात् । अन्यथाख्यात्यनिर्वचनीयख्यात्योस्त्वयाऽनङ्गीकाराद्भोगारोपस्याप्यसंभवात् ॥ ६ ॥

पुरुषाश्मवदिति चेत्तथाऽपि ॥ ७ ॥ इति ।

यथा पङ्गुः पुरुषोऽन्धं प्रवर्तयति यथा वाऽश्माऽयस्कान्तो लोहमेवं पुरुषः प्रवृत्तिशक्तिहीनोऽपि दृक्छक्तिहीनं प्रधानमिति चेन्नेत्यनुषङ्गः । तथाऽप्यर्थाभावाद्धेत्वभावात् । वागादिना पङ्गोः सांनिध्येनायस्कान्तस्य प्रवर्तकत्वात् । पुरुषस्य वागाद्यभावात् । नित्यसंनिधानेन नित्यं प्रवर्तकत्वापत्तेश्च ॥ ७ ॥

अङ्गाङ्गिभावेन गुणानामेवास्तु प्रवर्तकत्वं तत्राऽऽह—

अङ्गित्वानुपपत्तेश्च ॥ ८ ॥ इति ।

गुणानां साम्यावस्थारूपप्रलयस्वरूपनाशप्रसङ्गेन पूर्वमङ्गाङ्गिभावानभ्युपगमात् । सृष्ट्यारम्भसमये वाच्यस्य तस्य स्वतः कारणतश्च दुर्वचत्वा[1] । कोऽङ्गी किमङ्गमित्यविनिगम्यत्वाच्च ॥ ८ ॥

१ सं. °क्षतायां तृ° ।

अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥ इति ।

चलं च गुणवृत्तमिति सिद्धान्तात् । क्षणिकत्वेऽस्यैव परमकाष्ठापन्नचलत्वरूपत्वाचैतन्यान्यमात्रस्य प्रतिक्षणं परिणामाङ्गीकारेण प्रलये गुणानां साम्यस्वरूपनाशभीत्योद्रिक्तानुद्रिक्तरूपविजातीयपरिणामानङ्गीकारेऽप्यनुद्रिक्तमात्ररूपसजातीयरूपेण गुणानां प्रतिक्षणं परिणामात्सृष्ट्यारम्भक्षणजातपरिणामस्यैव महदादिपरिणामनियामकत्वानुमितावपि तस्य नियामकपरिणामस्याचेतनत्वेन ज्ञशक्तिवियोगात्स्वतःप्रवृत्त्यनुपपत्तितादवस्थ्यम् । चकारात्तस्य नियामकस्य प्रागसत्त्वे सत्कार्यवादहानिः सत्त्वे च पूर्वमपि महदादिः स्यादभिव्यक्तिश्च दुर्वचेत्यादि ॥ ९ ॥

विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ ( १ ) इति ।

त्वङ्मात्रं बुद्धीन्द्रियं कर्मेन्द्रियपञ्चकं मनश्चेति सप्तेन्द्रियाणि क्वचित्बुद्धीन्द्रियाण्यपि पञ्चेत्येकादश क्वचिन्महतस्तन्मात्राणि क्वचिदहंकाराच्च क्वचिदिति स्वग्रन्थेष्वेव विप्रतिषेधाद्विवादात्सांख्यानां मतमसमञ्जसम् । चकाराद्विषयाणां सुखाद्यात्मकत्वे मानाभावः । आन्तरत्वानुभवबाधः सर्वान्प्रत्यविशेषापत्तिः सुखं नष्टमुत्पन्नमिति विषयसत्त्वेऽप्यनुभवबाधश्च । न च स्वमते मायाया ब्रह्माधिष्ठानमीक्षणरूपमपेक्ष्य परिणामाङ्गीकार ईक्षणरूपे मायापरिणाम ईक्षणान्तरं वाच्यमित्यनवस्था । संनिधानमात्रं चेदधिष्ठानं तदा सदा परिणमेतेति वाच्यमीक्षणपरिणामस्येक्षणरूपाधिष्ठाननैरपेक्ष्यस्य 'सदेव सोम्येदमग्र आसीत्' इत्यनन्तरं 'स ऐक्षत' इति श्रुत्यैव बोधितत्त्वेन परिणामान्तरस्यैवेक्षणापेक्षाङ्गीकारात् । कदाचिदेवेक्षत इत्यस्येश्वरस्वातन्त्र्यस्यापि श्रुत्यैव बोधितत्त्वेनापर्यनुयोज्यत्वात् । अव्याप्यवृत्तिशक्त्यादिना समाहितत्वाच्च । प्रधानस्य चाचेतनस्य दृष्टानुसार्यनुमानमात्रेणोन्नेयस्य दृष्टविरुद्धत्वासंभवात् । मायातदीक्षणहिरण्यगर्भाणामेव प्रधानमहदहंकारनामस्थापनेऽपीक्षणेऽस्मत्संमताध्यासिकसंबन्धानङ्गीकारेण त्वया तस्या-

१ ख. 'वृत्तिनिमित्त' । २ ख. 'कत्वस्यै । ३ ख. 'लरू°' । ४ ख. 'भीत्याऽनुद्रिक्तमात्ररू' । ५ ख. °रेऽप्युद्रिक्तानुद्रिक्तरू' । ६ क. 'पि चेत्ये । ७ क. 'न्थेषु वि° । ८ ख. 'यायां ब्र°' । ९ ख. 'णाङ्गी°' ।

स्वतन्त्रपुरुषाधिष्ठानरूपत्वेन वक्तुमशक्यत्वात् । अहंकारसृष्ट्यनन्तरमूतसृष्टेः श्रुतिविरुद्धत्वादिति दिक् ॥ १० ॥ ( १ )

प्रधानधर्मस्य सुखाद्यात्मकत्वस्य कार्येऽनन्वयात्तस्यानुपादानत्वमुक्तम् । ब्रह्मणोऽपि तर्हि प्रपञ्चे चैतन्यगुणानन्वयादनुपादानत्वं स्यात् । उपादानविशेषगुणानामुपादेये गुणारम्भकत्वनियमादिति प्रासङ्गिकं प्रत्याह—

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥(२) इति ।

ह्रस्वाद्द्व्यणुकात्साक्षात्परिमण्डलात्परमाणोर्द्व्यणुकद्वारा महद्दीर्घत्वपरिमाणकं त्र्यणुकादि जायते । तत्र यथा वैफल्यात्प्रत्यक्षादिविरोधाच्च द्यणुकपरमाणुगतमणुत्वं न तत्कार्ये सजातीयगुणमारभत एवं चैतन्यमपीत्यर्थः । ननु परमाणुभ्य एव त्र्यणुकमुत्पद्यताम् । तथा च ह्रस्वपरिमण्डलाभ्यामित्यसंगतम् । किंच परमाणुभ्यां द्यणुकस्येव द्व्यणुकाभ्यां त्र्यणुकस्योत्पादे तत्र कथं महत्त्वं कारणमहत्त्वबहुत्वप्रचयानां तद्धेतुत्वात् । द्यणुकावयवयोर्निरवयवत्वेन प्रशिथिलावयवसंयोगस्य प्रचयस्य द्यणुकेऽभावादिति चेन्न । महद्द्रव्यस्य परमाणुभ्यामेवाऽऽरम्भे घटभङ्गे कपालादिर्न गृह्येतानारब्धत्वात् । महत्त्वोत्पत्त्यर्थमेव द्व्यणुकेभ्य एव त्र्यणुकस्वीकारात् । तथा च रूपादेर्विशिष्यैव कारणत्वाच्चैतन्यस्य कल्पितभेदेन धर्ममात्रत्वेन गुणत्वाभावाच्च न कार्ये चैतन्यारम्भकत्वमिति भावः ॥ ११ ॥ ( २ )

नन्वस्तु परमाणुरुपादानमीश्वराधिष्ठितत्वान्न ब्रह्माविद्याया उपादानान्तरस्यासजातीयत्वात् । ब्रह्मणि त्वया निरवयवत्वेन संयोगानङ्गीकारेणाऽऽरम्भकसंयोगासंभवादिति प्रत्याह—

उभयथाऽपि न कर्मातस्तदभावः ॥ १२ ॥ इति ।

परमाणुकर्म प्रति न दृष्टं निमित्तं प्रलये प्रयत्नाद्यभावात् । नाप्यदृष्टं चेतनाधिष्ठितत्वस्य तत्सहकारिणः परमाणावभावात् । प्रलये जीवानां चैतन्याभावादीश्वराधिष्ठानस्य चेश्वरसाधकश्रुत्यनुसारेण मायायामेवाङ्गीकर्तुमुचितत्वात् । अत उभयथा दृष्टमदृष्टं वा निमित्तमपेक्ष्य न कर्म संभवत्यतस्तस्य परमाणोरारम्भकसंयोगाभावेनोपादानत्वस्याभावः । किंच

---

१ ख. 'णुत्वं जा' । २ क. 'म् । प' । ३ ख. 'दणुत्व । ४ ख. 'णुभ्य एवाऽऽ ।

परमाणोः संयोगो न प्रत्यक्षोऽनुमानेन च दृष्टानुसारिणाऽवयवावच्छिन्नो वाच्यः। तथा च सावयवत्वात्परमाणोर्जन्यत्वादि स्यात्। न च जन्यद्रव्यं प्रति संयोगस्याऽऽरम्भकतायाः क्लृप्तत्वात्तदन्यथानुपपत्त्या स दिगाद्यवच्छिन्नोऽनवच्छिन्न एव वाऽस्त्विति वाच्यम्। अन्यथानुपपत्त्यभावात्। तथा हि घटादिकार्यं प्रति संयोगस्य नानुगतमेकं कारणत्वमेकस्मिन्नेव कपाले तत्तत्प्रदेशावच्छिन्नसंयोगेभ्यस्तत्तद्द्रव्योत्पत्तेर्नियन्तुमशक्यत्वात्किंतु घटत्वाद्यवच्छिन्नं प्रति जनकतावच्छेदकतया नाना वैजात्यानि कल्प्यानि। तानि च घटादिस्थले स्वावयवसंयोगेष्वेव तदुत्तरमेव घटादेरनुभूयमानत्वात्। दुग्धजलघृतादेर्दधिहिमद्रुतादिरूपेण परिणामस्थले स्वावयवक्रियादिष्वेव तत्र संयोगपरम्पराधीनावयवपरम्परोत्पत्तिक्रमेण द्रव्योत्पत्तिकल्पने गौरवात्तथाऽननुभवाच्च । न हि तावद्देशव्यापिदीपप्रभादेरवयवपरम्परोत्पत्तिक्रमेणोत्पत्तिः केनाप्यनुभूयते। कार्यतावच्छेदकं तु तादृशक्रियायास्तादृशसंयोगहेतुत्वमतवत् । तथा च प्राथमिकसृष्टिस्थल आकाशं प्रति मायापरिणामविशेषस्येक्षणस्य वाय्वादिकं प्रत्याकाशादेश्च श्रौतं कारणत्वमव्याहतं स्यात्। कारणतावच्छेदकवैजात्यस्य तत्र तत्र स्वीकर्तुं शक्यत्वात्। अत एव भावकार्यस्यासमवायिकारणत्वनियमो न भग्नः। उपादानीभूतमायायां तादात्म्येन प्रत्यासन्नस्येक्षणादेरसमवायिकारणत्वस्यैव श्रुत्योक्तत्वात्। त्रुटिपर्यन्तकार्यं तु पञ्चीकरणानन्तरमवयवसंयोगात्क्रियातो वा यथायोगं जायते। दण्डाद्यभिघातजक्रियया स्वाश्रयघटाद्यवयवकपालादिकं विनाश्य स्वोपादानाविद्याया एव नाशोत्पत्तिक्षणोत्पत्तेरुत्पादनात्। तदुक्तं विष्णुपुराणे—

> मही घटत्वं घटतः कपालिका
>   कपालिकाचूर्णरजस्ततोऽणुः ।
> जनैः स्वकर्मस्तिमितात्मनिश्चयै-
>   रालक्ष्यते ब्रूहि किमत्र तत्त्वम् ॥ इति ।

अन्यथा पूर्वमपि त्रुटेस्तत्र स्वीकारे तदीयपूर्वसंयोगतन्नाशक्रियाविभागादिकल्पने गौरवम्। न चैवं क्रियारूपस्यासमवायिकारणस्य नाशात्त्रुटिनाशापत्त्या क्षणिकत्वापत्तिः कपालादीनां च तत्क्रियया नाशानुपपत्तिस्तदसमवायिकारणनाशत्वाभावादिति वाच्यम् । यतो नासमवायिकारणनाशस्यास्माभिर्द्रव्यनाशकत्वमुच्यते । परं तु द्रव्यनाशकताव-

---

१ ख. °रणाव° । २ ग. °याया स्°

च्छेदकमेकं वैजात्यं क्रियास्वेव । अत एव नीलादिनां जातिवदखण्ड-नित्यैकत्वेऽपि पाकस्थले तेजोभिघाततया त्रुटिक्रियया स्वाश्रयं त्रुटिं विनाश्य त्रुट्यन्तरं जन्यते । तत्रानुभवबलाद्रूपाद्यन्तरस्यैव संबन्धोऽङ्गी क्रियते । यथा घटे घटत्वस्यैव संबन्धो न पटत्वादेर्जात्यन्तरस्येति । न च तादृशक्रियायाः पूर्वरूपादिकं विनाश्य रूपाद्यन्तरोत्पादकत्वमेव कुतो नाङ्गी क्रियत इति वाच्यम् । रूपादीनां बहूनामुत्पत्तिविनाशयो-स्तत्तन्नानाकारणत्वस्य च कल्पनागौरवाल्लाघवादेकं द्रव्यं प्रति नाशक-त्वमन्यं प्रति हेतुत्वं च कल्प्यते विनश्यदवस्थयाऽपि क्रियया द्रव्यो-त्पादे बाधकाभावात्क्रियागतस्य जनकतावच्छेदकस्यैव नाशकत्वावच्छे-दकत्वाज्जात्यन्तरकल्पनागौरवस्याप्यभावात् । न च पूर्वद्रव्यनाशक्षण एव द्रव्यान्तरमुत्पाद्यतां ततश्च पूर्वं स्वाश्रयनाशाभावेनानष्टक्रिययोपजा-तद्रव्यस्य नाशापत्त्या क्षणिकत्वापत्तिरिति वाच्यम् । स्वोपादानत्वसं-बन्धेनैव विजातीयक्रियाया नाशकत्वस्वीकारादसाधारणोपादानत्ववि-शेषान्न तस्या अविद्यानाशकत्वम् । न च क्रियायास्तादात्म्येन द्रव्यज-नकत्वे स्वनाश्यद्रव्यासंयुक्तदेशावच्छेदेनाप्यविद्यायां द्रव्योत्पादकत्वा-पत्तिरिति वाच्यम् । स्वनाश्यद्रव्यसंबन्धित्वोपलक्षितदेशनिष्ठं. यत्स्वज-न्यनाशवत्त्वं तेन संबन्धेनैव द्रव्यजनकत्वस्वीकारात् । तादृशदेशस्तु त्रुट्यवयवो भूतलादिर्वेत्यन्यत् । एवं च पूर्वद्रव्यनाशोत्पत्तिक्षणे द्रव्यो-त्पत्तेः प्रसक्तिरपि न तत्पूर्वक्षण उक्तसंबन्धेन क्रियाया अभावादित्या-द्यभिप्रेत्यैव भगवता भाष्यकारेणोक्तं कार्यारम्भोऽपि नावयवसंयोगेनैव केवलेनेति । न च त्रुटेः पञ्चीकृतत्वेऽष्टांशत्वापत्त्या सावयवत्वापत्ति-रिष्टापत्तौ च तदंशानामपि पञ्चीकृतत्वं वाच्यमपञ्चीकृतस्येदानीमसत्त्वा-देवं तदंशस्यापीत्यनवस्थेति वाच्यम् । प्राथमिकभूतपञ्चकान्मिलितात्त-त्तद्वैलक्षण्यविशिष्टत्वेनोपलभ्यमाना व्यवहारयोग्याः पञ्च परिणामा भौतिकमूलीभूता जायन्ते । तत्र चानुभवानुसारेण व्यवस्थितं पृथिवी-त्वादीत्यस्यैव पञ्चीकरणशब्दार्थत्वे सर्वेषां द्रव्याणां सांशत्वानङ्गीकारा-दिन्द्रियादीनामपञ्चीकृतानामिदानीमपि सत्त्वादपञ्चीकृतस्येदानीमप्र-त्यक्षत्वमात्राङ्गीकारेण त्रुटेरष्टांशत्वे क्षतिविरहाच्च । तेषामंशानामुक्त-रीत्या क्रियोचयवाजन्यत्वस्यानंशत्वस्य च संभवात्परमाण्वादिवत्त्रुटेरनं-

१ ख. °नष्ट क्रि° । २ ख. °नद्रव्यासंबन्धित्वो° । ३ ख. °त्वेऽप्यंश° । ४ ख. °त्वेन स° । ५ ख. °याज°।

शक्यसंभवाच्च । ततश्च 'अतोऽन्यदार्तम्' [ बृ० ३।४।२ ] इति श्रुतेः 'रूपादिमत्त्वात्' [ ब्र० सू० २।२।१५ ] इत्यादिसूत्रस्य च नासंगतिर्न चोक्तदोष इति दिक् । यदि तु पञ्चीकरणादिकं यथाश्रुत्यर्थरूपं गृह्यते तदा 'स एतमेव सीमानं विदार्य' [ ऐ० ३।१२ ] इत्यादेः श्रुतेरपि यथाश्रुतार्थग्रहणापत्तिः ॥ २ ॥

समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ इति ।

कारणे कार्यस्य समवायाभ्युपगमादपि न परमाणुवादो युक्तः । असंबद्धसमवायस्य संबन्धत्वासंभवात् । स्वरूपसंबन्धेन तस्य संबन्धत्वाङ्गीकारे कार्यस्यापि स्वरूपसंबन्धसंभवात् । कार्यस्येव समवायस्यापि समवायो वाच्यस्तस्यापि समवायान्तरमेवमनवस्थितेः । चकारात्समवायस्यैकत्वे वायावपि रूपादिमत्त्वं स्यात् । तत्प्रतियोगिकत्वविशिष्टतदनुयोगित्वस्याधिकरणत्वस्य वाऽतिरिक्तस्याङ्गीकारे समवायनानात्वमेवोचितम् । रूपादि नष्टमुत्पन्नमित्यादिवत्तत्समवायो नष्ट उत्पन्न इत्यप्यनुभवादनित्यत्वं कपालद्वयं घट इत्यादिप्रत्ययानिर्वाहकत्वं च । अत एव सिद्धान्ते तादृशप्रत्ययनिर्वाहकोऽक्लृप्तसमवायस्वाश्रयापेक्षया क्लृप्ततादात्म्यत्वाश्रयत्वेन लघुभूतस्तादात्म्यसंबन्धोऽनवस्थादिदोषैरनिर्वचनीयः समवायस्थानीयोऽभ्युपेयत इति भावः ॥ १३ ॥

नित्यमेव च भावात् ॥ १४ ॥ इति ।

किंच यद्यदृष्टं कर्मोत्पत्तिनिमित्तं तदा तस्य नित्यमेव स्वाश्रयात्मसंयोगेन कारणतावच्छेदकसंबन्धेन परमाणुषु सत्त्वात्प्रलयेऽपि क्रियारम्भकसंयोगयोरापत्तिः । यद्वा भावात्प्रलये परमाणवो क्षोभूयमाना इति भवत्सिद्धान्तान्नित्यमेव प्रलये कर्मणस्त्वया भावाभ्युपगमादारम्भकसंयोगापत्तिः । क्रियाविशेषस्य नियामकत्वे तन्नियामकस्य दुर्वचत्वात्तस्यैव द्रव्यारम्भकत्वसंभवेन संयोगस्यानावश्यकत्वापत्तेश्च । किंच परमाणुनिष्ठे संयोगे दिक्संबन्धस्यावच्छेदकत्वे तत्राप्यन्यदवच्छेदकमवश्यं वाच्यम् । अन्यथा तस्य परमाणौ व्याप्यवृत्तित्वेनावच्छेदकत्वानुपपत्तेः । तथा चानवस्थामूलादेरवच्छेदकत्वेऽपि तदापत्तिर्नास्माकं प्रतिकूलौ संयोगमात्रस्य मिथ्यात्वसाधकत्वादिति भावः ॥ १४ ॥

---

१ ख.-वाच्यादार्त । २ ख. 'गिकत्वविशिष्टतदनुयोगित्व' ।

रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥ इति ।

अपि च पृथिव्यादेर्नित्यत्वाणुत्वादेर्विपर्ययो रूपादिमत्त्वाद्घटादौ सहचारदर्शनात् । न चाप्रयोजकत्वम् । लाघवादितर्कसत्त्वात् । तथा हि नीलादिगुणा घटत्वादिजातय इवैकैका अखण्डाः सर्गादौ जायन्ते तदन्ते च नश्यन्तीति लाघवेनाङ्गी क्रियते । न च तेषां नित्यत्वम् । 'यतो वा इमानि भूतानि जायन्ते' 'यत्प्रयन्त्यभिसंविशन्ति' [ तै० ३।१ ] इत्यादिश्रुत्या भूतपदोपलक्षितानां श्रुतियुक्तिसिद्धानादिताकाविद्यादिषड्भिन्नानामुत्पन्नानामविद्यादिभिन्नत्वावच्छेदेन ब्रह्मजन्यताया उक्तत्वात् । अत एवेमानीति पदमविद्यादिषडन्यार्थकत्वेन सार्थकम् । अन्यथा भूतपदस्योत्पन्नार्थकत्वेनोत्पन्नत्वावच्छेदेन ब्रह्मजन्यताया लाभेऽपि नीलादीनामाकाशादीनामिवोत्पन्नत्वे वादिनां विवादात्तेषु तदसंभवात् । इमानीत्यनेन षडन्योक्तौ तु षडन्यत्वस्योत्पन्नमात्रवृत्तित्वेन कार्यतावच्छेदकत्वं युक्तं न तु भूतपदरूढ्यर्थपञ्चभूतमात्रवृत्तिभूर्तत्वादेरीशवीक्षणादौ जन्यदृश्यमात्रनिष्ठे चित्तादात्म्ये च तदसंभवादिति ज्ञापनाय भूतपद(*मपि सार्थकम् । पञ्चभूतवृत्तिमात्रं भूतत्वम् । ततश्च पार्थिवत्रुटेः) तेजोभिघातादिना पाकस्थल उक्तरीत्या नाशोऽवश्यं वाच्यः । अन्यथा पाकोत्तरं पूर्वसिद्धनीलाद्यनुवृत्तिप्रसङ्गात् । जलीयादित्रुटेरपि प्रलयवृत्तित्वे मानाभावः । 'आत्मन आकाशः' [ तै० २।१।१ ] इत्यादिश्रौतसृष्टावाद्यकार्यस्य त्रुट्यनारभ्यत्वात्प्रलये त्रुटीनामनन्तसंयोगादिस्वीकारे गौरवम् । न च त्रुटेः पञ्चीकरणानन्तरमेव क्रियाविशेषेणोत्पत्तावपञ्चीकृतभूतावयवत्वं त्रुट्यारभ्यावयवपरम्पराक्रमेण द्रव्योत्पत्त्यनङ्गीकारेण द्रव्यावयवत्वमेव वा न स्यादिति वाच्यम् । साक्षात्त्रुटिसमवेतद्रव्यं प्रत्येव त्रुटेरवयवाङ्गीकारात् । न चान्यत्राप्यवयवत्वमनुभूयत इति वाच्यम् । तस्यावच्छिन्नाकाशवत्कल्पितभेदमात्रविषयत्वात् । अन्यथा तत्तद्द्रव्यावयवीभूतानन्तत्रुटितत्तद्गतानन्तसंयोगादिकल्पनागौरवादनन्तावयवघटितावयवत्वस्य युगसहस्रेणापि दुर्ज्ञेयत्वा-

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः ।

१ ख. तलाभासा । २ ख. °कत्वयु° । ३ क. °क भूतपद न । ४ ख. °तत्स्पर्शे° । ५ क. °पदम् । त्रुटेर्नित्यत्व न युक्तम् । ते° ।

त्रुटेरवयवाङ्गीकारे तस्याप्यवयव इत्यनवस्था स्यात् । अतः सिद्धः पृथिवीत्वाद्यवच्छेदेन नित्यत्वाणुत्वादिविपर्ययः ॥ १५ ॥

ननु त्रुटयो नित्या अत्यन्तापकृष्टमहत्त्वपरममहत्त्वान्यतरवत्त्वादात्मवत्तत्राऽऽह—

उभयथा च दोषात् ॥ १६ ॥ इति ।

उभयथा त्रुटिपूक्तहेतोः सत्त्वे तेनैव हेतुनाऽऽत्मदृष्टान्तेन ज्ञानेच्छादीनामप्यनुमानापत्तिरसत्त्वे स्वरूपासिद्धिः । सिद्धान्ते तु सत्त्वेऽपि 'अस्थूलमनणु' [ बृ० ३ । ८ । ८ ] इत्यादिश्रुत्याऽऽत्मनः परिमाणनिषेधात्साधनवैकल्यमिति भावः ॥ १६ ॥

मुनिप्रणीतशास्त्रस्य कथमप्रामाण्यं तदाह—

अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ ( ३ ) इति ।

शिष्टैर्मन्वादिभिरपरिगृहीतत्वात्तत्स्मृतितन्मूलप्रत्यक्षश्रुतिविरुद्धत्वाद्देहादिभिन्नत्वेनाऽऽत्मप्रतिपादनमात्रे तात्पर्येण पृथिव्यादीनां नित्यत्वाद्यनपेक्षा प्रामाण्याभावः । चकाराद्विशेषस्येव नित्यद्रव्यस्य स्वत एव व्यावर्तकत्वसंभवाद्ब्रह्मसत्तयैव सद्व्यवहारोपपत्तेरभावाद्यवृत्तिसत्तासामान्येनाभावादौ सद्व्यवहारानुपपत्तेः । घटः सन्नभावः सन्नित्येकाकारप्रतीत्योः क्व साक्षात्क परम्परासंबन्ध इति वक्तुमशक्यत्वाद्द्रव्यत्वगुणत्वादेरननुभवाच्च विशेषसत्ताद्रव्यत्वाद्यप्रामाणिकवस्तुघटितप्रक्रियाबोधकत्वात्प्रक्रियांशे न तच्छास्त्रस्य प्रामाण्यं किंत्वात्मनो देहादिभिन्नत्व इति ॥ १७ ॥ ( ३ )

ननु स्थिराणां परमाणूनामारम्भकत्वे 'नित्यमेव च भावात्' [ ब्र० सू० २ । २ । १४ ] इत्यादिदूषणमुक्तमस्तु परमाणुभिः क्षणिकैः संघातवादो वैनाशिकानाम् । न च चेतनाधिष्ठानानुपपत्त्या संघातोऽपि कथमिति वाच्यम् । क्षणिकानां मध्ये येभ्यः कार्योपधानं तेषामनतिप्रसक्तत्वेन चेतनाधिष्ठानानुपयोगाद्गिरिदर्यामङ्कुराद्युत्पत्त्या व्यभिचाराच्च । सन्मात्रं च क्षणिकमर्थक्रियाकारित्वाद्यन्नैवं तन्नैवं यथा खपुष्पम् । तथा च परमाणूनां चतुर्विधानां खरस्नेहोष्णत्वेरणस्वभावानां पृथिव्यादिबाह्यरूपेण पञ्चस्कन्धानां चाध्यात्मरूपेण संघातो जायते । सविषयाणीन्द्रियाणि रूपस्कन्धः । अहमितीदमिति च निर्विकल्पकं विज्ञा-

नस्कन्धः। सुखदुःखे वेदनास्कन्धः। सविकल्पकं संज्ञास्कन्धः। रागादिधर्माधर्मौ च संस्कारस्कन्धस्तत्राऽऽह—

समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ इति।

उभयहेतुके परमाणुहेतुके स्कन्धहेतुके च समुदाये संघाते वक्तव्ये तदप्राप्तिः संघातभावानुपपत्तिः संहन्तुरभावात्। संघातिनामचेतनत्वात्। चित्ताभिज्वलनस्य संघातोत्तरकालीनत्वात्। स्थिरस्य चेतनस्याङ्गीकारेणाग्रिमक्षणवर्तिनं स्वनिष्ठं फलसंबन्धमुद्दिश्य पूर्वक्षणवर्तिनश्चेतनस्य प्रवृत्तिरित्यस्य वक्तुमशक्यत्वात्। अपिशब्दात्संघातो दुर्वचस्तस्य संयोगविशेषत्वे मूर्ततया पटादीनां प्रत्यक्षादिबाधः। अवयविरूपपदार्थान्तरत्वेऽस्मदिष्टसिद्धिः ॥ १८ ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥ इति।

अथ सन्मात्रं क्षणिककार्यदुःखशून्यमिति भावनया विशुद्धविज्ञानसंतानात्तिर्मोक्षः। क्षणिककार्यदुःखशून्येषु स्थिरनित्यसुखवस्तुबुद्धिरविद्या तया रागादि ततः प्रवृत्तिस्ततोऽदृष्टं ततो विज्ञानात्मनो गर्भाशयद्रव्ये वृत्तिलाभो विज्ञानरूपस्ततो गर्भद्रव्यस्य कललादित्वं ततः शरीरं ततो विषयज्ञानं सुखादिकं विषयेच्छा तदुपादाने प्रवृत्तिर्गर्भाच्युतिर्मनुष्यत्वाद्यभिमानजरामरणादीति घटीयन्त्रवदितरेतरहेतुहेतुमद्भावादनिशमावर्तमाने संहतभावोऽपि नानुपपन्न इति चेन्न। अविद्यादीनामितरेतरमुत्पत्तिमात्रे निमित्तत्वात्तेषामपि क्षणिकत्वाच्चेतनस्यापि क्षणिकत्वेन स्वगतकालान्तरीयफलार्थप्रवृत्त्यदृष्टाद्यभावादुक्तप्रवाहस्यैवासंभवादचेतनसंहननस्य चेतनाधीनत्वनियमात्संघाते कारणासंभवो मात्रशब्दार्थः ॥ १९ ॥

उत्पत्तिमात्रनिमित्तत्वमपि क्षणिकवादे न संभवतीत्याह—

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ इति।

उत्तरोत्तरस्योत्पादसमये पूर्वपूर्वस्य नाशात्कार्याणामुपादानस्वभावानुगत्यसंभवः। पूर्वक्षणमात्रसत्त्वेन हेतुत्वेऽनन्तानां तादृशां तदापत्तेरितरकारणसत्त्वेऽपि यदसत्त्वे कार्यानुत्पादस्तथात्वस्य क्षणिकपक्षे वक्तुमशक्यत्वात्तत्पक्षे फलोपधायकस्यैव क्षणिकस्य कारणत्वेनेतरकारणसत्त्वे फलानुत्पादस्यासंभवाद्धूमादिसाधनत्वं ज्ञात्वा वह्न्यादेः सर्वजनी-

१ ख. 'ष्टं सुखादिकं'। २ ख. संघात'। ३ ख. 'त्वेनोपादानत्वेऽ'।

नोपादानानुपपत्तेः कार्यार्थं नानाकारणघटनानुपपत्तेश्च नोत्पत्तिमात्रनिमित्तत्वं क्षणिकानामिति भावः ॥ २० ॥

असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥ इति ।

किंचासति नश्यति कारणे कार्योत्पादस्वीकारे चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता जायन्त इति प्रतिज्ञायाः सिद्धान्तस्योपरोधो बाधः । अन्यथा तत्सिद्धान्तरक्षणार्थं कार्योत्पादपर्यन्तं कारणानुवृत्त्यङ्गीकारे द्वयोर्यौगपद्यं तथा च सर्वं सत्क्षणिकमिति सिद्धान्तभङ्गः । चक्षुरादीन्द्रियपञ्चकं तत्तद्गोलकस्वरूपमप्राप्यकार्यधिपतिप्रत्ययः, आलोकादिः सहकारिप्रत्ययः, नीलादिविषय आलम्बनप्रत्ययः, मनः समनन्तरप्रत्यय इति चतुर्विधान्हेतून्प्रतीत्य संबध्य चित्तस्याहमित्यालयविज्ञानप्रवाहरूपस्यान्तर्गता अपि विषयोपरागाधीनत्वेन कादाचित्कतया चित्तविकारत्वाचैत्तसंज्ञका वेदनाविज्ञानसंस्कारस्कन्धा उत्पद्यन्त इत्यस्योक्तवाक्यार्थत्वात्, प्रतीत्येत्यत्राऽऽनन्तर्यस्याविवक्षतत्वेऽपि हेतुकार्ययोः संबन्धमात्रस्यावश्यंविवक्षितत्वाद्भिन्नकालीनयोश्चासंबन्धात्सिद्धान्तभङ्गो बोध्यः ॥ २१ ॥

क्षणभङ्गमते बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकमित्यनेन भावानां बुद्धिपूर्वको नाशः प्रतिसंख्यानिरोधसंज्ञकस्तदन्यो नाशोऽप्रतिसंख्यानिरोधसंज्ञक आवरणाभावरूपमाकाशं चेत्यस्मात्त्रयादभावत्वान्निरुपाख्यादन्यद्वस्तुमात्रं क्षणिकमुक्तम् । तत्राऽऽकाशस्य तत्त्वं प्रतिवक्ष्यत्यन्ययोस्तु प्रत्याह—

प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥ इति ।

अप्राप्तिरसंभवः । तादृशनिरुपाख्यनाशो हि न संतानिनां घटादीनां तेषां स्वसंतानमध्ये प्रत्यभिज्ञानात् । नापि संतानानाम्[1] । मया प्रहरादिपर्यन्तं हि यस्य घटस्यैकत्वमुच्यते तस्य क्षणिकनानाघटव्यक्तिप्रवाहरूपसंतानत्वं त्वयोच्यते । तत्र च पूर्वपूर्वस्य क्षणिकस्योत्तरोत्तरक्षणिक इव चरमस्यापि क्षणिकस्य स्वसजातीयघटादिक्षणिकहेतुता वाच्या ।

---

१ क. °म् । मुद्गरप्र° ।

अन्यथा तस्यार्थक्रियाकारित्वरूपसत्त्वाभावेनालीकत्वापत्त्या तत्पूर्वक्षणिकस्यापि तज्जनकत्वासंभवेनालीकत्वमेवं तत्पूर्वस्यापीति तत्संतानमध्ये नैकमपि सत्यं स्यात् । अतश्चरमस्य हेतुताया आवश्यकत्वेनाविच्छिन्नकारणधारया संतानस्याविच्छेदात् । न च प्रत्यभिज्ञाया ज्वालादाविव सादृश्यं विषय इति वाच्यम् । पूर्वापरवृत्तिस्थिरधर्मं विना सादृश्यस्य दुर्वचत्वात् । न चैकसंतानारूढत्वात्तथा । संतान्यतिरिक्तस्य संतानस्य दुर्वचत्वात् ॥ २२ ॥

उभयथा च दोषात् ॥ २३ ॥ इति ।

किंचाविद्यादिनिरोधः सम्यग्ज्ञानात्तद्विनैव वा । आद्ये मीमांसकमते ज्ञानजनकस्य कालावच्छिन्नविषयकज्ञानजनकत्वनियमेन सर्वेषु ज्ञानविषयेषु कालभानवत्कारणस्य द्वितीयक्षणवृत्तिनाशप्रतियोगिकार्यजनकत्वमथवा जन्यप्रतियोगिमात्रं नाशे हेतुर्न त्वन्यदिति स्वी क्रियत इति सिद्धान्तहतिरन्त्ये ज्ञानोपायवैयर्थ्यमित्युभयथाऽपि दोषाद्धेयं तन्मतम् ॥ २३ ॥

आकाशे चाविशेषात् ॥ २४ ॥ इति ।

आकाशे निरुपाख्यत्वं न युक्तम् । वस्तुत्ववस्तूपरागयोः प्रतीत्या पृथिव्यादिभिरविशेषात् । न चानावरणमाकाशं दुर्वचत्वात् । प्रतिशब्द-शब्दितस्य शब्दस्य पृथिव्यादिवैशिष्ट्यं विनैवानुभूयमानस्य पृथिव्यादिप्रत्येकसमवेतत्वे विनिगमनाविरहात्तत्समवायित्वेनाऽऽकाशसिद्धेः । सौगतशास्त्रे ' वायुराकाशसंनिश्रयः ' ' निरोधद्वयमाकाशं च नित्यम् ' इत्यादिवाक्यस्योक्तत्वान्निरुपाख्यस्य च नित्यत्वादिवस्तूपरागायोगादाकाशनिरुपाख्यत्वादिप्रलपनमौन्मत्तमिति चकारार्थः ॥ २४ ॥

अनुस्मृतेश्च ॥ २५ ॥ इति ।

अनुभवमनु पश्चात्स्मृतेरपि न क्षणभङ्गवादः । न हि क्षणिकात्मनामेकोऽनुभवत्यन्यः स्मरतीति युक्तम् । स्थिरस्यातिरिक्तस्य संतानादेरभावान्न तेनाप्युपपादनम् ॥ २५ ॥

---

१ ख. कालविशिष्टवि' २ ख. 'न । ज्ञानविषयफलध्यान' । ३ ख. 'स्तुतस्तू' ।

नासतोऽदृष्टत्वात् ॥ २६ ॥ इति ।

'नानुपमृद्य प्रादुर्भावात्' इत्यनेन विनाशपदवस्थादेव कारणात्कार्यमिति तैरुक्तम् । तथा च कारणस्य नाशरूपासदवस्थामुपादानीकृत्य कार्योत्पत्तिरभिप्रेता न च संभवति खपुष्पाद्युपादानककार्यस्यादृष्टत्वात् । अन्यथा कार्यमात्रमसदनुगतं प्रतीयेत न सदनुगतमिति भावः ॥ २६ ॥

उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ (४) इति ।

अपि चैवं बीजादिचरमक्षणस्यैवाङ्कुरादिहेतुत्व उदासीनानां पूर्वपूर्वबीजक्षणाननुपाददतामपि पुंसां सस्यादिसिद्धिः । तथा च चरमातिरिक्तबीजक्षणानामुपादानमङ्कुराद्यर्थं न स्यादिति भावः । न च चरमक्षणप्रयोजकतया पूर्वेषामुपादानम् । चरममननुसंधाय साधनत्वेन च पूर्वमनुसंधायैवोपादानात् । अथ समर्थस्य क्षेपायोग इति चेत्तर्हि चरमक्षणात्पूर्वं व्यवहितोत्तरं वा कुतोऽङ्कुरादि न स्यात् । कारणाव्यवहितोत्तरक्षणत्वस्य कार्योत्पत्तिव्याप्यत्वादिति चेत्तर्हि कारणकूटस्य देशे तत्क्षणाव्यवहितोत्तरक्षणत्वस्यैव तद्व्याप्यत्वात्समर्थस्यापि क्षेपसंभवे कृतं लोकवेदबहिर्भावेन क्षणिकवादिनामप्येकक्षणावच्छिन्नानां बीजभूमिसलिलादिक्षणानां प्रत्येकं विनिगमनाविरहेण हेतुत्वावश्यकत्वात्तादृशव्याप्तेरपह्नोतुमशक्यत्वात् । अनन्तक्षणिकवस्त्वङ्गीकारे गौरवमात्रस्यावशिष्टत्वादिति चकारार्थः ॥ २७ ॥ (४)

अथ संघातस्यासंभवेऽपि नीलाद्यर्थो न विज्ञानादन्यदवभासमानत्वात्स्वप्नवत्सहोपलम्भनियमाद्ययोर्भेदस्तयोः सहोपलम्भो नास्ति यथा विज्ञानयोः । नन्वर्थानङ्गीकारे नीलाद्याकारस्य विज्ञानस्य किं जनकमिति चेत् । अहमितिविज्ञानसंतानान्तःपातिपूर्वपूर्वनीलाद्याकारप्रत्ययलक्षणसंस्कारोऽनेकविज्ञानव्यवहितोऽपि यत्र काण्डादिव्यवहितं शालेर्बीजं बीजान्तरस्येवाव्यवहितो विज्ञानसंतान एव वा । तथा च विज्ञानस्य नीलाद्याकारवत्त्वात्क्षणिकत्वाच्च कथं विशुद्धसत्यविज्ञानरूपे ब्रह्मणि समन्वय इति विज्ञानवादं प्रत्याह—

नाभाव उपलब्धेः ॥ २८ ॥ इति ।

बाह्यानां नीलादीनां ज्ञानातिरेकेणाभाव इति न । ज्ञानवैलक्षण्येन

१ ख. 'न नश्य' । २ ख. 'मनु' ३ ख. क्षणवता म' । ४ ख. 'रत्वा' ।

प्रत्यक्षरूपाया नीलेर्थो न तद्विज्ञानाभिन्नो विज्ञानान्तरानुगतत्वात्। यो यतोऽन्यत्रानुगतः स ततोऽन्यो यथा जातिर्व्यक्तेरित्युक्तानुमानसत्प्रतिपक्षरूपयाश्चोपलब्धेः ॥ २८ ॥

वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ इति।

नीलाद्यर्थो विज्ञानाभिन्नो भासमानत्वात्स्वप्नादिवदिति यदुक्तं तन्न। तस्य स्वप्नादितो वैधर्म्यात्। व्यवहारकालाबाध्यत्वात्प्रमाणजन्यज्ञानत्वान्निद्रादिदोषाजन्यत्वाच्च ॥ २९ ॥

ननु वासनावैचित्र्यादेवास्तु स्वप्नजाग्रतोर्वैधर्म्यं तत्राऽऽह—

न भावोऽनुपलब्धेः ॥ ३० ॥ इति।

वासनावैचित्र्यस्य न भावस्तत्प्रयोजिकाया विचित्रबाह्योपलब्धेस्त्वन्मतेऽनङ्गीकारात् ॥ ३० ॥

[ पूर्व ] पूर्ववासनावैचित्र्यमुत्तरोत्तरवासनावैचित्र्यनियामकं तत्राऽऽह—

क्षणिकत्वाच्च ॥ ३१ ॥ इति।

वासनाया आलयविज्ञानस्य तदाश्रयस्य क्षणिकत्वाद्वैयधिकरण्याद्विना विचित्रा वासनाऽपि न नियामिका। चकारादुपायोपेयभावात्सह्योपलम्भो नाभेदार्थंभाघटयोरिव ॥ ३१ ॥

सर्वथाऽनुपपत्तेश्च ॥ ३२ ॥ ( ५ ) इति।

एवमर्थतः पश्यन्नातिष्ठतेत्याद्यपशब्दतश्च विज्ञानवादशास्त्रस्यानुपपत्तेरनुपादेयत्वम्। अथ यो वैभाषिको बाह्यार्थं प्रत्यक्षमाह, यश्च सौत्रान्तिको विज्ञानगतप्रतिबिम्बेन बिम्बीभूतान्बाह्यार्थाननुमिनोति, यश्च योगाचारो ज्ञानातिरिक्तमर्थमलीकमाह, तेषु सर्वेषु क्षणिकवादिषु निरस्तेष्वपि विश्वं न सद्बाध्यत्वात्। नाप्यसदपरोक्षत्वात्। नापि सदसद्विरोधात्। नाप्यनिर्वचनीयं सदधिष्ठानकमिथ्यारूपं सदसद्विलक्षणस्य निरधिष्ठानमिथ्यारूपे शून्ये पर्यवसानात्। तस्माच्चतुष्कोटिविनिर्मुक्तं तदिति माध्यमिकस्य शून्यवादः स्यात्। तथा च कथं सन्मात्रे

---

१ स. °द्यर्थो। २ स. °कालबा°। ३ स. °त्वमात्र°।

ब्रह्मणि समन्वय इति चेत्तत्राप्युक्तसूत्राणीत्थं योज्यानि । प्रमाणाधीनाया बाह्यार्थोपलब्धेर्नाभावो नापलापः । अथ विचारेणोक्तक्रमेण बाधवत्त्वात्तेषां सांव्यवहारिकं प्रामाण्यं नापसार्यते किंतु तात्त्विकमिति चेत्तत्राऽऽह—नेति । अनुपलब्धेरुपलब्धिविरोधिन्याः परमार्थविषयायाः प्रमाणजन्योपलब्धिबाधिकाया धियो भावः संभवो नास्ति। तथा च यदि किंचित्प्रामाणिकं परमार्थवस्तु बाधकप्रमाविषयी भवेत्तदा तया बाह्यविषयकप्रमाणानां सांव्यवहारिकं प्रामाण्यं व्यवस्थाप्य तात्त्विकप्रामाण्यमुत्सारणीयम्। न च तथाऽस्ति शून्यवादे परमार्थस्य कस्याप्यसंभवाद्विचारासहत्वस्य सर्वत्र तुल्यत्वस्वीकारात् । तस्मात्स्वप्रकाशतया स्वसाक्षिकं ब्रह्माऽऽश्रित्य वेदान्तवाक्यजन्येन बाधकेन प्रत्ययेन प्रत्यक्षादीनि तात्त्विकप्रामाण्यात्प्रच्यावनीयानि । न च सदसद्विलक्षणरूपानिर्वचनीयासंभवः । ख्यातिबाधयोरन्यथानुपपत्त्या तस्य दुरपह्नवत्वात् ॥ ३२ ॥ (५)

अथ मुक्तकच्छेषु निरस्तेष्वपि जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा अस्तिकायाः । अस्तीति कायते शब्द्यते न त्वेकान्ततोऽस्तीति यौगिकी वस्तूनामस्तिकायसंज्ञा । जीवस्त्रिविधो बद्धः साधनैर्विमुक्तो नित्यसिद्धश्च । अजीवाः पञ्च पृथिव्यादिभूतचतुष्टयं पुद्गलसंज्ञकं धर्माधर्मौ लोकान्तर्वर्त्याकाशो बहिराकाशश्च । आस्रावयति प्रज्ञाऽनयेत्यास्रव इन्द्रियवृत्तिः । संवृणोतीन्द्रियाणीति संवरः शमदमादिः । निर्जरयति नाशयति कर्ममात्रमिति निर्जरस्तप्तशिलारोहणादितपः। बन्धोऽष्टविधः—सम्यग्ज्ञानान्मोक्ष इत्यत्राविश्वासो ज्ञानावरणीयम् । आर्हतशास्त्रान्न मोक्ष इति दर्शनावरणीयम् । आर्हतशास्त्रादेव मोक्ष इत्यवधारणस्याभावो मोहनीयम् । मुमुक्षूणामैश्वर्यादि चेति । चत्वारि ज्ञानविरोधीनि। मिलितं शुक्रशोणितमायुष्कम् । तन्निष्ठा देहाकारपरिणामशक्तिर्गोत्रिकम् । तद्गति कललबुद्बुदावस्थयोर्हेतुः क्रियाविशेषो नामिकम् । तद्गतो देहाकारपरिणामहेतुरीषद्घनीभावो वेदनीयमिति चत्वारि ज्ञानाविरोधीनि । बहिराकाशेऽवस्थानं मोक्षः । बन्धक्षये सति जीवः सततमूर्ध्वं गच्छति तत्स्वभावत्वादिति तदेव वा मोक्षः । वैशेषिकादिवत्परमाणुभिर्जगदमरमः । आत्मा तु देहपरिमाणश्चैतन्यरूपः सर्व एव पदार्थाः ।

---

१ ख. 'त्यशुद्ध' ।

[1] स्यादस्ति स्यान्नास्ति स्यादस्ति च नास्ति च स्यादवक्तव्यः स्यादस्ति चावक्तव्यश्च स्यान्नास्ति चावक्तव्यश्च स्यादस्ति च नास्ति चावक्तव्यश्च । स्यादिति निपातो यमनियमद्योतकः । तेनास्तीत्याद्यनियतम्, अवक्तव्योऽनिर्वचनीय इत्यप्यनियतम् । असद्वादी सत्त्वमनिर्वाच्यमिति वक्ति तदप्यनियतमित्याह—स्यादस्ति चावक्तव्य इति । असत्त्वमप्यनिर्वाच्यमिति सद्वादी यद्वक्ति तदप्यनियतमित्याह—स्यान्नास्ति चावक्तव्य इति । अस्ति च नास्ति चेत्येष पक्षोऽवक्तव्योऽनिर्वाच्य इति यदुच्यत एकान्तसद्वादिभिरेकान्तासद्वादिभिश्च तदप्यनियतमित्याह—स्यादस्ति चेत्यादि । इत्युक्तवाक्यार्थः । युज्यते चेयं सप्तनियमभङ्गी । अन्यथा यद्यस्तीति वस्तुन ऐकान्तिकं सत्त्वं स्यात्तदा तदिच्छुः सन्कोऽपि न प्रवर्तेत वस्तुमात्रस्य सिद्धत्वात् । नापि निवर्तेत हातुमशक्यत्वात् । यदि च नास्तीत्येकान्तता तदाऽपि न प्रवृत्तिनिवृत्तिसंभवः प्राप्तुमशक्यत्वान्नित्यनिवृत्तत्वात् । अनैकान्तिकत्वे तु क्वचित्कदाचित्कस्यचित्कथंचित्सत्त्वात्तत्संभव इत्यार्हतस्य दिगम्बरस्य जैनाख्यस्य मतं स्यात्तत्र च न पूर्वदोषः । तथा च सत्त्वाद्यनैकान्तिकत्वस्याऽऽत्मपरिच्छिन्नत्वादेश्च स्वीकारात्कथमेकान्ततः सदनन्ते ब्रह्मणि समन्वय इति तत्राऽऽह—

नैकस्मिन्नसंभवात् ॥ ३३ ॥ इति ।

नैवम् । एकस्मिन्धर्मिण्यनियतसत्त्वासत्त्वादीनां विरोधेनासंभवात् । तेषां वस्तुधर्मत्वे सत्त्वदशायामपि वस्त्वननुवृत्त्यापाताद्वस्तुस्वरूपत्वे सर्वदा सत्त्वासत्त्वादिप्रसङ्गेन सदा सदसदुचितव्यवहारापत्तेः । तथा च यत्सत्त्वकदाऽपि नासद्यथाऽऽत्मा यत्तु क्वचित्कदाचित्सद्व्यवहारतो न परमार्थतो यथा प्रपञ्चः । एकान्ततः सतोऽपि ब्रह्मणोऽप्राप्तत्वभ्रान्त्या तदिच्छोस्तत्प्राप्त्युपाये प्रवृत्त्युपपत्तेः, एकान्ततोऽनिर्वचनीयेऽपि प्रपञ्चे कादाचित्कादधिष्ठानसत्तानुबन्धात्प्रवृत्त्याद्युपपत्तेः । किंच सत्त्वाद्यनैकान्तिकत्वे नाप्यव्याप्यवृत्तित्वमवच्छेदकस्य दुर्वचत्वात्, नापि मिथोविरोधाभावरूपमप्रामाणिकत्वात् ॥ ३३ ॥

---

१ रा. 'स्तमित्यनि' । २ क. तमिच्छो' ।

एवं चाऽऽत्माकात्स्न्र्यम् ॥ ३४ ॥ इति ।

यथाऽनैकान्तिकत्वमसंभवश्चैवमात्मनोऽकात्स्न्र्यं परिच्छेदोऽपि । देहपरिमाणत्वे देहवदनित्यत्वापत्तेर्देहभेदेनानन्तपरिमाणकल्पनापत्तेः । आत्मनः परिमाण एव मानाभावाच्च ॥ ३४ ॥

ननु देहस्य नाशादौ नाऽऽत्मनो नाशादि येनानित्यत्वं किंतु देहसंबन्धकाले तत्तुल्यपरिमाणत्वार्थमात्मनः केचिदवयवा गच्छन्त्यागच्छन्ति वा तत्राऽऽह—

न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥ इति ।

पर्यायादवयवगमागमाभ्यां न विरोधपरिहारः । नाशोत्पादादिरूपविकारावश्यकत्वात् । अवयवविभागादेरेव तद्धेतुत्वात् । आदिना नानापरिमाणगौरवतादवस्थ्यात् ॥ ३५ ॥

अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥३६॥ (६) इति ।

किंचान्त्यस्य मोक्षावच्छिन्नपरिमाणस्य तन्मतेऽवस्थितेरविनाशित्वात्संसारावच्छिन्नस्याऽऽत्मपरिमाणस्यापि विनाशित्वे मानाभावेनोभयोः कालयोः परिमाणे नित्यत्वाद्विशेषस्य भेदस्याभाव एवोचितः ॥ ३६ ॥

अथेश्वरो नोपादानं नियन्तृत्वात्, यद्यस्य नियन्तृ तन्न तस्योपादानं यथा कुलालो घटस्य । न चाप्रयोजकत्वम् । उपादानत्वस्य कार्योद्देश्यकनियन्तृप्रवृत्तिविशेष्यक्रियोपादानत्वनियतत्वेन नियन्तृत्वोपादानत्वयोर्विरोधात् । एवं च प्रधानं परिमाणून्वोपादाय कार्ये प्रवर्तते ईश इति कथमुपादाने ब्रह्मणि समन्वय इति पाशुपतादिमतं प्रत्याह—

पत्युरसामञ्जस्यात् ॥ ३७ ॥ इति ।

पत्युरीशस्योपादानत्वमेवानुपादानत्वानुमानस्यासामञ्जस्यात् ॥ ३७॥ तथा हि—

संबन्धानुपपत्तेश्च ॥ ३८ ॥ इति ।

ईशस्य पक्षस्याप्रसिध्द्या श्रुत्या चोपादानत्वेनैव प्रसिध्द्योक्तानुमानेन साध्यपक्षयोः संबन्धसिध्द्यनुपपत्तेः । चकारात्पाशुपतस्मृत्याऽपि नेश्वर-

---

१ क. °त इ° ।

सिद्धिः। ईश्वरोक्तत्वेन तस्याः प्रामाण्यात्तत्प्रामाण्येन चेश्वरसिद्धिरित्यन्योन्याश्रयात्। विवर्तोपादानत्वं च न नियन्तृत्वविरुद्धं किंतु परिणामित्वम् ॥ ३८ ॥

अथाऽऽद्यकार्यं सकर्तृकं कार्यत्वाद्घटवदित्यनुमानादीशसिद्धिस्तत्राऽऽह—

अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥ इति।

सकर्तृकत्वं न कर्तृजन्यत्वम्, ईशेऽकर्तृत्वरूपस्याधिष्ठानस्योपपत्तेरनुमानस्याभावात्। दृष्टान्ते कुलालस्य तत्पितुरिवान्यथासिद्धत्वात्। नापि स्वजनककृतिमद्विशिष्टत्वं कृतेरप्यवयवसंयोगादिनाऽन्यथासिद्धत्वात्। नापि स्वप्रयोजकक्रियाजनककृतिमद्विशिष्टत्वं क्रियां प्रत्यपि कुलालशरीरनिष्ठचेष्टादेरसाधारणकारणस्यान्यस्यावश्यंवाच्यतया कृतेरन्यथासिद्धत्वात्। कृतिप्रयोजकस्यादृष्टविशेषादेरेव कृतिकार्यत्वाभिमतं प्रति हेतुत्वसंभवाच्च। शरीरजन्यत्वस्योपाधित्वाच्च ॥ ३९ ॥

करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥ इति।

ईशस्य करणवच्छरीरं स्वीकार्यमतः साधनव्यापकं शरीरजन्यत्वमिति चेन्न। यतो भोगार्थं जीवस्य सृष्टिपालनार्थं चेशस्य शरीरमुपेयते। न च सृष्टेः पूर्वं भोगो न वा सृष्टिपालनमिति तदानीं शरीरानुपगमाद्विस्याद्यकार्यस्य न शरीरजन्यत्वमित्यर्थः। न च पालनाद्यर्थं गृहीतस्य शरीरस्य नित्यत्वमिति वाच्यम्। तस्य भौतिकत्वेन विनाशित्वावश्यकत्वात्। न च नाशकल्पनागौरवं दोषः। यतो वेत्यादिश्रुत्या 'संभवामि युगे युगे' इति स्मृत्या च तथाबोधनेन प्रामाणिकत्वात् ॥ ४० ॥

अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ इति।

किंच सहचारदर्शनमात्रेण व्याप्तिकल्पने आद्यकार्यं जन्ममरणादिरूपान्तवत्कर्तृकमसर्वज्ञकर्तृकं वा कार्यत्वाद्घटवदित्यपि कल्प्येत। अनुकूलतर्काभावस्तु समानः। प्रकृतिश्चेत्यत्रोपादानत्वे सिद्धेऽप्यनुमानदूषणार्थमिदम्। तस्मात्कार्यकारणयोगविधिदुःखान्ताः पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षायोपदिष्टाः पशुपतिर्निमित्तमेवेति पाशुपतमतमपास्तम् ॥ ४१ ॥ [ ७ ]

---

१ ख. °त्यप्यसा°।

नन्वेवं जीवं प्रत्यप्युपादानमीशः स्यात् । पाञ्चरात्रस्मृतौ वासुदेवः परमात्मा निरञ्जनज्ञानरूपः परमप्रकृतिस्तस्मात्संकर्षणो जीवस्तस्मात्प्रद्युम्नो मनोरूपस्तस्मादहंकाररूपोऽनिरुद्धादिर्वासुदेवाभेदाप्तिरेव मोक्ष आमोक्षं जीवपरयोर्भेद एवेत्युक्तत्वात् । न च सा स्मृतिरप्रमाणं तत्कर्तुर्वासुदेवस्य वेदादेव सार्वज्ञ्यसिद्धेः, जीवस्योपादेयत्वेऽप्यद्वैताबाधाच्चेति प्रासङ्गिकं प्रत्याह—

उत्पत्त्यसंभवात् ॥ ४२ ॥ इति ।

नैवं वासुदेवाज्जीवस्य संकर्षणादेरुत्पत्त्यसंभवात् । उत्पत्तिमत्त्व उपादेयस्योपादाने लयस्वरूपहानापत्त्या मोक्षमात्रस्यानुपपत्तेः । प्रतिषेक्ष्यति चाऽऽचार्यो जीवोत्पत्तिं ' नाऽऽत्माऽश्रुतेः ' इत्यत्र ॥ ४२ ॥

नन्वीश्वरकर्तृकत्वात्पाञ्चरात्रस्मृतिः प्रमाणं तत्राऽऽह—

न च कर्तुः करणम् ॥ ४३ ॥ इति ।

सर्वज्ञात्कर्तृरूपाद्धेतोः सा स्मृतिः प्रमायाः करणमिति न । चकारः श्रुत्या सर्वज्ञेश्वरं ज्ञात्वा तन्मूलकत्वेन स्मृतेः प्रामाण्यनिर्णयात्प्रागेव स्वतःप्रमाणाद्वेदाज्जीवस्य ब्रह्माभिन्नत्वेन निर्णय इति बलवत्प्रमाणेहृतविषयत्वाद्गौणतयैव स्मृतेर्नेयत्वादिति हेत्वर्थः । अथवा कर्तुः संकर्षणात्करणं मनोऽजायत इति न । करणान्तरसाहाय्यं विना कर्तृत्वस्यासंभवात्संभवे वा मनोऽपि व्यर्थं स्यात् । न च ब्रह्मण इव जीवस्यापि करणान्तरेण मनःकर्तृत्वमास्तामिति वाच्यम् । जीवव्यापारस्य मनःसंबन्धकृतत्वेन मनउत्पत्तेः पूर्वं जीवरूपकर्तृव्यापाराविष्टस्यकरणस्यासंभवात् ॥ ४३ ॥

ननु वासुदेवादयश्चत्वार एव निरुपादानाः समा वासुदेवात्संकर्षण इत्यादिकं तूपासनाप्रकारस्तत्राऽऽह—

विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ इति ।

उपासनादिभावेऽपि तस्यासंभवस्याप्रतिषेधो विद्यमानत्वम् । ईश्वरनानात्वस्य वैफल्यादेको वासुदेवः परमात्मतत्त्वमिति स्वसिद्धान्तविरोधाच्च ॥ ४४ ॥

---

१ क. °रूपोऽनि° । २ ख. दिवासु° । ३ क. 'वनि' । ४ क. °णकृत° ।

विप्रतिषेधाच्च ॥ ४५ ॥ ( ८ ) इति ।

ज्ञानैश्वर्यादिगुणा आत्मान एते चत्वारो वासुदेवा इत्यादिविवादात् ।

' पाषण्डिनो विकर्मस्थान्वामाचाररतांस्तथा ।

पाञ्चरात्रान्पाशुपतान्वाङ्मात्रेणापि नार्चयेत् '

इति कूर्मपुराणादिषु तन्मतानुयायिसंसर्गस्यापि निषिद्धत्वाच्च । चकाराच्चतुर्षु वेदेषु परं श्रेयोऽप्राप्य शाण्डिल्य इदं शास्त्रमधीतवानित्यादिवेदनिन्दनात् ॥ ४५ ॥ ( ८ ) ।

इति द्वितीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

अथ द्वितीयाध्यायस्य तृतीयः पादः ॥

---

तृतीये भूतमोक्तृश्रुतीनां मिथोविरोधपरिहारः । तत्र भोक्तृत्वस्योपाधिकत्वादुपाधिषु चाऽऽकाशस्य प्रथममुत्पत्तिश्रुतेः प्रथमं तत्रैव विरोधं शङ्कते—

न वियदश्रुतेः ॥ १ ॥ इति ।

वियन्न जायते छान्दोग्ये भूतसृष्टौ तदश्रुतेः ॥ १ ॥

अस्ति तु ॥ २ ॥ इति ।

तुशब्दाज्जायत एव यतस्तैत्तिरीयके 'आत्मन आकाशः संभूतः' [ तै० २ । १ । १ ] । इत्याद्यस्ति तथा च वियत्तेजसोर्न क्रमेणोत्पत्तिर्द्वयोरपि प्राथम्यानुपपत्तेः । नापि युगपत्, वायोरग्निरिति विरोधात् ॥ २ ॥

छान्दोग्ये वियदुपसंहारेऽपि तेजःप्राथम्यमक्षुः । 'तत्तेजोऽसृजत' [ छा० ६।२।३ ] इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धात्पदावृत्त्या वाक्यभेदश्च । तस्माच्छ्रुतिद्वयं मिथो विरोधात्प्रमाणं न वेति संशय्य सिद्धान्तदार्ढ्याय पूर्वपक्षं सूत्रयति—

गौण्यसंभवात् ॥ ३ ॥ इति ।

' आत्मन आकाशः संभूतः । आकाशाद्वायुः ' इति श्रुतिर्गौणी खं न जायते निःस्पर्शद्रव्यत्वादित्यनुमानात् ॥ ३ ॥

---

१ ख. ईपोः भुतयो° । २ क. 'तुः शब्दस्'।

ननु नानुमानमात्रेण श्रुतेर्बाधः 'प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्' इतिस्मृतेस्तत्राऽऽह—

शब्दाच्च ॥ ४ ॥ इति ।

'अन्तरिक्षं चैतदमृतम्' [ बृ० २ । ३ । ३ ] इति यथाऽनन्तोऽयमाकाश एवमनन्त आत्मेत्यादेः । चकारादुत्पत्त्याविकल्पने गौरवात् ॥४॥

संभूत इत्यस्याऽऽकाशे गौणत्वं वाय्वादौ मुख्यत्वं कथं तत्राऽऽह—

स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥ इति ।

यथा तैत्तिरीय एव 'अन्नं ब्रह्म' [ तै० ३ । २ । १ ] इत्यादिषु गौणत्वम् 'आनन्दो ब्रह्म' [ तै० ३ । ६ । १ ] इत्यत्र मुख्यत्वं ब्रह्मशब्दस्य तथा प्रकृतेऽपि स्यादेव ॥ ५ ॥

समाधत्ते—

प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ इति ।

नोक्तश्रुतिर्गौणी यतोऽव्यतिरेकं प्रकृतिविकारभावेनाभेदमादायैव ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः प्रतिवेदान्तं कृताया अहानिरुपपत्तिः । ननु ब्रह्मप्रपञ्चयोः प्रकृतिविकारभावेनाभेदं विनाऽपि राजज्ञानेन सैन्यज्ञानोक्तिवद्गौणतयैव प्रतिज्ञोपपाद्यतां तत्राऽऽह—शब्देभ्य इति । 'येनाश्रुत श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' [ छा० ६ । १ । ३ ] इत्यनेन कृतप्रतिज्ञायाः 'यथा सोम्यैकेन' इत्यादि 'मृत्तिकेत्येव सत्यम्' [ छा० ६ । १ । ४ ] 'एवꣳ सोम्य स आदेशः' [ छा० ६ । १६ ] इत्यन्तमुपक्रम्योक्तेन 'ऐतदात्म्यमिदꣳ सर्वम्' [ छा० ६ । ८ । ७ ] इत्युपसंहारकशब्दसंदर्भेण प्रकृतिविकृतिभावेनाभेदमादायैवोपपादितत्वात् । न च पूर्वोक्तदोषः । छान्दोग्ये हि तेजसः प्राथम्यं न श्रुतं नापि प्रथमश्रवणात्क्रमपाठरूपस्थानप्रमाणगम्यं वायोरग्निरितिश्रुत्यपेक्षया स्थानस्य दौर्बल्यात् । नापि तादृशस्थानस्याऽऽकाशानुत्पत्तिकल्पकत्वम् 'आकाशः संभूतः' इति श्रुतेर्बलवत्त्वात् । तेजःप्राथम्यस्य श्रौतत्वेऽपि सक्रमाया आकाशोत्पत्तेर्बाधाद्वरं तेजः-

---

१ ख. 'जात्या'।

प्राथम्यस्य धर्मस्यैव बाधः। तस्माद्वियदुत्पत्तिश्छान्दोग्य उपसंहर्तव्या। न च वाक्यभेदः। तद्वियदसृजतेतिवाक्यान्तरकल्पनस्यैवोपसंहारत्वेन पदावृत्त्यभावात्। एवं चान्तरिक्षममृतमित्याद्यापेक्षिकामृतत्वादिपरम्। 'अतोऽन्यदार्तम्' [ बृ० ३।४।२ ] 'ज्यायानाकाशात्' इत्यादिश्रुतेः। स्वाध्यस्तस्वेतरसर्वसंबन्धित्वस्यैव प्रकृते ज्यायःशब्दितत्वात्। 'अस्थूलमनण्वह्रस्वमदीर्घम्' [ बृ० ३।८।८ ] इत्यादिश्रुत्याऽऽत्मनि परिमाणमात्रनिषेधात्। न च विनाशकल्पने गौरवं दोषः। श्रुतिमूलकत्वात्पूर्वोत्तरावस्थयोरेव प्रागभावध्वंसरूपत्वेन प्रागभावस्येवातिरिक्तध्वंसस्यानङ्गीकाराच्चेति भावः॥ ६॥

बलवदनुमानेनापि पूर्वानुमानं दूषयति—

यावद्विकारं तु विभागो लोकवत्॥ ७॥( १ ) इति।

विभागश्चेतनभेदो यावद्विकारं विकारमनतिक्रम्य वर्तते। उत्पत्तिमत्त्वव्याप्य इति यावत्। अविद्यादि मन्वानं प्रति स्वाद्यकार्यजनकमेव विभागः। आद्यकार्यत्वं चैतत्सृष्टिकालीनत्वे सत्येतत्सृष्टिकालोत्पन्नध्वंसावृत्तित्वम्। अविद्याचित्संबन्धजीवेशविभागादेरप्यविद्योदेरिव कालरूपतया सर्वकार्यकारणत्वान्न व्यभिचारः। उक्ताद्यकार्यत्वं चाऽऽकाशजनकेक्षणनिष्ठमाकाशोत्पत्तिक्षणद्वितीयक्षणोत्पन्ने स्वनाशे कालिकसंबन्धेन तस्यावृत्तित्वात्। कार्यान्तरे चेक्षणान्तरमेव हेतुः। छान्दोग्ये तेजआदिकार्यभेदानामीक्षणभेदजन्यत्वोक्तेरविद्यादिषड्भिन्नत्वं वा हेतुः। पक्षतावच्छेदकं च नादृष्टादिसाधारणं किंतु भूतत्वादिकमतो न पक्षैकदेशे हेत्वसिद्धिः। अजन्यं सद्यदविनाशि तदन्यत्वं वा साध्यं तेन चेतनभेदे हेतावपि नाविद्यादौ व्यभिचारः। न चाप्रयोजकत्वम्। लाघवेनाविद्यादिषट्कभिन्नजडत्वस्यैव ब्रह्मादृष्टादिकार्यतावच्छेदकत्वेनानुकूलतर्कसत्त्वात्। 'यतो वा इमानि भूतानि जायन्ते' [ तै० ३।१।१ ] इत्यादाविमानीत्यस्य जीव ईशस्तयोर्भेदोऽविद्या तत्संबन्धश्चेति पञ्चकभिन्नपरतया भूतानीत्यस्य प्रासार्थकस्य शुद्धचित्प्रासरूपदृश्यपरतया श्रुतियुक्तिसिद्धानादिताकेभ्य उक्तपञ्चभ्यो भिन्नं यद्दृश्यं तत्त्वावच्छेदेन ब्रह्मकार्यतालाभादाकाशादेः कार्यस्य श्रुत्युक्तत्वेन श्रुत्यनुग्रहाच्च। न चोक्तधर्मस्य प्रागभावसाधारण्यात्प्रलयावृत्तित्वं जन्यत्वं वा श्रुत्या जन्यतावच्छेदक-

१ क. 'यावत्काऊ'। २ ख. 'न भे'।

त्वेन बोध्यत इति वाच्यम् । प्रागभावे मानस्याभावाद्भावे वा प्रलयावृत्तित्वं न तथा । प्रलयत्वं हि न कार्यद्रव्यानधिकरणत्वं प्रलये सत्त्वादिगुणपरिणामानां[1] क्षणद्वयमात्रस्थायिनां द्रव्याणामस्माभिः स्वीकारादुभयवाद्यसंमतत्वात् । नापि गन्धानाधारत्वं मन्मते पृथिवीजलादिलयकालेऽपि तत्सत्वात्[2] । तच्छब्दानाधार[3]कत्वमपि न [4]तत्तच्छब्दस्यैव शब्दत्वेन तल्लयकालेऽपञ्चीकृताकाशाधारे[5]ऽपि तत्सत्त्वात् । जन्यत्वमपि न कार्यतावच्छेदकं तत्तदवच्छेदकभेदाभिन्नत्वेन सर्वकार्याननुगतत्वात् । प्रागभावप्रतियोगित्वमपि न तथा प्रागभावे मानाभावात् । कालिकविशेषणतानुयोगित्वमपि न तथाऽविद्यादिरूपकालवृत्तित्वात् । अन्यथाऽविद्याया जगदाधारत्वस्य श्रुत्यादौ श्रुतस्यानुपपत्तेः । अनादिसाधारणस्य जगतः कालिकेनैवकसंबन्धेनाविद्यावृत्तित्वस्य वाच्यत्वात् । [*एतेनाविद्याजन्यमेव ब्रह्म जन्यतावच्छेकमित्यपास्तम् । ब्रह्मजन्यत्वस्याविद्याजन्यतावच्छेदकत्वेनान्योन्याश्रयादन्यस्यातत्त्वात् । ] तस्मादनादिपदान्यत्वमेव कार्यतावच्छेदकम् । यत्त्वीक्षणानाधारकालत्वं प्रलयत्वमिति तन्न । पृथिव्यादिलयकाल ईक्षणस्वीकारे प्रलयेऽप्युक्तसत्त्वादिपरिणामार्थं तत्स्वीकारस्य युक्तत्वात्[6], तर्काभावात, श्रुतिविरोधादमूतत्वाद्युपाधिमत्त्वाच्च । पूर्वोक्तानुमानमनवकाशमिति भावः ॥ ७ ॥ (१)

वायोरुत्पत्तिमावाय पूर्ववच्छान्दोग्यतैत्तिरीयश्रुत्योर्विरोधे पूर्ववदेव सिद्धान्तेऽपि पूर्वत्र 'एकमेवाद्वितीयम्' [ छा० ६ । २ । १ ] इत्यादिसाभ्यासवाक्यैरद्वैतप्रतिपादनाद्यथैकाविज्ञानात्सर्वविज्ञानप्रतिज्ञा मुख्या तथा 'वायुश्चान्तरिक्षं चैतदमृतम्' इति 'सैषाऽनस्तमिता देवता यद्वायुः' [ बृ० १ । ५ । २२ ] इति साभ्यासवाक्येनामृतत्वाद्यपि मुख्यमस्त्वित्यधिकमाशङ्क्यातिदिशति—

एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ ( २ ) इति ।

बृहदारण्यकतृतीयाध्यायकृताया 'अनेन ह्यात्मनैतत्सर्वं वेद' इति सर्वविज्ञानप्रतिज्ञाया उपपादनाय वायुश्चान्तरिक्षमित्यादिकमात्मकार्यप्र-

---

* धनुश्चिह्नान्तर्गतोऽयं ग्रन्थ. ख पुस्तकस्थः ।

---

१ ख. 'रिमाणानां । २ ख. °त् । शब्दा° । ३ ख. 'रकात्व° । ४ ख. तत्पञ्चीकृताकाशस्येव शब्दवत्त्वेन तत्कालेऽ° । ५ ख. 'धारस्यापि । ६ क. °त् । अत° ।

दर्शनपरम् । अत एव पश्चान्नेति नेतीत्यादिना जगन्निषेधितम् । तथा चोपपाद्यस्य प्रतिज्ञावाक्यस्यानुसारेणामृतत्वादिगौणतया नेयम् । सावकाशा चामृतत्वादिश्रुतिर्वायूपासनाविधिसंनिहितत्वेन स्तुतिपरत्वात् । अद्वैतश्रुतयश्च स्वार्थपरा एव तदुपक्रमादिमत्त्वात् ॥ ८ ॥ ( २ )

'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्व एत आत्मानो व्युच्चरन्ति [ बृ० २ । १ । २० ] इत्यत्र ब्रह्मात्मकस्याऽऽत्मन उत्पत्तिः 'न चास्य कश्चिज्जनिता' इत्यत्रानुत्पत्तिरिति विरोधे यथाऽनेकाद्वैतश्रुत्यनुसारेण 'वायुश्चान्तरिक्षं चामृतम्' इति नीतं तथा न चास्य कश्चिज्जनितेत्यपि विस्फुलिङ्गादिबहुश्रुतीनामात्मा जन्यः कारणत्वादाकाशवदित्यनुमानस्य चानुसारेण नीयतामिति प्रत्याह—

अंसभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ ( ३ ) इति ।

'नाऽऽत्माऽश्रुतेः' [ ब्र० सू० २ । ३ । १७ ] इत्यत्र तु जीवत्वेन जन्यत्वं शङ्कित्वा परिहरिष्यति । सतो ब्रह्मण उत्पत्त्यसंभवः । तत्र हि न सत्कारणं सर्वत्र सद्व्यवहारे विषयस्यैकस्याः सद्व्यक्तेर्लाघवेन कल्पनात् । नाप्यसत्कार्यस्य सत्स्वभावत्वे नाशासंभवेन सत्त्वासत्त्वधर्मवत्त्वे स्वनाशेऽप्यनुवृत्त्यापातेन चाऽऽरोपणीयत्वनियमादारोप्यस्य चासदधिष्ठानकस्यासंभवात्कारणमात्रस्य कार्यत्वे चानवस्थापातादित्यनुपपत्तेः । अत एव श्रुतिरौपाधिकोत्पत्तिपरेति भावः ॥ ९ ॥ ( ३ )

यदि सदन्यस्यानधिष्ठानत्वान्न ब्रह्महेतुत्वं तर्हि वायोरपि न तेजोहेतुत्वं किंतु ब्रह्मणः । तथा च 'तत्तेजोऽसृजत' [ छा० ६ । २ । ३ ] 'इदं सर्वमसृजत' [ बृ० १ । २ । ५ ] 'सर्वं खल्विदं ब्रह्म तज्जलान्' [ छा० ३ । १४ । १ ] इत्यादिनिरपेक्षहेतुताबोधकश्रुत्यनुसारेण 'वायोरग्निः' [ तै० २ । १ । १ ] इति वाय्वानन्तर्यपरमिति प्रत्याह—

तेजोऽतस्तथा ह्याह ॥ १० ॥ ( ४ ) इति ।

अतो मातरिश्वनस्तेजो जायत एव । हि यस्मादपादानपञ्चमीसमभिव्याहृतत्वेनापादानार्थकपञ्चमीकं वायोरग्निरिति वाक्यं तथा तेजो वायुजमाह । अत एव बाधकाच्छ्रुतयो ब्रह्मजत्वमेवाऽऽहुर्न तु नैरपेक्ष्येणेति भावः ॥ १० ॥ ( ४ )

ननु वायो तेजस उपादानत्वमविरुद्धं न त्वपां तेजसीत्यधिकमाशङ्क्यातिदिशति—

आपः ॥ ११ ॥ ( ५ ) इति ।

अतस्तथा ह्याहेत्यनुपञ्जनीयम् । अतस्तेजस आपो जायन्ते । तथा च पञ्चीकृतयोरेव जलतेजसोर्विरोध इति भावः ॥ ११ ( ५ )

'ता अन्नमसृजन्त' [छा० ६ । २ । ४] 'अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधीभ्योऽन्नम्' [ तै० २ । १ । १ ] इति श्रुत्योर्विरोधेऽन्नं व्रीह्यादि यत्र क्व च वर्षति तदेव भूयिष्ठं भवतीतिवाक्यशेषगतलिङ्गाञ्च तु पृथिवी भूतप्रकरणस्य लिङ्गाद्दौर्बल्यात् । तथा च पृथिवीपदमन्नार्थकमिति प्रत्याह—

पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ ( ६ ) इति ।

अन्नपदार्थः पृथिवी भूताधिकारात् । रूपाद्यत्कृष्णं तदन्नस्येत्यनेनोक्तात् । व्रीह्यादि विना पार्थिवान्तरेऽपि कृष्णरूपसत्त्वादन्नस्येत्यस्य व्रीह्यादिमात्रपरत्वासंभवात्प्रकृते कृष्णरूपत्वावच्छेदेनान्नीयत्वस्य विवक्षितत्वाद्योगप्राथम्ये तथा व्युत्पत्तेः । 'अद्भ्यः पृथिवी' [ तै० २ । १ । १ ] 'तद्यदपां शरः सा पृथिवी' [ बृ० १ । २ । २ ] इत्यभ्यासरूपाच्छब्दान्तरात् । लिङ्गं तु पृथिव्या अपि तस्या एव परिणामतो व्रीह्यादित्वात् । तथा च पृथिव्याः परिग्रहे श्रुतिलिङ्गयोर्नात्यन्तबाधस्तल्लभ्यार्थापरित्यागेन तद्रूपेण परिणतपृथिवीलक्षणात् । व्रीह्यादिमात्रपरिग्रहे पृथिवीलिङ्गप्रकरणस्थानानामत्यन्तबाधः पृथिव्येकदेशस्य परित्यागादिति पृथिव्येवार्थ इति भावः ॥ १२ ॥ ( ७ )

'आकाशाद्वायुः' [ तै० २।१।१ ] इत्यादौ निरपेक्षमाकाशादीनां हेतुत्वं 'य आकाशमन्तरो यमयति' [ बृ० ३।७।१२ ] इत्यादौ चेश्वरसापेक्षं प्रतीयत इति विरोध आकाशादीनामचैतन्याद्यद्यपि निरपेक्षं न हेतुत्वं तथाऽप्याकाशाद्वायुरित्यादावाकाशादिपदानां 'यमाकाशो न वेद' [ बृ०३।७।१२ ] इत्यादावविवाधिष्ठातृदेवतानिरूढत्वादधिष्ठातृदेवता-

---

१ स० 'रत्वम' ।

स्वेनेश्वरव्यक्तेराकाशादिसहकारित्वमाकाशमन्तरो यमयतीत्यनेन लब्धं नत्वीश्वरत्वेनेति प्रत्याह—

तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥ ( ७ ) इति ।

'सोऽकामयत बहु स्याम्' [ तै० २ । ६ । १ ] इत्यादि 'सच्च त्यच्चाभवत्तदात्मानं स्वयमकुरुत' [ तै० २ । ६ । १ ] इत्यन्ते स्वात्मना सर्वसृष्ट्यभिधानं 'यः पृथिव्यां तिष्ठन्' 'पृथिवीमन्तरो यमयति' [ बृ० ३ । ७ । ३ ] इत्यादौ सर्वनियन्तृत्वं चेश्वरस्यैव लिङ्गमतः स एव कार्यजनने सहकारी । एवं चाधिष्ठातृदेवतारूपेण नियन्तृताया न कष्टकल्पनं न वाऽऽकाशादिपदे लक्षणा । ईश्वरस्य च नियन्तुर्मानान्तरप्राप्त्या न तन्नैरपेक्ष्यं शास्त्रार्थ इति भावः ॥ १३ ॥ ( ७ ) ।

महाभूतानामुत्पत्तिलयान्यतरत्वेनानुमितो लयक्रमो यथा सृष्टौ तथैव श्रुतिसंनिधानात्तथा चाऽऽकाशाद्युपादानलयोत्तरं वाय्वादेर्लय इति प्रसङ्गात्प्रत्याह—

विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥ ( ८ ) इति ।

अतः सृष्टिक्रमाद्विपर्ययेणैव लयक्रमः । चो हेतौ । यतः स एवोपपद्यते ।

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते '

इत्यादिस्मृतेः । उपादानासत्त्वापि हेतुनाशं विनाऽपि कार्यनाशप्रकारस्योक्तत्वाच्च ॥ १४ ॥ ( ८ )

अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति
चेन्नाविशेषात् ॥ १५ ॥ ( ९ ) इति ।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी' [ मु० २ । १ । ३ ] इत्यत्राऽऽकाशप्राणयोरन्तरा मध्ये विज्ञानं ज्ञानेन्द्रियाणि मनं आकाशं च जायते । पाठक्रमादात्मन आकाश इत्यत्राऽऽकाशस्य प्राथम्यं तु न तावता विरुद्धं भूतसृष्ट्यपेक्षत्वात्तालि-

१ ख. 'दानत्र' । २ ख. 'न ज्ञान ज्ञा' । ३ ख 'न आदिक्र च ।

ङ्गादन्तरोत्पत्तिलिङ्गादिति चेन्न । अविशेषात् । 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' [ छा० ६ । ५ । ४ ] इत्यन्नात् 'प्राणो मनः' इत्यादौ मनआदीनां भौतिकत्वाविशेषात् । भौतिकान्तरवत्पश्चादेवोत्पत्तेः । तथा च श्रुत्या क्रमो बाध्यत इति भावः ॥ १५ ॥ ( ९ )

ननु तथाऽपि जीवोत्पत्त्या भूतोत्पत्तिक्रमो बाध्येत भोक्तुरभ्यर्हितत्वेन भोग्यभूतसृष्टेः पूर्वं भोक्तृसृष्टेरवश्यवाच्यत्वात्, जीवजननादिकमादाय जातकर्मादिश्रवणात्, जातश्चैत्रो मृत इति चेतन एव व्यवहाराच्च जीवानामुत्पत्त्यादिसिद्धेः । न जीवो म्रियत इत्यादिश्रुतिस्तु देहनाशकाले जीवनाशानियमपरेति प्रत्याह—

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्त-
स्तद्भावभावित्वात् ॥ १६ ॥( १० )इति ।

तस्य जननादेर्जीवे श्रौतादिव्यपदेशो भाक्तः परम्परया । अत एव चराचरदेहनिष्ठजननादिविषयकः । तस्य जीवस्य भावे सत्य एव यागादिफलस्य भावित्वात् । अन्यथा कृतनाशाकृताभ्यागमप्रसङ्गात् ॥ १६ ॥ ( १० )

'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' [ छा० ६ । ११ । ३ ] इत्यादि बालादिस्वदेहनाशकाले युवादिदेहारूढस्य जीवस्यानाशपरम् 'यथाऽग्नेर्विस्फुलिङ्गा एवमेवास्मादात्मनः सर्वे प्राणा व्युच्चरन्ति' [ बृ० २ । १ । २० ] इति श्रुतेर्जीवानां सृज्यमानानामदृष्टाभावेऽप्यविद्यावैचित्र्यादेव सुखदुःखादिवैचित्र्यात् । तथा चाऽऽकाशादिवज्जीवानामुत्पत्त्यादीति प्रत्याह—

नाऽऽत्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ( ११ ) इति ।

जीवा न जननादिमन्त आकाशादिवन्मुख्यवृत्त्या तद्बोधकश्रुत्यभावात् । उक्तश्रुतौ चोपाध्युत्पत्त्या पार्थक्यबुद्धिविषयत्वमात्रस्य विस्फुलिङ्गादिदृष्टान्तेनोक्तत्वादुत्पत्त्यादिलक्षणायां मानाभावात् । ननु 'यथा सुदी-

---

१ ख. 'स्य ना° ।

मात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ति ' [ मु०२ । १ । १ ] इत्यादौ सरूपभावशब्दितानां जीवानामक्षरादुत्पत्तिर्मुख्ययैव वृत्त्योक्ता तत्राऽऽह-नित्यत्वादिति । ताभ्यो ' महानज आत्मा ' [ बृ० ४ । ४ । २५ ] 'अविनाशी वा अरेऽयमात्मा' [ बृ० ४ । ५ । १४ ] इत्यादिश्रुतिभ्यः । तथा चोक्तश्रुतौ न जीवोत्पत्तिलाभः सरूपपदस्याननुषङ्गात्तदनुषङ्गेऽपि प्रजायन्त इत्यस्य दृष्टान्तस्य प्रभवन्त इत्यनुरोधेन प्रभवन्तीत्यर्थकत्वात्प्रभवस्य च हिमवतो गङ्गा प्रभवतीतिवत्प्रथमोपलब्धिविषयत्वरूपत्वादिति भावः ॥ १७ ॥ ( ११ )

नन्वेवं जीवस्येशाभेदोऽभिप्रेतः । अन्यथैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तेः । स चानुपपन्नः । जीवस्य नित्यस्वप्रकाशत्वाभावात् । पश्यन्नचक्षुः शृण्वन्नश्रोत्रम्(त्रः) ' इत्यनेनाऽऽगन्तुकज्ञानवत्त्वोक्तेः । ' असुप्तः सुप्तानभिचाकशीति ' [ बृ० ४।३।११ ] ' अत्रायं पुरुषः स्वयं ज्योतिः ' [ बृ० ४।३।९ ] इत्यादिश्रुतेरपि जीवस्येन्द्रियाजन्याविद्यावृत्तिरूपत्वात्प्रसोपुप्तज्ञानतच्छक्तिमत्त्वमात्रपरत्वादिति प्रत्याह—

ज्ञोऽत एव ॥ १८ ॥ ( १२ ) इति ।

अतो ज्ञानस्य स्वप्रकाशस्योत्पत्त्यसंभवादेव जीवो ज्ञो नित्यस्वप्रकाश एव । वृत्तिज्ञानविषयकस्य ज्ञानस्य ज्ञानान्तरविषयत्वेऽनवस्थापत्तेः स्वप्रकाशत्वकल्पनात्तस्य चोत्पत्त्यादिकल्पने गौरवात् । ततश्च पश्यन्नित्यादेरागन्तुकचाक्षुषादिवृत्तिपरत्वेऽप्यसुप्त इत्यादेर्नित्यस्वप्रकाशचैतन्यपरत्वात्तस्य जीवरूपस्येशाभिन्नत्वमुपपन्नमेवेति भावः ॥ १८ ॥ [ १२ ]

उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ इति ।

आत्माऽणुरित्या( त्य )ध्याह्रियते नाणुरित्याद्यभिमानुसारात् । ' स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति ' [ कौषी० ३ । ३ ] इत्युत्क्रान्तेः ' ये वै केचनास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति [ कौषी० १ । २ ] इति गतेः ' तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे '

---

१ ग. 'शनात्वर्ं'।

[ बृ० ४ । ४ । ६ ] इत्यागतेः श्रवणात्तासां च सर्वगतत्वे सत्यनुपपत्ते-र्मध्यमपरिमाणत्वे च सावयवत्वाद्यापत्तेः । तथा चाण्वन्तरस्येवाऽऽत्मनो न स्वप्रकाशत्वमिति भावः ॥ १९ ॥

ननु गत्यागती तत्तद्देहाभिमानस्तन्नाशश्चोत्क्रान्तिः स च सर्वगेऽ-प्यक्षतस्तत्राऽऽह—

स्वात्मना चोत्तरयोः ॥ २० ॥ इति ।

स्वात्मना स्वस्वरूपेण समवायिनोत्तरयोर्जन्ययोर्विभागसंयोगयोः सतोरेवोत्क्रान्त्यादिमत्त्वमात्मनः संभवति विभागावच्छिन्नक्रियाया उत्क्रान्तित्वादुत्तरसंयोगावच्छिन्नक्रियाया गत्यागतित्वात् । अभिमाना-देश्च न मुख्यमुत्क्रान्त्यादित्वमिति भावः ॥ २० ॥

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥ इति ।

अतच्छ्रुतेः 'महानज आत्मा' (बृ० ४ । ४ । २२) इत्यनणुत्व-श्रुतेर्गौणमुत्क्रान्त्यादीत्यात्मा नाणुरिति चेन्न । इतरस्य परमात्मनो मुख्यतया प्रतियोगित्वेनाधिकारादुत्क्रान्तिश्रुत्या तस्यैव महत्त्वोक्तेर्म-हता ब्रह्मणा श्रुत्या जीवतादात्म्यस्य विवक्षितत्वाद्वा ॥ २१ ॥

स्वशब्दोन्मानाभ्यां च ॥ २२ ॥ इति ।

स्वरूपाणुत्वस्य 'एषोऽणुरात्मा' [ मु० ३ । १ । ९ ] इति शब्दात् 'बालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः' ( श्वे० ५ । ८ ) इत्यनेनोन्मानात्तुल्यत्वकथनाच्च ॥ २२ ॥

अथाणुत्वे जीवस्य स्वाभाविके नानाविषयाणां युगपत्स्वस्वसंबद्ध-साक्षिभास्यत्वं न स्यात् । न स्याच्च हस्तादेर्जीवे युगपज्जायमाननानासु-खाद्यवच्छेदकत्वं युगपज्जीवासंबन्धात्तत्राऽऽह—

अविरोधश्चन्दनवत् ॥ २३ ॥ इति ।

यथा कस्मिंश्चिदवयवे स्थितो हरिचन्दनबिन्दुरन्येष्वप्यवयवेषु परम्प-रया संबन्धे( द्धे )षु सुखस्य निमित्तं तथा तत्तद्वृत्तिविशेषद्वारा

१ ख. 'र्वगेऽ' । २ क. 'रेव नोत्का' । ३ ख. 'तिपायत्वे' । ४ ख. 'दुत्क्रम' । ५ ख. प्रकृत्या ।

संबद्धं विषयमणुरपि जीवोऽपरोक्षी करिष्यति । संमत्स्यते चावयवान्तरमपि परम्परया । सुखादेर्मनोनिष्ठत्वान्मनसश्च स्थूलत्वाद्युगपत्तत्संबद्धहस्ताद्यवच्छेदकत्वे बाधकाभावश्चेति नोक्तविरोधः ॥ २३ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥२४ ॥इति ।

चन्दनबिन्दोरेकदेशावस्थितिः प्रत्यक्षा जीवस्य तु कुत्रावयवे कदाऽवस्थितिरिति वक्तुमशक्यमतोऽवस्थितौ विशेषान्नोक्तदृष्टान्त इति चेन्न । हि यस्मात् ' स वा एष आत्मा हृदि ' [ छा० ८ । ३ । ३ ] ' हृद्यन्तर्ज्योतिः पुरुषः ' [ बृ० ४ । ३ । ७ ] इत्यादिश्रुत्या हृद्येवावस्थित्यभ्युपगमाददोषः ॥ २४ ॥

ननु युगपत्पादाद्यवच्छेदेन जायमानानां सुखादीनां युगपत्साक्ष्यसंबन्धाज्ज्ञानानुपपत्तिर्बाह्यविषयाणामिव तेषामिन्द्रियजन्यवृत्तिविषयत्वानभ्युपगमान्मानसानन्तवृत्तीनां तासु मनःकरणकत्वस्य च कल्पनाद्गुरमणुत्वश्रुतेर्गौणत्वं तत्राऽऽह—

गुणाद्वा लोकवत् ॥ २५ ॥ इति ।

यथा लोके दीपादिः स्वगुणेन प्रभया संबद्धं भासयति तथा जीवोऽपि चैतन्यगुणेन देहव्यापकेन संबद्धं सुखादीति भावः ॥ २५ ॥

ननु चैतन्यगुणस्य जीव एव समवायात्पादाद्यवच्छिन्नसुखादिभिः संबन्धासंभवः । प्रभावत्तेजोविशेषो न गुणस्तत्राऽऽह—

व्यतिरेको गन्धवत् ॥ २६ ॥ इति ।

यथा गन्धसंबद्धे घ्राणे गन्धसमवायस्य व्यतिरेकस्तथा चैतन्यसंबद्धेऽपि सुखादौ तत्समवायस्य । तथा च स्वसंयुक्तसमवायेन यथा गन्धस्य घ्राणं ग्राहकं तथा विषयविषयिभावेन चैतन्यं सुखादेर्व्यवहारजनकमिति तस्य तत्रासमवायेऽपि न क्षतिरिति भावः ॥ २६ ॥

नन्वेवं जीवस्यैव विषयतासंबन्धः सुखादौ कुतो नाभ्युपेयते तत्राऽऽह—

तथा च दर्शयति ॥ २७ ॥ इति ।

नेदमस्माभिः कल्प्यते किंतु हृदायतनत्वाणुत्वे उपक्रम्य ' आ लोमभ्य आ नखाग्रेभ्यः ' [ छा० ८ । ८ । १ ] इति श्रुतिर्जीवस्य

शरीरतदवयवावच्छिन्नसुखादिसंबन्धं तथैव चैतन्यगुणद्वारैव दर्शयति ॥ २७ ॥

कुतः श्रुतेस्तथाऽर्थनिर्णयस्तत्राऽऽह—

पृथगुपदेशात् ॥ २८ ॥ इति ।

‘ प्रज्ञया शरीरं समारुह्य ’ [ कौषी० ३ । ६ ] इति श्रुत्या वक्तुर्जीवात्पृथक्त्वेन प्रज्ञाशब्देन करणचैतन्यस्य निर्देशात् ॥ २८ ॥

जीवाणुत्वं प्रत्याह—

तद्गुणसारत्वात्तु तद्व्यपदेशः
प्राज्ञवत् ॥ २९ ॥ इति ।

यथा हृदयाकाशदहरत्वमादाय प्राज्ञस्येशस्य दहरत्वे व्यपदेशो ‘ दहरोऽस्मिन्नन्तराकाशः ’ [ छा०८ । १ । २ ] इत्यत्र तथा जीवेऽप्यणुत्वादिविषयकश्रुतिरूपो व्यपदेश औपाधिकः । तद्गुणसारत्वात् । तस्यानवच्छिन्नब्रह्माभिन्नजीवप्रतिपादकमहावाक्यस्य गुणीभूतोऽपेक्षितोऽर्थः सारः प्रतिपाद्यो यस्य तथात्वात् । तथा च महावाक्ये ब्रह्माभिन्नजीवबोधनार्थमन्तःकरणधर्माणामणुत्वोत्क्रान्त्यादीनां निषेधे ‘ स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः ’ [ बृ० ४।३।१५ ] इति श्रुत्या बोधनीय औपाधिकं लोकसिद्धं तत्संबन्धं जीवेऽनुवदन्ती श्रुतिः ' प्रतियोग्युपस्थापकतयोपयुज्यते न तु स्वाभाविकाणुत्वादिकं प्रतिपाद्य मुख्यं महावाक्यं पीडयतीति भावः ॥ २९ ॥

ननु चेदुपाधिमतसंसार एव जीवस्य तर्ह्युपाधिना कदाचिद्वियोगे बन्धदशायामपि संसारो न प्रतीयते तत्राऽऽह—

यावदात्मभावित्वाच्च न दोष-
स्तद्दर्शनात् ॥ ३० ॥ इति ।

यावदात्मा जीवस्तत्त्वज्ञानानुत्पत्तिविशिष्टस्तावद्भावित्वादुपाधिसंबन्धस्य नोक्तदोषः ‘स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव ’ [ बृ० ४।३।७ ] इत्यादिना तथा दर्शनात् । समानोऽन्तःकरणेन साम्यमेव दर्शयति ध्यायतीत्यादि । लेलायति चलति । प्रतिबन्धकशून्यतत्त्वज्ञानपर्यन्तमारोपितस्योपाधिसंबन्धस्याऽऽवश्यकत्वं स्फटिकलौहित्यादौ तथा दर्शनादिति चकारार्थः ॥ ३० ॥

ननु सुषुप्तिप्रलययोरन्तःकरणासंबन्धोऽस्त्येवान्यथा तदानीं तद्धर्मोपलम्भापत्तेस्तत्राऽऽह—

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥ इति ।

यथा पुंस्त्वादेर्बाल्यादौ सतोऽपि सहकार्यभावान्न कार्यविशेषजनकस्वरूपाभिव्यक्तिः स्यात् । स्याच्चान्यदा तथा सूक्ष्मरूपेण सत एवान्तःकरणस्य सुषुप्त्यादौ न सा स्यात्स्याच्चान्यदा न त्वत्यन्तं तदसंबन्धस्तदेति भावः ॥ ३१ ॥

नन्वन्तःकरणमेव नास्ति कस्तद्धर्म आरोप्येत तत्राऽऽह—

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरानि-
यमो वाऽन्यथा ॥ ३२ ॥ (१३) इति ।

वृत्तिं विना चेद्विषयभासकं चैतन्यं स्यात्तस्य नित्यं सदोपलब्धिः स्याद्वृत्तेरपेक्षणे च तत्परिणामिनोऽन्तःकरणस्यानङ्गीकारे तदसंभवादनुपलब्धिः स्यात् । अथाऽऽत्मन एवाऽऽगन्तुको धर्मो वृत्तिः कल्प्योऽविद्याया वा परिणामः । तत्र च मनःपरिणामादिनियामकत्वेन त्वदभिमतमेवास्तु नियामकमिति चेत् । तथाऽपि ‘ मनसा ह्येव पश्यति मनसा शृणोति ’ [ बृ० १ । ५ । ३ ] ‘ एतत्सर्वं मन एव ’ ( बृ० १ । ५ । ३ ) इतिदर्शनादेर्मनोहेतुकत्वनियमः । ‘ अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम् ’ ( बृ० १ । ५ । ३ ) इति मनोधीनव्यासङ्गनियमश्च यः श्रौतो लोकसिद्धश्च वर्तते तयोरन्यतरदन्यथाभूतं व्याहतं स्यादन्यतरन्न स्यादिति यावत् ॥ ३२ ॥ ( १३ )

‘ असङ्गो ह्ययं पुरुषः ’ [ बृ० ४ । ३ । १५ ] इति श्रुतेरात्मनि कर्तृत्वसंबन्धासंभवादिष्टसाधनत्वबोधका विधयः कर्तृत्वं बुद्धावेव कल्पयन्ति नाऽऽत्मनि तत्र तद्व्यवहारस्त्वसंसर्गाग्रहात् । न चाऽऽरोपितकर्तृत्वसत्त्वेऽपि पारमार्थिकसङ्गाभावबोधकत्वेन श्रुत्युपपत्तिरिति वाच्यम् । विधितात्पर्यविषयत्वेनानारोपितत्वात् । तथा च श्रुत्यनूदितस्याणुत्वादेरात्मन्यारोपितत्वेऽपि कर्तृत्वं न तथेति सांख्यमतं प्रत्याह—

कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ इति ।

जीवः कर्तैव शास्त्रबोध्ययागादिफलभाक्त्वात् । ‘ शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात् ’ [ जै० अ० ३ पा० ७ अ० ८ सू० १८ ] इति

१ ख. ‘व्यासर्गादि’ ।

जैमिनिसूत्रस्य विधेः प्रयोक्तृगतफलसाधनतालक्षणत्वात्प्रयोक्तर्येव फलमित्यर्थकत्वात् । तथा च यथा बुद्धिनिष्ठस्यापि सुखादिलक्षणफलस्य चिदात्मना संबन्धं विना मानानुपपत्त्या तत्र तस्याऽऽरोपितसंबन्धवत्त्वं तथा कर्तृत्वस्यापि । विधीनां तु तत्त्वावेदकत्वरूपप्रामाण्याभावादारोपितकर्तृत्वपरत्वेऽपि क्षत्यभाव इति भावः ॥ ३३ ॥

विहारोपदेशात् ॥ ३४ ॥ इति ।

स्वप्नं प्रकृत्य 'स ईयतेऽमृतो यत्र कामम्' [ बृ० ४ । ३ । १२ ] 'स्वे शरीरे यथाकामं परिवर्तते' [ बृ० २ । १ । १८ ] इत्यादिनाऽऽत्मनि विहारकर्तृत्वोक्तेः ॥ ३४ ॥

उपादानात् ॥ ३५ ॥ इति ।

'प्राणानां विज्ञानेन विज्ञानमादाय' [ बृ० २ । १ । १७ ] इत्यनेनेन्द्रियाणां विज्ञानशक्तिं बुध्द्योपादायेत्यर्थकेनोपादानकर्तृत्वोक्तेः॥३५॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥ इति ।

विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च [ तै० २ । ५ । १ ] इत्यनेन क्रियामात्रकर्तृत्वव्यपदेशात् । अथोक्तश्रुतौ विज्ञानं बुद्धिरेव नाऽऽत्मेति चेत्तर्हि करणतयैव निर्देशः स्यान्न कर्तृतया । अत एव पूर्वश्रुतौ विज्ञानेनेति करणतानिर्देशः । तस्माद्बुद्धेः करणत्वमेव तथैव निर्देशादिति भावः ॥ ३६ ॥

ननु चेज्जीवस्य स्वातन्त्र्यरूपं कर्तृत्वं तर्हि कदाचिदिदं करोति कदाचिन्नेत्यनियमो न स्यात्तत्राऽऽह—

उपलब्धिवदनियमः ॥ ३७ ॥ इति ।

कारणान्तरसमवधानानियमाद्यथा तद्विषय उपलब्धावनियमस्तथा प्रकृते । तथा च कारकान्तराणामप्रयोज्यत्वे सति प्रयोजकत्वमेव स्वातन्त्र्यं न तु कारणान्तरानपेक्षत्वमिति भावः ॥ ३७ ॥

शक्तिविपर्ययात् ॥ ३८ ॥ इति ।

बुद्धेः कर्तृशक्त्यङ्गीकारे करणशक्तिरन्यत्रावश्यं वाच्या कर्तृतायाः करणव्याप्यत्वात् । तत्र चाऽऽत्मनोऽन्यस्य वा करणत्वाङ्गीकारे श्रुतहा-

---

१ रा. तत्रदि° ।

न्यश्रुतकल्पनानुभवविरोधश्च स्यात् । आत्मनश्च कर्तृत्वाङ्गीकारे दोषाभावादप्रयोजकं शक्तिविपर्ययमात्रं त्वया क्रियत इति भावः ॥ ३८ ॥

समाध्यभावाच्च ॥ ३९ ॥ (१४) इति ।

कर्तृत्वादेर्बन्धस्याऽऽत्मन्यङ्गीकारे श्रुत्युक्तस्य निदिध्यासनादेर्वैयर्थ्यं स्यात् । अविद्यानिवृत्तेरपि कर्तृत्वादिनिवृत्तिद्वारैव काम्यत्वात् । 'विद्वान्नामरूपाद्विमुक्तः' [मु० ३ । २ । ८] इति श्रुतेः ॥ ३९ ॥ (१४)

नन्वेवं सत्यमेवास्तु कर्तृत्वं तद्बोधकोक्तश्रुतीनामहं कर्तेत्यादिप्रत्यक्षाविसंवादात् । तथा चासङ्गश्रुतिरुपासनापरैव । न च तत्सत्यं चेज्ज्ञानानिवर्त्यत्वान्मोक्षेऽपि स्यादिति वाच्यम् । इष्टत्वात् । ज्ञेयाभावेऽपि ज्ञानवत्क्रियाभावेऽपि कर्तृत्वस्य शक्तिरूपस्य संभवादिति प्रत्याह—

यथा च तक्षोभयथा ॥ ४० ॥ (१५) इति ।

यथा तक्षा वास्यादेः करणस्य समवधाने छिदायाः कर्ता नासमवधान इत्युभयथा तस्य स्थितिरेवं करणादेः समवधान आत्मा कर्ता न तु तदभावे मोक्षे । ज्ञानस्वरूपस्य ज्ञानत्वस्य ज्ञेयाभावे सत्त्वेऽपि कृतिरूपस्य कर्तृत्वस्य क्रियाभावेऽसंभवात् । शक्तेरविद्याया मुक्तावभावात्तदतिरिक्तशक्तौ मानाभावात् 'यत्र त्वस्य सर्वमात्मैवाभूत्' [बृ०२।४।१४] इत्यनेन द्वैतमात्रस्य मोक्षे निवृत्त्युक्तेर्न तदा कर्तृत्वमिति भावः ॥ ४० ॥ (१५)

'एष ह्येव साधु कर्म कारयति' [कौषी० ३ । ८] इत्यादिकं नेशस्य कारयितृत्वपरं किंतु स्तुतिः । विधिनिषेधवाक्यानां वैयर्थ्यादीशस्य व्यतिरेकेण कार्यानुत्पत्तेर्वक्तुमशक्यत्वाच्चेति प्रत्याह—

परात्तु तच्छ्रुतेः ॥ ४१ ॥ इति ।

प्रत्यक्षगम्य एव कारणत्वेऽन्वयव्यतिरेकापेक्षणाद्विधिवाक्यार्थप्रतिसंधानादिकमपेक्ष्यैवेशस्य प्रवर्तकत्वाद्यङ्गीकारात् । श्रुतिबलादेव परात्परेशादेव जीवस्य कर्तृत्वमित्यर्थः ॥ ४१ ॥

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥ (१६) इति ।

विधिप्रतिषेधयोर्लौकिकपुरुषकारस्य चावैयर्थ्यानुरोधेन वैदिकलौकि-

---

१ क. 'ननहं । २ ख. नन्वेतत्त' । ३ ख. याऽभे' ।

कार्ष्णीवप्रयत्नानपेक्ष्यैव कारयितृत्वमीशस्य । ततश्च न वैषम्यादी-त्यर्थः ॥ ४२ ॥ ( १६ )

जीवब्रह्मणोः 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति ' इत्यादौ भेदः । ' ब्रह्म दाशा ब्रह्म दासा ब्रह्मेमे कितवाः ' ' तत्त्वमसि ' [ छा० ६ । ८ । ७ ] इत्यादौ चाभेद इति विरोधे जीवा एव स्वतन्त्राः स्वी क्रियन्ते न त्वनुगतं ब्रह्म तेषां च विशिष्टाविशिष्टरूपेण स्वत एव नियम्यनियन्तृभावादिकं भेदश्रुतेरर्थः । प्रकृतिविविक्तरूपमभेद-श्रुतेः । अन्यथा भेदाभेदयोर्विरोधादंशांशिभावे चांशगतदुःखाद्यंशिन्यपि स्यादिति प्रत्याह—

अंशो नानाव्यपदेशादन्यथा चापि दाश-
कितवादित्वमधीयत एके ॥ ४३ ॥ इति ।

नानाव्यपदेशं लौकिकभेदव्यवहारमपेक्ष्य जीवोऽंशो नियम्यत्वादिभे-दाद्भुताद्युक्तो न तु तात्पर्यतः । चस्त्वर्थोऽपिरेवार्थः । एक आथर्व-णिकादयस्त्वन्यथैव लोकानवगतसप्रयोजनत्वेन तात्पर्यवन्तं ब्रह्मणि दाशाकितवाद्यभेदमुक्तश्रुत्याऽधीयते । तथा च भेदश्रुतिरतात्त्विकभेदा-नुवादमात्रमभेदश्रुतिस्तु तात्त्विकाभेदतात्पर्यवतीति न विरोधः । उक्त-श्रुतौ दाशाः कैवर्ता दासाः सेवकाः कितवा द्यूतकराः । हीनजीवाभेद-प्रदर्शनं जीवमात्रभेदसूचनाय । अत एव ' त्वं स्त्री त्वं पुमान् ' [ श्वे० ४ । ३ ] इत्यादिश्रुतिः ॥ ४३ ॥

*मन्त्रवर्णात् ॥ ४४ ॥ इति ।

' ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ' [ छा० ३ । १२ । ६ ] इति मन्त्रे विश्वा भूतानि सर्वे जीवाः । ' अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः ' [ छा० ८ । १५ । १ ] इति प्रयोगात्तीर्थेभ्यो यज्ञेभ्यः पादोऽंश इत्यर्थः । अतो जीवानामंशत्वमेव ततश्चांशेनांशितानियम्यतासंभवः ॥ ४४ ॥

+अपि स्मर्यते ॥ ४५ ॥ इति ।

' ममैवांशो जीवलोके जीवभूतः [ भ० गी० १५ । ७ ] इत्या-दिना ॥ ४५ ॥

---

* अत्रत्यमुद्रितभाष्यपुस्तके—मर्णाच्चेति पाठः । + मुद्रितभाष्यपुस्तके—'पि च स्म' इति पाठः ।

नन्वभेदस्य श्रुतितात्पर्यवत्त्वे कुतो भेदेनांशांशिभावः। अनाद्यविद्यया कल्पनादिति चेत्। तथाऽप्यंशगतं दुःखाद्यंशिनि स्याद्धस्तादिगतस्य शरीरादिसंबन्धादित्यत्राऽऽह—

प्रकाशादिवन्नैवं परः ॥ ४६ ॥ इति।

यथा सूर्यादिप्रकाशोऽङ्गुल्याद्यवच्छेदेनैव ऋजुवक्रत्वादिमान्यथा वा कर्णाद्यवच्छेदेनैवाऽऽकाशादि शब्दग्राहकत्वादिमत्तथाऽन्तःकरणरूपांशतावच्छेदकावच्छेदेनैव संसार इति पर ईशो नैव संसारी। तथा चांशगतस्य नांशिगतत्वनियम इति भावः ॥ ४६ ॥

स्मरन्ति च ॥ ४७ ॥ इति।

अत एव स्मरन्ति च—

तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥
कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते।

चकारात् 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यः' [ श्वे० ४।६।] 'एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' [ कठ० ५। ११ ] इति श्रूयते ॥ ४७ ॥

अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥ इति।

यद्यपि परमार्थतो नियोज्यत्वं ब्रह्मरूपस्य जीवस्य नास्ति तथाऽप्याविद्यकदेहसंबन्धमादाय विधिनिषेधौ घटेते। औपाधिकस्यापि संबन्धस्य ज्योतिरादौ व्यवहारविषयत्वादित्यर्थः ॥ ४८ ॥

नन्वीशे संसारापत्तौ वारितायामप्युपाधिसंबन्धस्य सर्वजीवेष्वविशेषात्केनचित्कर्मणा कस्यचिद्योग इति नियमः कथं तत्राऽऽह—

असंततेश्चाव्यतिकरः ॥ ४९ ॥ इति।

तत्तदन्तःकरणानामदृष्टाश्रयाणामसंततेरसाधारणत्वादव्यतिकरो भोगासांकर्यम्। तथा च यत्रान्तःकरणे यददृष्टं तत्रैव तज्जन्यसुखादि जायते तदुपहितचैतन्येन च भास्यत इति भावः ॥ ४९ ॥

ननु चेत्कल्पितभेदेन संसार उपपाद्यते तर्हि भेदस्य मोक्षे कथं ज्ञाना-

न्निवृत्तिराश्रये सति भेदानिवृत्तेः काप्यदृष्टत्वादत एव भेदनित्यत्वं वदन्ति तत्राऽऽह—

आभास एव च ॥ ५० ॥ इति ।

चो हेतौ । यतो जीव आभासः प्रतिबिम्बरूपोऽतो नोक्तदोषः । तथा च यथा सत्यपि सूर्ये जलाद्युपाधिनाशात्तदवच्छेदेन कल्पितस्य सूर्यप्रतिबिम्बगतभेदस्य नाशात्सूर्यतत्प्रतिबिम्बयोरैक्यं पूर्वं सदेवावशिष्यते तथाऽविद्योपाधेर्ज्ञानेन नाशात्तदवच्छेदेन कल्पितभेदस्य नाशे सति ब्रह्मजीवयोरैक्यमित्याश्रये सत्यपि भेदनिवृत्तिर्नादृष्टचरीति भावः ॥ ५० ॥

जीवानां कणादादिसंमतवास्तवनानात्वविभुत्वादिव्यवच्छेद एवकारेणोक्तस्तत्र हेतुमाह—

अदृष्टानियमात् ॥ ५१ ॥ इति ।

तत्तदात्मगतैरदृष्टैस्तत्तदात्मनि भोगनियमो वाच्यः । अदृष्टं च केनचित्कर्मणा कुत्रचिदेवाऽऽत्मनीति नियमासंभवात् । तत्तददृष्टकारणस्य मनःसंयोगादेरात्मान्तरेऽप्यविशेषात् । तत्तत्क्रियानुकूलप्रयत्नादेरप्यात्मान्तर आपाद्यत्वात् तत्कारणस्य मनःसंयोगादेः सर्वेष्वेव विभुष्वात्मसु संभवात् । न च तत्तददृष्टजनकक्रियाविशेषजनकप्रयत्नविशेषं प्रति संयोगविशेषो हेतुस्तत्र च तत्तदात्मव्यक्त्यादेर्हेतुत्वाङ्गीकारान्न दोष इति वाच्यम् । तथा सति जीवानां वास्तवनानात्वविभुत्वाद्यङ्गीकारस्य वैयर्थ्याच्छ्रुतिस्मृतियुक्तिभिरस्मन्मतस्यैव सम्यक्त्वात्तत्तदन्तःकरणादीनामेवादृष्टवैजात्यप्रयोजकप्रयत्नवैजात्यप्रयोजकत्वसंभवात् ॥ ५१ ॥

यदि च फलेच्छारूपाभिसंधेः फलसाधनताज्ञानादेर्वा चिकीर्षाद्वाराऽदृष्टनियामकत्वमुच्यते तथाऽप्यभिसंध्यादिनियामकस्याऽऽत्मान्तराविशेषादिकं दोष इत्याह—

अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥ इति ।

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥ ( १७ ) इति ।

तत्तच्छरीररूपो यः प्रयत्नस्य प्रदेशोऽवच्छेदकस्तस्मान्नियमो वाच्यः । स्वावच्छेदकशरीरस्वामित्वसंबन्धेन यत्राऽऽत्मनि प्रयत्नस्तत्रादृष्टमिति

चेन्न। तत्रापि शरीरस्वामित्वादेर्नियामकाविशेषादात्मान्तराविशेषादिदोषस्यान्तर्भावादिति ॥ ५२ ॥ ५३ ॥ ( १७ )

इति द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

अथ द्वितीयाध्यायस्य चतुर्थः पादः ॥

---

चतुर्थे भौतिकश्रुतीनामविरोधः। तत्र 'असद्वा इदमग्र आसीत्' [तै०२।७] 'तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीरन्। तदाहुः के ते ऋषयः। प्राणा वाव ऋषयः। ते यत्पुराऽस्मात्सर्वस्मादिदमिच्छन्तः श्रमेण तपसा अऋषंस्तस्मादृषयः' इत्यत्र प्राक्सृष्टेः सर्वेन्द्रियाभिमानिहिरण्यगर्भात्मकप्राणानां सत्त्वोक्तेः। 'अस्मादात्मनः सर्वे प्राणा व्युच्चरन्ति' [बृ० २। १। २०] इत्यत्रोत्पत्तेर्विरोधे प्रश्नपूर्वकमुच्यमानत्वात्पुराऽस्मात्सर्वस्मादित्यस्यावान्तरसृष्टिपरत्वासंभवान्नोत्पद्यन्त इन्द्रियरूपाः प्राणाः। उत्पत्तिश्रुतिस्तु गौणीति प्रत्याह—

तथा प्राणाः ॥ १ ॥ इति।

यथा पूर्वपादाद्याधिकरणे वियदुत्पद्यत इत्युक्तं तथा प्राणा इन्द्रियरूपा वायुरूपाणामग्रे वाच्यत्वात्। अप्युत्पद्यत उक्तश्रुतेरिति शेषः॥ १ ॥

अस्तु सा गौणी तत्राऽऽह—

गौण्यसंभवात् ॥ २ ॥ इति।

तत्र गौण्या वृत्तेरसंभवात्प्रागुक्तेभ्यः प्रतिज्ञाहान्यादिभ्यः ॥ २ ॥

व्युच्चरतेरुत्पत्तौ गौणत्वमावश्यकं तत्राऽऽह—

तत्प्राक्श्रुतेश्च ॥ ३ ॥ इति।

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च खम्' [मु० २।१।३] इत्यादौ खादिपूर्वं प्राणोत्पत्तेर्मुख्यवृत्त्या प्रतिपादनात्। चकारादसद्वेत्यादिश्रुतेरवान्तरप्रलयविषयत्वमग्निचयनाख्यकर्मसाधनशर्करादेः स्तुत्यर्थं तत्सृष्टेः प्रकृतत्वात्तदर्थं चित्यात्मकत्वेनोपास्यहिरण्यगर्भात्मकप्राणप्राक्सत्त्वप्रतिपादनात्तस्य चावान्तरप्रलयेऽपि संभवात्प्राणस्य प्राक्सत्त्वरूपलिङ्गस्य श्रुत्या बाधाच्च ॥ ३ ॥

---

१ ख. °प्राक्त्वम°। २ ख. °प्राक्त्वरू°।

तत्पूर्वकत्वाद्वाचः ॥ ४ ॥ ( १ ) इति ।

छान्दोग्ये भूतसृष्टिनिकटे प्राणसृष्टयश्रुतावपि वाचो वागादीनां तत्पूर्वकत्वात् । 'आपोमयः प्राणस्तेजोमयी वाक्' [ छा० ६।५।४ ] इत्यादिना भूतोत्पत्तिपूर्वकोत्पत्तिकत्वलाभात् ॥ ४ ॥ (१)

'सप्त वै शीर्षण्याः प्राणाः' [ तै० सं० ५।१।७।१ ] इत्यत्र पञ्च बुद्धीन्द्रियाणि मनो बुद्धिश्चेति सप्तैवोद्दिश्य प्राणत्वविधानात्, सप्तैवोक्त्वा ' सर्वे प्राणा अनूत्क्रामन्ति ' [ बृ० ४।४।२ ] इत्युक्तेश्च सप्तैवेन्द्रियरूपप्राणाः । अथ ' दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति ' [ बृ० ३ । ९ । ४ ] इति श्रुतौ धीकर्मेन्द्रियाण्यात्मशब्दितं मनश्चेत्येकादशत्वमिति चेन्न । पञ्चानामेव सविकल्पकनिर्विकल्पकवृत्तिभेदाद्दशत्वोक्तिसंभवान्मनोबुद्ध्योश्चैक्यं विवक्षितं कर्मेन्द्रियं तु नात्र श्रुतावुक्तमिति शङ्कते—

सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥ इति ।

सप्तैव । गतेः सप्तत्वस्य प्रथममवगतेर्लघुत्वात् ॥ ५ ॥

प्रत्याह—

हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥ (२) इति ।

अत इति ल्यब्लोपे पञ्चमी । इदं सप्तत्वमादायैकादशत्वस्य स्थिते लक्षणे संभवति नैवं नैकादशत्वस्य बाधो युक्तः । तुर्हेतौ ततो हेतोर्हस्तादय एकादशैवेन्द्रियरूपप्राणाः । नच हस्तादेरिन्द्रियलक्षणानाक्रान्तत्वमिति वाच्यम् । इन्द्रियविषयानुक्रमणे ' चक्षुश्च द्रष्टव्यं च ' [ प्र० ४।८ ] इत्यादिना सविषयचक्षुरादेरिव ' हस्तौ चाऽऽदातव्यं च ' [ प्र० ४।८ ] इत्यादिना सविषयस्य हस्तादेरप्याम्नानात् । तथा चोभयाबाधायैकादशत्वमेव गृह्यते । सप्तत्वस्य त्ववयुत्यानुवादत्वम् । इन्द्रियत्वलक्षणं त्वपञ्चीकृतभूतोपादानकत्वे सति नित्यपरोक्षत्वम् । अदृष्टवारणायाऽऽद्यम् । पञ्चीकृतभूतवारणायान्त्यम् । प्राणमनसोरभेदाच्च प्राणेऽतिव्याप्तिः । मनसो वृत्तिरूपेण परिणतस्यापरोक्षत्वेऽपि स्वरूपेण नित्यपरोक्षत्वमेव । इन्द्रियाविषयत्वमेव वा नित्यपरोक्षत्वं ग्राह्यमिति भावः ।

---

१ ख. सप्त चेन्द्रि° ।

प्रयोजनं हिरण्यगर्भाद्युपास्तिषु। एकादशानां प्राणानामुपास्तिः सिद्धान्ते सप्तानामेव पूर्वपक्षे ॥ ६ ॥ (२)

इन्द्रियाणि सर्वदेहविषयव्यापकान्यहंकारित्वात् 'त एते सर्वेऽनन्ताः' इति श्रुतेश्च। उत्क्रान्त्यादिकं तु वृत्तिसंकोचनादिनेति सांख्यमतं प्रसङ्गात्प्रत्याह—

अणवश्च ॥ ७ ॥ (३) इति।

त इन्द्रियरूपाः प्राणाः सूक्ष्मास्तत्तद्देहमात्रवृत्तय इति यावत्। अतथात्वे प्रतिनियतदेशकालावच्छेदेन ग्राहकत्वाद्यसंभवादुत्क्रान्त्यादेर्मुख्यत्वे बाधकाभावादानन्त्यश्रुतेः 'यो हैतानननन्तानुपास्ते' [ बृ० १।५।१३ ] इत्यनेनोपासनापरत्वनिर्णयाद्भौतिकत्वस्य व्यवस्थापितत्वेनाऽऽहंकारिकत्वायोगाच्च ॥ ७ ॥ (३)

तथाऽपि वायुरूपः प्राणो नोत्पद्यते। महाप्रलयं प्रकृत्य 'आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनाऽऽस [ ऋ० सं० ८। ७।७ ] इति श्रुत्या ब्रह्म महाप्रलये स्थितं तच्च परमार्थतो वातहीनमप्यननव्यापारवद्व्यावहारिकप्राणसंबन्धादिति बोधनादानीदित्यस्य निषेधबोधकत्वेन बलवत्यां श्रुतौ संबन्धत्वेन बलित्वात् 'एतस्माज्जायते प्राणः' [ मु० १।२।३ ] इति श्रुतिं प्रत्यपि बाधकत्वम्। अत एव दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः' इत्युक्तमित्यधिकमाशङ्क्यातिदिशति—

श्रेष्ठश्च ॥ ८ ॥ (४) इति।

श्रेष्ठो वायुरूपोऽपि प्राणो जायते श्रेष्ठत्वं प्राणसंवादरीत्या निषेधश्रुतिस्तस्याप्यानीदित्यस्य स्वधाशब्दितमायासहितस्य ब्रह्मणः स्थितिरूपजीवनमात्रार्थकत्वात्प्राणजन्मश्रुतेर्मुख्यत्वात् ॥ ८ ॥ (४)

'यः प्राणः स वायुः' इत्यत्र वायुमात्रस्यैव प्राणत्वोक्तेः 'जायते प्राणो मनः सर्वेन्द्रियाणि च खं वायुः' [ मु० २।१।३ ] इत्यत्र च वायुप्राणयोर्भेदनिर्देशाद्विरोधं प्रतिवदन्मिलितानामिन्द्रियाणां वृत्त्यतिरिक्तो न मुख्यः प्राण इति सांख्यं प्रसङ्गात्प्रत्याह—

न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥ इति।

वायुमात्रं क्रिया मिलितेन्द्रियवृत्तिश्च न मुख्यः प्राणः। 'यः प्राणः स वायुः' इत्यस्य वायुमात्राभेदाबोधकत्वेन 'जायते प्राणः' इत्यादा-

न्द्रियोत्पत्त्युक्त्या तद्वृत्तीनामप्युत्पत्तिलाभेन च प्राण इत्यस्य च पृथग्वायुत्वाधान्तरधर्मेणैवोपदेशत्वसंभवात् ॥ ९ ॥

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ १० ॥ इति ।

प्राणसंवादादौ चक्षुरादिभिः सह प्राणस्य शिष्टैराम्नानात्तेभ्यः प्राशस्त्योक्तेस्तद्वृत्तिभ्यः पार्थक्येनोक्तेश्च तेषामिव तस्यापि स्वातन्त्र्यं न तद्वृत्तित्वम् ॥ १० ॥

तर्हि तद्वद्विषयं गृह्णीयात्तत्राऽऽह—

अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥ इति ।

अनिन्द्रियत्वाद्विषयाग्राहकत्वं न दोषः । तर्हि तस्य केन कार्येण स्वातन्त्र्यं तत्राऽऽह—तथेति । 'अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' [ प्र० २ । ३ ] इति श्रुतिर्देहधारणं कार्यं दर्शयति । अहं प्राणः । बाणं देहं तस्य देहधारकत्वमकारम् ॥ ११ ॥

आवश्यकत्वं चाऽऽह—

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥१२॥ ( ५ ) इति ।

यथा सांख्यानां प्रमाणविपर्ययविकल्पनिद्रास्मृतीनां पञ्चवृत्तीनामन्येनानिर्वाहान्मन आवश्यकं तथेन्द्रियाणां सुषुप्तौ मूर्छायां लये विषयान्तरसंबन्धे वा प्राणनादिपञ्चवृत्तीनामन्येनानिर्वाहात्प्राणोऽपि । पूर्वपक्ष इन्द्रियवृत्त्यादिभ्य एवाऽऽत्मविवेचनं सिद्धान्ते तु प्राणादपीति प्रयोजनम् ॥ १२ ॥ ( ५ )

तथाऽपि प्राणो विभुः । तं प्रकृत्य 'सम एभिस्त्रिभिर्लोकैः' [ बृ० १ । ३ । २२ ] इत्युक्तेः । उत्क्रान्त्यादिकं त्वौपाधिकमिति प्रत्याह—

अणुश्च ॥ १३ ॥ ( ६ ) इति ।

अणुर्विभुर्भिन्नः । सम इत्यादौ हिरण्यगर्भरूपसमष्ट्यभिप्रायत्वात् । जीवोपाधित्वसिद्धिः प्रयोजनम् ॥ १३ ॥ ( ६ )

'अग्निर्वाग्भूत्वा मुखं प्राविशत्' [ ऐ० २ । ४ ] इत्यादिकं वागादीनां नाग्न्यादिदेवताधिष्ठितत्वं बोधयति किंत्वर्थप्रकाशकत्वादिकम् । अन्यथा देवतानां जीवैरैकमत्याभावेन जीवेषु प्रतिनियतग्राहकत्वायो-

'गात् । चक्षुषा हि रूपं पश्यतीत्यादिना नैरपेक्ष्येण हेतुत्वावगमात् । जीवेनैवाधिष्ठानसंभवाच्चेति प्रत्याह—

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥ इति ।

अग्न्यादिदेवताधिष्ठानमेव । ऐकमत्यं त्वधिष्ठाननियामकादृष्टमहिम्ना तदपरोक्षज्ञानवत्त्वे सति तत्प्रेरकस्यैवाधिष्ठातृपदार्थत्वेन जीवे तदसंभवात् । नैरपेक्ष्यबाधस्तु प्रमाणसद्भावात् ॥ १४ ॥

ननु देवतानामधिष्ठातृत्वेऽधिष्ठेयेन्द्रियवति देहे भोक्तृत्वमपि स्यात्तत्राऽऽह—

प्राणवता शब्दात् ॥ १५ ॥ इति ।

प्राणवता तत्तदिन्द्रियाधिष्ठानाद्भिन्नेन जीवेनैव सह तत्तदिन्द्रियाधीनभोगसंबन्धः । 'यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुः' [ छा० ८ । १२ । ४ ] इत्यादेस्तद्बोधकशब्दाद्देवतानां नानात्वान्निहीनतत्तच्छरीरे भोक्तृत्वासंभवाच्च । यत एतदाकाशं गोलकमनु आसितं चक्षुर्यत्र जीवे विषण्णं धर्माध्यासद्वारा संबद्धं स पुरुषो दर्शनाय स्वनिष्ठसुखादिहेतुदर्शनाय चाक्षुषश्चक्षुःसंबन्धी सं चक्षुश्चाक्षुषज्ञानसाधनम् ॥ १५ ॥

तस्य च नित्यत्वात् ॥ १६ ॥ ( ७ ) इति ।

तस्य तादृशभोक्तृत्वस्यैव नित्यत्वादावश्यकत्वात् । अन्यथा तत्तच्छरीर निषिद्धभोगाद्देवतानां पापसंबन्धापत्तेः 'न ह वै देवान्पापं गच्छति' [ बृ० १ । ५ । ३ ] इतिश्रुतेरनुपपत्तेः । *अथवा तस्य भोगसंबन्धस्य* नित्यत्वादनाद्यविद्यामूलकत्वाद्देवानां च सूर्यादीनामुत्पन्नज्ञानत्वाद्द्रष्ट्रदाभिमानपूर्वकभोगासंभवात् ॥ १६ ॥ ( ७ )

'प्राणो मनः सर्वेन्द्रियाणि' [ मु० २ । १ । ३ ] इति पृथङ्निर्देशलिङ्गं मनस इव प्राणस्यापि नातीन्द्रियत्वसाधकम् । 'इन्द्रियमिन्द्रलिङ्गम्' [ पाणिनि सू० ५ । २ । ९३ ] इत्यात्मलिङ्गमात्रस्य प्राणादेरिन्द्रियत्वबोधकपाणिनिस्मृतेरिति प्रत्याह—

त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ इति ।

ते मुख्यान्यप्राणा एवेन्द्रियाणि तेषामेवेन्द्रियानुक्रमणश्रुतौ व्यपदेशा-

---

१ ख. 'पेक्ष्यनाहे' । २ ख. 'द्यात्राभि' । ३ ख. 'च । ९' । ४ ख. आभितं ।

दृवृद्धानां तेष्वेवेन्द्रियत्वव्यपदेशाच्च । रूढेर्बलवत्त्वात्स्मृतौ च स्वरार्थमेवेन्द्रियलिङ्गताव्युत्पादनाच्च ॥ १७ ॥

अथ सन्तु प्राणवृत्तय एवेन्द्रियाणि 'एत एतेनाऽऽख्यायन्ते प्राणा इति' [ बृ० १ । ५ । २१ ] इति प्राणश्रुतेः 'एतेऽस्यैव सर्वे रूपमभवन्' [ बृ० १ । ५ । २१ ] इतिवाक्याच्च । भेदनिर्देशलिङ्गं तु मनःकामादाविवेति प्रत्याह—

भेदश्रुतेः ॥ १८ ॥ इति ।

'अथ हेममासन्यं प्राणमूचुः' [बृ०१।३।७] इत्यादिना प्राणसंवादादौ प्राणपर्यायात्पृथगेवेन्द्रियाणां श्रुतेर्न प्राणवृत्तिरिन्द्रियम् ॥ १८ ॥

वैलक्षण्याच्च ॥ १९ ॥ (८) इति ।

सुप्तेषु वागादिषु 'प्राणाग्नय एवास्मिन्पुरे जाग्रति' (प्र० ४।३) इत्यस्मात् 'वागुदक्रामदवदन्नास्ते' इत्यादिना वागाद्युत्क्रान्तावपि देहस्थितिः । 'प्राण उदक्रामत्प्राण उत्क्रान्तेऽपतत्' इति प्राणोत्क्रान्तौ देहपातः । 'वाक्प्राविशदशयदेव शरीरम्' इति प्राणोत्क्रान्तौ वागादिःप्रवेशेऽपि देहानुत्थानम् । 'प्राणः प्राविशत्प्राणे प्रपन्न उदतिष्ठत्' इति प्राणप्रवेशादेवोत्थानमित्यस्माच्च वैलक्षण्यात् ॥ १९ ॥ ( ८ )

अत्रिवृत्कृतभूतोत्पादनस्येश्वरत्वेऽपि त्रिवृत्कृततदुत्पादनं जैवम् 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' [ छा० ६ । ३ । २ ] इत्यत्र जीवस्य व्याकरणे स्वतन्त्रकर्तृत्वलाभात् । चारेण परसैन्यं वेदयतीत्यत्र राजादेरिवेशस्य हेतुकर्तृत्वमात्रप्रतीतेः । न च संनिधेः क्त्वान्तेनैव जीवस्यान्वय इति वाच्यम् । आकाङ्क्षायाः प्रधानीभूतव्याकरणक्रियातन्त्रायाः प्रकरणभूतायाः स्थानरूपात्संनिधेर्बलवत्त्वात् । 'आकाशो वै नाम नामरूपयोर्निर्वहिता' ( छा० ८ । १४ । १ ) इत्यत्र त्वैश्वरं तत्प्रतीयत इति विरोधे प्रत्याह—

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ इति ।

त्रिवृत्कुर्वत ईशस्यैव नामरूपव्याकरणमुक्तोपदेशात् । अनुप्रवेशे जीवस्य स्वतन्त्रत्वेऽपि व्याकरणे तस्यायोग्यतया तत्रेशस्यैवान्वयात् । क्त्वाश्रुतेरेककर्तृकत्वं तु जीवेशयोर्वास्तवैक्यात् । व्याकरणस्य जीवभोगार्थताप्रदर्शनमेव जीवानुप्रवेशकथनफलमिति तदवैयर्थ्यात् ॥ २० ॥

---

१ ख. परयामीत्य' । २ ख. 'णरूपायाः । ३ ख. 'न्त्रकर्तृत्वे' ।

त्रिवृत्कृतानामपि पृथिव्यादीनां देहान्तस्त्रिवृत्करणान्तरमुक्तम्— 'इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका' [छा० ६।४।७] 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः' (छा० ६।५।१) 'आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः' (छा० ६।५।२) 'तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्' (छा० ६।५।३) इति। तत्र त्रिवृत्कृतान्नादिपरिणामस्यापि मांसादेः पार्थिवत्वादिव्यपदेशो न विरुध्यतेऽन्नादेः पृथिव्याद्यंशाधिक्यादित्युत्तरसूत्रेण वक्तुं तदनुवदति—

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २१ ॥ इति।

श्रुतौ प्रथमोक्तस्यापि पुरीषस्यात्यश्लीलतां मत्वा सूत्रे प्रथमत्वेन नोपादानम्। आदिना मनःपुरीषे इतरयोरप्तेजसोः कार्यं च यथाश्रुति मूत्राद्यस्थ्यादीत्यर्थः ॥ २१ ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥ (९) इति।

तत्र मांसादिषु पार्थिवत्वादिवादस्तु वैशेष्यादन्नादेः पृथिव्याद्यंशाधिक्यात्। तद्वाद इति पदाभ्यासोऽध्यायसमाप्तिं द्योतयति ॥ २२ ॥

इति द्वितीयाध्यायस्य चतुर्थः पादः।

---

इति श्रीपरमानन्दसरस्वतीपूज्यपादशिष्यश्रीब्रह्मानन्दसरस्वतीविरचितवेदान्तसूत्रमुक्तावल्यां द्वितीयोऽध्यायः समाप्तः ॥ २ ॥

---

अथ तृतीयाध्यायस्य प्रथमः पादः ॥

---

अविरोधेन वेदान्तवेद्यतया प्रामाणिकं ब्रह्म प्राप्तुं सोपायं ज्ञानं तृतीयाध्यायार्थः। तत्र प्रथमे वैराग्यं देहान्तरावाप्तिप्रकारदर्शनेनोच्यते। देहान्तरावाप्तये धूमादिमार्गेण गतिः प्राणादिभिरेव सह न तु भूत-

---

१ ख. 'हात्रिवृ'।

सूक्ष्मैर्मानाभावात् । न च ' पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' [ छा० ५ । ३ । ३ ] इत्यत्र द्युपर्जन्यभूपुंयोषित्स्वग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपास्वाहुतिषु पञ्चम्यां रेतोरूपायामाहुतावापोऽग्निहोत्रादिसाधनद्रव्यसूक्ष्मभागाः पुरुषवचसो देहशब्दिता भवन्तीत्यर्थः । तादृशद्रव्याणां हि सूक्ष्मतया परिणतानां श्रद्धासाधनकतया श्रद्धाशब्दितानां होतृमृतजीवावच्छिन्नानां द्युलोकगतानां चन्द्ररूपेण परिणतानां जलरूपेण स्थितिः पर्जन्ये वृष्टिरूपेण भुव्यन्नरूपेण पुंसि रेतोरूपेण योषिति तथा च पञ्चम्यामेवाऽऽहुतौ पुरुषवचस्त्वोक्त्याऽन्याहुतिषु तद्व्यतिरेकेणापां जीवं संवेष्ट्य सत्त्वलाभ इति वाच्यम् । पञ्चम्यामाहुतावापो भवन्ति ताः पुरुषवचसश्च भवन्तीत्यर्थात्पूर्वमपां सत्त्वालाभात् । न चैवं वाक्यं भिद्येतेति वाच्यम् । त्वन्मतेऽप्यपोऽनूद्य पञ्चमाहुतिसंबन्धस्य पुरुषवचस्त्वस्य च विधाने तदावश्यकत्वादिति प्रत्याह—

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः
प्रश्ननिरूपणाभ्याम् ॥ १ ॥ इति ।

तदन्तरस्य देहान्तरस्य प्रतिपत्तौ प्राप्तये तादृशभूतसूक्ष्मैः संपरिष्वक्तं एव रंहति धूमादिमार्गेण गच्छति ' वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ' [ छा० ५ । ३ । ३ ] इत्यादिप्रश्नात् । ' इति तु पञ्चम्यामाहुतावापः ' [ छा०५ । ९ । १ ] इत्यादेर्निरूपणादुत्तराच्च । तादृशप्रश्नोपक्रमकसंदर्भस्य धूमादिमार्गमनूद्य पञ्चाग्निकल्पनयोपास्तिमात्रस्य विधानेन वाक्यभेदादिशङ्काभावात् ॥ १ ॥

उक्तवाक्य आप एव श्रुता न तु भूतमात्रसूक्ष्मांशास्तत्राऽऽह—

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥ इति ।

प्रकृतेऽप्पदार्थस्य भूतत्रयात्मकत्वाद्द्रवद्रव्यभूयस्त्वाच्चाऽऽहुतिद्रव्याणामप्शब्देन निर्देशः ॥ २ ॥

नन्वाहुतिजन्यादृष्टवानेव याति न तु भूतसूक्ष्मवानन्यत्रापि तत्सौलभ्यात्कथं वा युक्तिविरुद्धं श्रुतिर्वक्तीत्यत्राऽऽह—

प्राणगतेश्च ॥ ३ ॥ इति ।

पञ्चीकृतभूतमयमाश्रित्यैव जीवद्दशायामपि प्राणानां गत्यादिदर्शनात् । लोकान्तरगतिकल्पनाया अपि तादृशदृष्टानुसारित्वात् । परेषां

१ ख. 'नेन त' । २ ख. 'क्तश्च रं' । ३ क. तत्राऽऽह' । ४ ख. 'ति । भू' ।

तीतेः । तथा च श्रुत्योरेकवाक्यत्वानुरोधाद्युगपद्भूतांशजीवयोरुत्क्रान्तिश्रुतेश्च रंहति स्वरूक्त इत्यदोषमिति भावः ॥ ६ ॥

नन्वेवमाकाशादित्याद्युक्तानन्तरं 'तद्देवानामन्नं तं देवा भक्षयन्ति' [ छा० ५।१०।४ ] इति श्रवणादेव भक्ष्यशरीरार्थमिष्टाद्यनुष्ठानं वृथा स्यात्तत्राऽऽह—

भाक्तं वाऽनात्मवित्त्वात्तथा हि
दर्शयति ॥ ७ ॥ (१) इति ।

नैव वाच्यं वा यस्मादन्नमिति परिचारकपरतया भाक्तं केवलेष्टकारिणमनात्मवित्त्वात् । 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानाम्' [ बृ० १।४।१० ] इत्यनात्मविदां देवपरिचारकत्वावगमात् । 'स सोमलोके विभूतिमनुभूय पुनरावर्तते' [ प्रश्न० ५।४ ] इति श्रुत्यन्तरं तथा भोगं दर्शयति हि । पञ्चाग्निविद्यायां चिन्ताया विषयतो विशेषः फलमत्र बोध्यम् ॥७॥(१)

संचितकर्मविशिष्टस्य भूतसूक्ष्मैः सह देहान्तरप्राप्तिरभिप्रेता पूर्वं तन्न । 'तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते' [ छा० ५।१०।५ ] इत्यत्र संपतति गच्छत्यनेनेति संपातशब्दितकर्ममात्रभोगस्य देहान्तरावाप्तिपूर्वमुक्तत्वात् 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे' [ बृ० ४।४।६ ] इति श्रुत्यन्तराच्चेति प्रत्याह—

*कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां*
*यथेतमनेवं च* ॥ ८ ॥ इति ।

धूमादिमार्गे भोगार्थं कृतस्य कर्मणोऽत्यये फलभोगसमाप्तावनुशयवानैहिकभोगसाधनकर्मवांस्तदन्तरप्रतिपत्तये रंहतीत्यनुपपद्यते । दृष्टात्, दृश्यमानादैहिकभोगात् । 'य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा । अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा [ छा० ५।१०।७ ] इति श्रुतेर्वा । रमणीयचरणाः सम्यगाचारविशिष्टाः कपूयचरणा निन्दिताचारविशिष्टाः । न च यावत्संपाताद्युक्तानुरोधेनात्रान्यदीयाचारेण

रमणीयादियोनेर्भोगस्य चाऽऽसिरुक्ता पुत्राद्याचारेणपित्रादेस्तथा दर्शना दिति वाच्यम्। मनुष्यादिलोकनियतफलककर्मणां चन्द्रादिलोके भोगासंभवाद्यावत्संपातेत्यादेः संकोचावश्यकत्वात्साक्षात्संबन्धेन रमणी- याद्याचारवैशिष्ट्यबोधने बाधकाभावात्। 'भेत्य कर्मफलमनुभूय ततः शेषे- ण विशिष्टदेशजातिकुलरूपायुःश्रुतवित्तवृत्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति स्मृतेश्च। तच्च धूमादिमार्गादवरोहणं यथेतमारोहणेन तुल्यमनेव- मतल्यं च। 'आकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं मभ्रिहोत्रभ्रं भूत्वा प्रवर्षति' [ छा० ५।१०।५ ]इत्यवरोहण आरोहणोक्त- हुते उत्काशायोस्तदनुक्तोरभ्रादेश्चोक्तत्वात् ॥ ८ ॥

चरणादिति चेन्नोपलक्षणार्थेति

कार्ष्णाजिनिः ॥ ९ ॥ इति।

य इहेत्याद्युक्तश्रुतिश्चरणाच्छीलरूपादेवावरोहणं वक्तीति चेन्न। यतः कार्ष्णाजिनिरस्यां श्रुतौ चरणेत्यनुशयस्य लक्षकमित्याह ॥ ९ ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥ इति।

'यान्यस्माकꣳ सुचरितानि तानि त्वयोपास्यानि' [ तै० १।११। २ ] इति श्रुत्युक्तशीलानुष्ठानस्य वैयर्थ्यमिति चेन्न। 'आचारहीनं न पुनन्ति वेदाः' इत्यादिनाऽनुशयस्यापि फलोत्पादने शीलानुष्ठाना- पेक्षत्वात् ॥ १० ॥

सुकृतदुष्कृते एवेति तु बादरिः ॥११॥ (२) इति।

बादरिस्तु सुकृतदुष्कृते एवाऽऽचारः। श्रुतिलोकयोर्भेदेन व्यवहारश्च सामान्यविशेषभावादित इत्याह ॥ ११ ॥ (२)

ननु यावत्संपातेत्यादाविव 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रम- समेव ते सर्वे गच्छन्ति' [ कौषी० १।२ ]इत्यत्र संकोचे नियामकं नास्ति तथा चाविशेषादनिष्टादिकारिणोऽपि धूमादिमार्गेण गच्छन्ति। न च 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति' [ छा० ५।१०।८ ] इत्यनेनोत्तरदक्षिणमार्गाति- राहित्येन क्षुद्रमाणित्वाप्युक्तिरलग्नेति वाच्यम्। तस्याः सर्वश्रुत्यनुरोधेन

---

१ क. 'रेणापि'।

मार्गद्वयभोगराहित्यमात्रपरत्वाद्भोगं विना धूमादिमार्गेण गत्या पञ्च-माहुत्याप्त्यनन्तरं क्षुद्रप्राणित्वाप्तिसंभवादित्याक्षिपति—

अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ इति ।

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥ इति ।

तुशब्दादाक्षेपव्यावृत्तिः । तथा च नानिष्टादिकारिणो धूमादिमार्गे आरोहावरोहौ किंतु संयमने यमपुरे तेषां यामीयातना ऐहिकदुःखं चानुभूय मुहुः संयमन इह लोके च गतेः श्रुतौ दर्शनात् । तथा च यमोक्ता श्रुतिः ' अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमाप-द्यते मे ' [ कठ० २ । ६ ] इति ॥ १२ ॥ १३ ॥

स्मरन्ति च ॥ १४ ॥ इति ।

स्मरन्ति च मन्वादयस्तथा नाचिकेतोपाख्यानादिषु ॥ १४ ॥

अपि* सप्त ॥ १५ इति ।

अपि सप्त नरकास्तेषां भोग्यत्वेन स्मरन्ति ॥ १५ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥ इति ।

नरकभोक्तृत्वेऽपि यमवश्यत्वश्रुतेर्न विरोधो नरकेषु तस्य यमस्यैव व्यापाराद्धिष्ठातृत्वात् ॥ १६ ॥

ननूक्तश्रुत्यादितो धूमादिमार्गे गच्छतामेवानिष्टादिकारिणां यमलो-केऽपि यातनाभोगोऽस्तु तत्राऽऽह—

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥ इति ।

' तद्य इत्थं विदुः ' [ छा० ५ । १० । १ ] इत्यादिना ' य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ' [ छा० ५ । १० । ३ ] इत्यादिना च पञ्चाग्न्याद्युपासनरूपविद्याया इष्टादिकर्मण एव चेत्युत्तरदक्षिणमार्गाप्ति-साधनतया प्रकृतत्वात् । तस्मादनिष्टादिकारिणां यमलोकयातनाव-च्छिन्नस्तृतीय एव मार्गः ॥ १७ ॥

ननु तथाऽपि ' पञ्चम्यामाहुतावापः पुरुषवचसः ' [ छा० ५ । ३ । ३ ] इत्यविशेषश्रुतिविरोधस्तत्राऽऽह—

---

* मुद्रितब्रह्मसूत्रभाष्यपुस्तके—'पि च स' इति पाठः ।

न तृतीये तथोपलब्धेः ॥ १८ ॥ इति ।

तृतीये मार्गे न पञ्चमाहुत्यापत्तिनियमो यूकादौ तथा पञ्चमाहुत्यापत्ते-रनियतत्वोपलब्धेः ॥ १८ ॥

स्मर्यतेऽपि च लोके ॥ १९ ॥ इति ।

स्मर्यतेऽपि च तथा लोके पुराणेषु च द्रोणद्रौपद्यादीनाम् ॥ १९ ॥

दर्शनाच्च ॥ २० ॥ इति ।

'आण्डजं जीवजमुद्भिज्जम्' [ छा० ६ । ३ । १ ] इतिश्रुतौ पञ्च-माहुत्या तद्व्यतिरेकेण च देहाप्तिदर्शनात् । चकारात्तादृशनियमे न मानम् ॥ २० ॥

ननु पञ्चमाहुतिमाप्त्वैव यूकत्वाद्यापत्तेर्न तन्नियमे व्यभिचारस्त-त्राऽऽह—

तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥ ( ३ ) इति ।

नैवं वाच्यं यतः 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्य-सकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' [ छा० ५ । १० । ८ ] इत्यत्रोत्तरमार्गस्येष्टादिकर्माधिकृत्य निर्दिष्टस्य पञ्चमाहुत्यवच्छिन्नदक्षिणमार्गस्य च राहित्येन मार्गान्तराप्तिः पापाति-शयरूपात्संशोकात्क्षुद्रजन्तुतया जायमानस्यानिष्टादिकारिणः स्यादिति तृतीयशब्दबलाल्लभ्यते । स्थीयतेऽनेनेति स्थानमपि मार्ग एव । अन्यथा मार्गतृतीयत्वानुपपत्तेः । अतस्तादृशतृतीयशब्दस्यावरोधोऽनुरोधः । तथा च तृतीयशब्दानुरोधादुपासकानां दक्षिणमार्गागमनाच्च 'चन्द्र-मसमेव ते सर्वे गच्छन्ति' [ कौषी० १ । २ ] इत्यस्य संकोचावश्यक-त्वादिष्टादिकारिणं प्रकृत्यैव पञ्चमाहुत्युक्तेश्च तदन्येषां तृतीय एव मार्ग इति भावः ॥ २१ ॥ ( ३ )

इष्टादिकारिण एव यदवरोहणमुक्तं तत्प्रकार आपादसमाप्ति चिन्त्यते । तृतीयश्रुत्या स्थानं मार्ग उक्तं यथा तथा 'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति [ छा० ५ । १० । ५ ] 'अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति

१ ख. 'से त' । २ क. 'रिणां म' ।

त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति [ छा० ५ । १० । ६ ] इत्यवरोहश्रुतौ वायुर्भूत्वेत्यनुशयिनो वायोस्तादात्म्यावगमादाकाशेनापि तदवगम्यताम् । तथा च वाय्वाकाशादिरूपेणानुशयिलिङ्गशरीरं परिणमते तदर्थमेव गतिकर्मत्वमिति प्रत्याह—

साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥ ( ४ ) इति ।

सिद्धस्यैवाऽऽकाशवाय्वादेः कर्मत्वादुपस्थितत्वाच्च तदन्तर्भावेनैव भूत्वेत्यत्रान्वयादाकाशतादात्म्यापन्नं प्रत्याकाशस्याऽऽकाशादित्यनेनोक्तापादानत्वानुपपत्तेश्चाऽऽकाशसदृशो वाय्वादिसंबद्धो भूत्वेत्येवार्थ इत्युपपत्तेः । आकाशसंबन्धत्वस्य सार्वादिकत्वेनाऽऽकाशसदृशस्यैवाऽऽकाशपदार्थत्वौचित्यात् । समानधर्मत्वं मिलित्वाऽवस्थितिश्च साभाव्ये तदापत्तिरेवार्थः ॥ २२ ॥ ( ४ )

उक्तवाक्ये दुःशब्दस्य चिरकालावच्छिन्नत्वमर्थः । अत इत्यस्याऽऽकाशसादृश्यवाय्वादियोगात्तेरित्यर्थः । दुर्निष्प्रपतरमित्यत्र पतेस्तलोपश्छान्दसः । तथाऽऽकाशादिसाम्यं वाय्वादियोगं च प्राप्य चिरकालोत्तरमनुशयी पततीत्यर्थः । अतिशयार्थे तरप्प्रत्ययः । अथातःशब्दस्याव्यवहितपूर्वव्रीह्यादेरेव परामर्शकत्वं ततश्च तस्मादेव चिरकालोत्तरपातोक्त्याऽऽकाशसादृश्याद्यचिरमिति चेन्न । तावताऽपि दुःशब्दस्य दुःख एव प्रसिद्धेश्चिरार्थकत्वाभावाद्व्रीह्यादियोगदृष्टान्तेनाऽऽकाशसादृश्यादेश्चिरत्वस्यानुमेयत्वाच्चेति प्रत्याह—

नातिचिरेण विशेषात् ॥ २३ ॥ ( ५ ) इति ।

व्रीह्यादियोगस्येवाऽऽकाशसाम्यादिकं नातिचिरम् । अत इत्यस्य व्रीह्यादिमात्रपरामर्शित्वाद्व्रीह्यादियोगदशायामनुशयिनो दुःखाभावस्याऽऽगाम्यधिकरणे वक्ष्यमाणत्वाद्दुष्करमेतद्ब्रक्षणमित्यादौ दुःशब्दस्य चिरनिरूढत्वेनोक्तरीत्या व्रीह्यादियोगस्यैवातिचिरत्वप्रतीतिरूपाद्विशेषात् । ततश्चानुमानमपि पराहतमिति भावः ॥ २३ ॥ ( ५ )

नन्वेवमुक्तवाक्ये 'इति जायन्ते' इत्यस्माद्व्रीह्यादिरूपेणोत्पत्तिबोधकाद्विशेषाद्व्रीह्याद्यधिष्ठायानुशयिनां भोगोऽस्तु । न च रमणीय-

योन्यासाविव तत्र कर्मविशेषस्य मूलस्याकीर्तनान्न तथेति वाच्यम्। अधर्म्यहिंसादिभिः श्रेष्ठाद्यधिकृत्यैव तदुक्तेः। न चाग्नीषोमीयं पशुमालभेतेत्यादिविशेषेण न हिंस्यादिति सामान्यबाधाद्यज्ञीयहिंसा नाधर्म्येति वाच्यम्। हिंसायां क्रत्वर्थपुरुषानर्थसाधनत्वरूपभिन्नविषयत्वेन तयोर्बाध्यबाधकभावोभावादिति प्रत्याह—

अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २४ ॥ इति।

अन्येन जीवान्तरेणैवाधिष्ठिते भोगावच्छेदकीकृते व्रीह्यादावनुशयिनो योगमात्रं पूर्ववद्भूत्वेत्यनेन वाय्वादियोगवदविशेषेणाभिलापात् ॥ २४ ॥

अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥ इति।

इष्टादिकं हिंसावत्त्वेनाशुद्धमित्युक्तो विशेष इति चेन्न। शब्दात्तादृशहिंसायाः श्रौतशब्दार्थत्वेनाधर्म्यत्वाभावात्। न हिंस्यादित्यस्यानारभ्याधीतस्य पुरुषार्थरागप्राप्तहिंसामात्रविषयत्वेन क्रत्वर्थहिंसायामनर्थहेतुत्वस्याशास्त्रत्वादधर्म्या यज्ञीयहिंसेति वक्तुमशक्यमिति भावः ॥२५॥

स्थावरत्वप्रापकं कर्मार्थाल्लभ्यं तत्राऽऽह—

रेतःसिग्योगोऽथ ॥ २६ ॥ इति।

अथ व्रीह्यादियोगानन्तरं रेतःसिग्योगोऽपि श्रूयते। न च स्थावरत्वं गतानां रेतःसिचि योगो मानाभावात्किंत्वन्यत्रैवेति भावः ॥ २६ ॥

नन्वगत्या गर्भदेहप्रापककर्मण एव स्थावरशरीराप्तिहेतुत्वमस्तु तत्राऽऽह—

योनेः शरीरम् ॥ २७ ॥ ( ६ ) इति।

‘ रमणीयचरणाः ’ [ छा० ५। १०। ७ ] इत्यादिना रमणीयादिकर्मणां रमणीयादियोनिमन्तर्भाव्यैव शरीरफलमुक्तमिति न तथा वक्तुं शक्यमिति भावः ॥ २७ ॥ ( ६ )

इति तृतीयाध्यायस्य प्रथमः पादः ॥ १ ॥

---

१ ख. °वादि° । २ ख. °नो भोग° ।

## अथ तृतीयाध्यायस्य द्वितीयः पादः।

द्वितीये तत्त्वंपदार्थयोर्विवेकः। तत्र स्वप्ने चक्षुरादिप्रमाणव्यापाराभावान्मनसश्च स्वातन्त्र्येणाप्रमाणत्वात्तं प्रकृत्य 'अत्रायं पुरुषः स्वयं ज्योतिः' [बृ० ४।३।९] इत्यन्तेन त्वंपदार्थस्य सर्वावभासकस्वप्रकाशत्वं दर्शितम्। तच्च स्वाप्नदेहेन्द्रियादिप्रपञ्चस्यार्थक्रियाकारित्वाभाव एव संगच्छत इति तं समाधातुमाक्षिपति—

**संध्ये सृष्टिराह हि ॥ १ ॥** इति।

सुषुप्तिजागरयोः संधौ भवे स्वप्ने देहेन्द्रियादिसृष्टिः प्रमारूपाऽर्थक्रियाकारिण्येव। हि यस्मात्तां प्रकृत्य 'सृजते स हि कर्ता' [बृ० ४।३।१०] इतिश्रुतिश्चेतनकर्तृत्वमाह। तथाच तेनैव तदनुमेयमिति भावः। तथा 'यदा कर्मसु काम्येषु स्त्रियं[१] स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्' [छा० ५।२।८] इति श्रुतिः समृद्ध्यनुमापकत्वरूपमर्थक्रियाकारित्वं स्वाप्नस्त्र्यादेराहेत्यप्यर्थः ॥ १ ॥

**निर्मातारं चैके पुत्रादयश्च ॥ २ ॥** इति।

एकेऽन्ये शाखिनोऽपि 'कामं कामं पुरुषो निर्मिमाणः' [कठ० ५।८] इति स्वप्ने निर्मातारं चेतनं पठन्ति। तत्र च कामपदं स्वाप्नविषयमात्रपरं न तु कामनामात्रपरम्। चो हेतौ। यस्मात् 'पुत्रपौत्रान्वृणीष्व' [कठ० १।२३] इति प्रकृत्य 'कामानां त्वा कामभाजं करोमि' [कठ० १।२४] इति श्रुतौ पुत्रादयोऽपि कामशब्दिताः ॥ २ ॥

प्रत्याह—

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥** इति।

मायामात्रं प्रतिभासव्याप्यसत्ताकमात्रं स्वाप्नदेहेन्द्रियादिकम्। तुशब्दान्नोक्तार्थक्रियाकारि। कार्त्स्न्येन कालदेशादिनाऽनभिव्यक्तमप्रामाणिकं स्वरूपमुक्तार्थक्रियाकारिताव्यापकं यत्र तथात्वात्। तथा च हृदयपुण्डरीकावच्छेदेन देहेन्द्रियादीनां विषयसमकालमेव प्रतिभासा-

---

१ क. °स्त्रामा°।

त्वाप्यसत्ताकत्वाच्च तेषां तादृशार्थक्रियाभाक्सत्त्वस्य बहिरवच्छिन्न-त्वस्य च तादृशार्थक्रियाकारित्वव्यापकस्याभावात्तदभाव इत्युक्तानुमा-नमेव नावतरति । एवं च स्वप्ने त्वंपदार्थ एव सर्वावभासकस्तत्तदध्यास-पूर्वमपि भासमानत्वात्स्वप्रकाशश्चेति भावः ॥ ३ ॥

सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ इति ।

तथात्वेऽपि स्वाप्नजयादिप्रपञ्चः प्रबोधे स्मृतः समृद्ध्यादेः सूचकोऽ-नुमापक उक्तश्रुतेश्च तस्य न व्यभिचारित्वं श्रुतेरुक्तार्थतात्पर्यं निर्णयन्ति तद्विदः श्रुतितात्पर्यज्ञाः स्मृतिकारा आचक्षते स्वाप्नाध्यायादौ । तथा च सूचकत्वबोधिका श्रुतिरसाधिकेति भावः ॥ ४ ॥

ननु जीवस्येश्वराभिन्नत्वाद्वियदादिवत्तादृशार्थक्रियाकारि स्वाप्नं स सृजतु तत्राऽऽह—

पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥ इति ।

वियदादिवद्यावहारिकार्थगिरिनद्यादिस्रष्टृत्वादिकं सदपि जीवस्य तिरोहितमतः परस्य ब्रह्मणोऽभिध्यानादेव प्रादुर्भवति । हि यस्मात्तत-स्तिरोभावादेवास्य बन्धमोक्षौ ॥ ५ ॥

देहयोगाद्वा सोऽपि ॥ ६ ॥ ( १ ) इति ।

अविद्यारूपकारणदेहयोगादेव स तिरोभावः । वाशब्दादनुभूयमानसं-सारान्यथानुपपत्तेः । यद्वा 'मायामात्रम्' [ ब्र० सू० ३।२।३ ] इत्यादि-सूत्रस्य स्वाप्नं वस्तु कार्त्स्न्येन सर्वमेव नोक्तार्थक्रियाकार्यनभिव्यक्तस्व-रूपत्वादविद्यमानव्यावहारिकत्वरूपकत्वाद्यन्नैवं तन्नैव यथा व्यावहा-रिकदेहेन्द्रियादि । तथा च व्यावहारिकमेव देहेन्द्रियादि प्रमाजनकम-न्यथा जाग्रत्यपि प्रातिभासिकस्य तथात्वापत्तिरिति न स्वाप्नस्य तस्य तत्त्वमिति भावः । अन्यत्तु पूर्ववत् । एतेन मायिकत्वमात्रेण नार्थ-क्रियाव्यावृत्तिः संभवति मायिकस्य व्यावहारिकस्य प्रातिभासिकस्य च ध्वंसादिरूपार्थक्रियाकारित्वादित्यादिकं परास्तं सर्वावभासकस्वयं-प्रकाशकत्वसिद्ध्ये प्रमाणवृत्तिरूपार्थक्रियाकारित्वनिषेधमात्रे तात्प-र्यात् ॥ ६ ॥ ( १ )

सुषुप्तिं प्रकृत्य 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवै-कधा भवति' [ कौषी० ४ । १९ ] इति । 'य एषोऽन्तर्हृदय आका-

शस्तस्मिञ्शेते ' [ बृ० २ । १ । १७ ] इत्यादौ प्राणाकाशशब्दितब्रह्मण्यवस्थानं जीवस्योक्तम् । ' आसु तदा नाडीषु सृप्तो भवति ' [ छा० ८ । ६ । ३ ] इत्यत्र नाडीषु । ' नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते ' [ बृ० २ । १ । १९ ] इत्यत्र च पुरीतत्यवस्थानं विकल्पेनैवास्तु नैरपेक्ष्येण प्रतीतेरैकार्थ्याच्चेति प्रत्याह—

तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥ इति ।

तस्य पूर्वपादोक्तेहलोकपरलोकसंचारावच्छिन्नजागरस्य स्वप्नस्य चाभावोपलक्षितं सुषुप्तावस्थानं नाडीष्वात्मनि ब्रह्मणि चकारात्समुचितं न तु विकल्पितम् । तच्छ्रुतेरुक्तश्रुतिभ्यः । उक्तश्रुतौ ताभिः प्रत्यवसृप्य पुरीततीत्यस्मान्न नैरपेक्ष्यम् । अवस्थानस्य च ब्रह्मणि स्थूलसूक्ष्मोपाध्यभिमानकृतभेदाभिव्यक्त्यभावरूपत्वान्नाडीषु चौपाधिकाधेयत्वरूपत्वान्नैकार्थ्यम् । अतोऽष्टदोषापत्तेश्च न विकल्पः किंत्वादौ नाडीषु पश्चाद्ब्रह्मणीति क्रमसमुच्चय इति भावः । हृदयवेष्टनमांसरूपपुरीतदवस्थानंकाल एव ब्रह्मावस्थानेन तत्समुच्चयेनैव तेन समुच्चय इति न तत्पृथगुक्तम् ॥ ७ ॥

अतः प्रबोधोऽस्मात् ॥ ८ ॥ (२) इति ।

अत एवास्माद्ब्रह्मणः प्रबोधो भेदाभिव्यक्तिः सुषुप्तिसामान्यं प्रकृत्य ' सत आगम्य न विदुः ' [ छा० ६।१०।२ ] इत्यादिनोक्तः । विकल्पपक्षे सुषुप्तिसामान्ये तन्न स्यादिति भावः । स्वप्नावस्थां विविच्यैव तदभावावच्छिन्नसुषुप्तिर्विवेक्तुं शक्यत इति संगतिः ॥ ८ ॥

ब्रह्मणः प्रबोधात्तदवस्थानमुक्तं तत्र सुषुप्तान्यस्यैव प्रबोधसंभवेन सुषुप्तस्य ब्रह्मण्यात्यन्तिकाभेदस्वीकारेण मुक्तत्वात् । अत एव ' प्राण एवैकधा भवति ' इत्यत्रैवकार आत्यन्तिकैक्यार्थकत्वादर्थवान् । अत एवाज्ञानमप्रामाणिकमिति प्रत्याह—

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥ ( ३ ) इति ।

सुषुप्त एव प्रबुध्यते पूर्वमारब्धात्प्रबोधे सति मत्कर्तव्यमिदमिति स्मृत्वा क्रियमाणात्कर्मणः[1] । योऽस्वाप्सं सोऽहं जागर्मीत्यनुस्मृतेः ।

---

१ ख. °कर्म° ।

प्रत्यभिज्ञानात् ‘ यद्यद्भवन्ति तदाभवन्ति ’ [ छा० ६।९।२ ] इति सुषुप्तजाग्रतोरैक्यबोधकात् ‘ सति संपद्य न विदुः [छा० ६।९।२ ] इति सुषुप्तावज्ञानबोधकाच्च शब्दात् । सुषुप्तिमात्रेण मुक्तावनुपपन्नेभ्यः कर्मोपासनाविधिभ्यश्च ॥ ९ ॥ (३)

प्रत्यभिज्ञानात्सुषुप्तबुद्धयोरैक्यं चेत्तर्हि विशेषविज्ञानाभाववत्त्वेन प्रत्यभिज्ञानात्सुषुप्तिमूर्छयोरप्यैक्यं स्यात् । वेपथुप्रभृतयः सुषुप्तेरवान्तरधर्मा इति न भेदका इति प्रत्याह—

मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥ (४) इति ।

मूर्छिते विशेषविज्ञानात्करालवदनत्वगात्रकम्पादिकर्मेन्द्रियव्यापारसत्त्वाच्च ज्ञानकर्मेन्द्रियव्यापारोपरमावच्छिन्नायाः प्रागुक्तब्रह्मावस्थानरूपायाः संपत्तेरर्धावस्था मूर्छा न सुषुप्तिः । अत एव न स्वप्नजागराविति परिशेषादवस्थान्तरमित्यर्थः । सति चावस्थान्तरत्वे सुषुप्तेरिव तस्यापि प्रविलयार्थं पृथक्प्रयतनीयं समाधाविति प्रयोजनम् ॥१०॥ (४)

निर्विशेषब्रह्मण्यर्धसंपत्तिरुक्ता तत्र निर्विशेषत्वस्य सविशेषत्वेन विरुद्धत्वान्न च सविशेषत्वं मिथ्याश्रुतिप्रमितत्वादिति प्रत्याह—

न स्थानतोऽपि परस्योभय-
लिङ्गं सर्वत्र हि ॥११॥ इति ।

परस्य ब्रह्मणः स्थानतो मायोपाधितो यत्सविशेषत्वं स्वभावतश्च यन्निर्विशेषत्वमित्युभयमपि लिङ्गं धर्मो न तात्त्विकं किंतु निर्विशेषत्वमात्रम् । हि यस्मात् ‘ अशब्दमस्पर्शम् ’ [ कठ० ३ । १५ ] इत्यादिषु सर्वत्र तदेव श्रूयते ॥ ११ ॥

न भेदादिति चेन्न प्रत्येकमत-
द्वचनात् ॥ १२ ॥ इति ।

चतुष्पात्त्वषोडशकलत्ववामनीत्वादिना भेदश्रवणान्न निर्विशेषत्वमेव तथेति चेन्न । ‘ यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा ’ [बृ० २ । ५ । १ ] इत्यादिना प्रत्येकं प्रत्युपाध्यतद्वचनादभेदवचनात् ॥१२॥

---

१ क. °चनात् । २ ख. °शेषाणि°।

अपि चैवमेके ॥ १३ ॥ इति ।

एकेऽन्येऽपि शाखिनो 'नेह नानाऽस्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' [ कठ० ४ । ११ ] इति । तथाऽन्येऽपि 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' [ श्वे० १ । १२ ] इत्यादिनैवमभेदमेवाऽऽमनन्ति ॥ १३ ॥

उभयोरेव श्रौतत्वे निर्विशेषत्वमेव कथं तात्त्विकं तत्राऽऽह—

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥ इति ।

तत्त्वतो निर्विशेषमेव ब्रह्म तादृशस्यैवाज्ञातसप्रयोजनत्वेन श्रुतितात्पर्यवत्त्वरूपात्मप्रधानत्वात् । सविशेषत्वप्रतिपादकवाक्यानां तच्छेषत्वे-नानुवादत्वेन च तत्त्वावेदकत्वसतात्पर्यकत्वयोरभावात् ॥ १४ ॥

एवमपि व्यावहारिकं सविशेषत्वमादाय तत्तच्छ्रुतीनां निर्विषयतापत्तिमङ्क इत्याह—

प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥ इति ।

सूर्यप्रकाशादेर्यथा वक्रत्वाद्यौपाधिकं तथौपाधिकं सविशेषत्वं व्यावहारिकं ब्रह्मणोऽपीति तद्बोधकश्रुतीनामर्थशून्यत्वरूपविगतार्थत्वस्याभावात् ॥ १५ ॥

ननु निर्विशेषत्वं तात्त्विकत्वेन धर्मशून्यत्वं तच्चासंभवि तस्यैव तात्त्विकत्वात्तत्राऽऽह—

आह च तन्मात्रम् ॥ १६ ॥ इति ।

'अस्थूलम्' [ बृ० ३ । ८ । ८ ] इत्यादिश्रुतिर्यन्निर्विशेषत्वं ब्रह्मण आह तत्तत्स्वरूपमात्रं नातिरिक्तम् ॥ १६ ॥

दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥ इति ।

अथोऽत एव । 'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' [ बृ० २ । ३ । ६ । ] इत्यादिश्रुतिस्तदतिरिक्तमात्रं निषिध्य तत्स्वरूपं निषेधावधिभूतं दर्शयति । न हीत्यादीति । नेति पूर्वोक्तनिषेध एतस्माद्ब्रह्मणोऽन्यन्नहीत्येवंरूपः । परं निषेध्यादन्यत्तु

ब्रह्मास्तीत्यर्थः । ' ज्ञेयं यत्तत्प्रवक्ष्यामि ' इत्युपक्रम्य ' न सत्तन्नासदुच्यते ' [ भ० गी० १३ । १२ ] इत्यादिना तथैव स्मर्यतेऽपि ।

अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥ इति ।

यतः प्रमीयमानो भेदोऽतात्त्विकः । अत एव ' यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ' इति । तथा ' एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ' [ ब्रह्मबि० १२ ] इत्याद्युपमावाक्यं सूर्यप्रतिबिम्बादिवद्भेद इति दर्शयतीत्यनुपज्यते ॥ १८ ॥

आक्षिपति—

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥ इति ।

यथा जलसूर्ययोरुपाधिबिम्बयोर्व्यवधानं मूर्तत्वं च गृह्यते न तथाऽऽत्मतदुपाध्योरिति न तत्र प्रतिबिम्बेन भेदधीरित्यर्थः ॥ १९ ॥

प्रत्याह—

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥ इति ।

एवं प्रतिबिम्बनरूपादन्तर्भावादेवोपाधिगतसुखदुःखादिमत्त्वरूपवृद्धिह्रासभाक्त्वमुपपद्यत इत्यन्यथानुपपत्तेर्बलवत्त्वान्न दोष इत्युभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यात् ॥ २० ॥

दर्शनाच्च ॥ २१ ॥ ( ५ ) इति ।

अमूर्तस्यापि गगनशब्दादेः प्रतिबिम्बदर्शनात् । चकाराद्बिम्बप्रतिबिम्बभावे फलबलात्तत्तद्धर्माणामेव नियामकत्वाद्बिम्बादेर्मूर्तत्वव्यवधानादेरसत्त्वं तत्र न बाधकमिति भावः ॥ २१ ॥ ( ५ )

नेति नेतीत्यादिश्रुत्या निर्विशेषं सिद्धमुक्तं तन्न । तद्वाक्ये ' द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च ' [ बृ० २ । ३ । १ ] इत्यादिना पृथिव्यप्तेजोरूपस्य मूर्तस्य वाय्वाकाशरूपस्यामूर्तस्य चैव ब्रह्मणोऽप्युपक्रान्तत्वेन निषेध्यत्वात् । अस्तीत्येवोपलब्धव्य इत्यादेश्च निषिद्धस्यापि ब्रह्मणोऽस्तित्वेनोपासनपरत्वात् । निषेद्धुमेव ब्रह्मणो वाक्यान्तरेष्वप्युक्तत्वात् । निरधिकरणनिषेधो न संभवतीति चेत्तथाऽपि प्रत्यक्षादि-

प्रमितं ब्रह्मान्यन्न तु ब्रह्मेति ब्रह्मैव तद्भिन्नं निषिध्यते नेति नेतीतिवीप्सा चाभावायेति प्रत्याह—

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो
ब्रवीति च भूयः ॥ २२ ॥ इति ।

प्रकृतं मूर्तं चामूर्तमित्यादिना विशेष्यतया निर्दिष्टं यदेतावत्त्वं मूर्तादि तदेव प्रकृतवाक्यं प्रतिषेधति न तु ब्रह्मापि षष्ठ्यन्तेन विशेषणतया निर्दिष्टत्वात् । विशेषणतया प्रक्रान्तस्यापि निषेधे न बाधकमतो हेत्वन्तरमाह—तत इति । चो हेतौ । यस्मात्ततस्तद्ब्रह्मरूपमाधारमादायैव निषेधोऽन्यथा निराधारस्य सर्वनिषेधस्यासंभवात् । ननु ब्रह्मैव तद्भिन्नमाधारीकृत्य निषिध्यतां तत्राऽऽह—ब्रवीतीति । पूर्ववाक्यस्य तात्पर्यं वक्तुं भूयो निषेधानन्तरं नेति यन्निषेधस्तदेतस्माद्ब्रह्मणोऽन्यन्न हीत्येवं रूपं परं यदाधारभूतं ब्रह्म तत्त्वसत्येवेत्यर्थकं न ह्येतस्मादिति नेत्यन्यत्परमस्तीति वाक्यं ब्रवीति । तथा 'प्राणा वै सत्यं तेषामेष सत्यम्' [ बृ० २ । १ । २० ] इत्यपि ब्रह्मणोऽबाध्यत्वं ब्रवीति ॥ २२ ॥

उक्तवाक्यस्योक्तार्थकत्वनिर्णयाय युक्तिमाह—

तदव्यक्तमाह हि ॥ २३ ॥ इति ।

तद्ब्रह्म प्रत्यक्षादिभिरव्यक्तमगृहीतं सदेकस्वभावत्वाच्च न तद्भ्रमास्पदमतोऽप्राप्तत्वान्न निषेधार्हम् । ननु श्रुत्यैव प्राप्तं तत्राऽऽह—आह हीति । हि यस्मादज्ञातसप्रयोजनं ब्रह्म सत्यत्वेनोक्तश्रुतिस्तात्पर्येण बोधयति । तथा च प्रापकश्रुतिप्रामाण्यबाधापत्त्या तन्निषेधानर्हमेव सिद्धस्वभावत्वाच्च विकल्पानर्हमपीति भावः ॥ २३ ॥

नन्वेवं मूर्तादिकमप्यप्राप्तत्वान्न निषेधार्हं श्रुतेः प्रापकत्वे तु 'प्राणा वै सत्यम्' [ बृ०२।१।२० ] इत्यादिश्रुतेरप्रामाण्यापत्तिस्तुल्या तत्राऽऽह—

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥ इति ।

अपिरेवार्थः । संराधने निषेधसिद्धये प्रत्यक्षानुमानाभ्यामेव मूर्तादि प्राणसत्यत्वादि प्रमितं श्रुत्या त्वनूद्यते । धर्मादेः श्रुतिमात्रगम्यत्वेऽपि तत्सत्यत्वं न श्रौतमिति तस्यास्तत्र प्रामाण्यं नास्त्येव धर्माद्यंशे तु व्यावहारिकमेव प्रामाण्यमिति भावः ॥ २४ ॥

---

१ ख. 'तिविचिकित्सा चात्यन्ताभा' । २ ख. 'ति नेति च' ।

युक्त्यन्तरमाह—

प्रकाशादिवच्चावैशेष्यम् इति ।

विशेष्यं निषेध्यत्वेन व्यावर्त्यं तत्त्वं वैशेष्यम् । यथा घटादिविषयकचाक्षुषादिवृत्त्या स्वोपजीव्ये दीपप्रकाशादौ निषेध्यत्वं न संभवत्येवं स्वभासकसाक्ष्यभिन्नब्रह्मण्यपि निषेधवाक्यजन्यवृत्त्येत्यर्थः ॥

ननु तादृशवृत्तिः स्वतो भासमानैव निषेधं साधयिष्यति तत्राऽऽह—

प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥ इति ।

च एवार्थः । कर्माणि वृत्त्यादिरूपमनःकार्येऽभ्यासाद्बाध्यासिकसंबन्धरूपात्साक्षिसामीप्यादेव प्रकाशो न तु स्वतो जडत्वात् । स्वप्रकाशसाक्षिसंबन्धादेव निर्वाहसंभवे प्रत्येकं तथात्वकल्पने गौरवादिति भावः ॥२५॥

नन्वेतावता साक्षिणो निषेध्यत्वं न स्याद्ब्रह्मणस्तु स्यान्न च साक्षी ब्रह्मान्तःकरणोपधानादिना व्यावृत्तस्तत्राऽऽह—

अतोऽनन्ते न तथा हि लिङ्गम् ॥ २६ ॥ इति ।

अतः साक्षिणो निषेधानर्हत्वादेवानन्ते सर्वानुवृत्ते ब्रह्मण्यपि न निषेध्यत्वम् । हि यस्मात् 'सर्वव्यापी' इत्यादि 'साक्षी' [ श्वेता० ६ । ११ ] इत्यन्तेनोक्तं लिङ्गं साक्ष्यभेदरूपं तथा ब्रह्मणोऽप्यनिषेध्यत्वसमर्पकम् ॥ २६ ॥

अत्र साक्षित्वादिना भेदः काल्पनिक ऐक्यं तु तात्त्विकमिति 'अवस्थितेः' ( ब्र० सू० १ । ४ । २२ ) इत्यादिसूत्रेणोक्तं स्मारयितुं भेदाभेदसत्यत्ववादेनाऽऽशङ्काक्षिपति—

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥ इति ।

यथाऽहेः कुण्डलेन कुण्डलाकाराहिना नात्यन्तभेदः पृथगुपलम्भाभावात्नाप्यत्यन्तमभेदो दण्डायमानत्वेऽपि कुण्डलोपलम्भाभावाद्तो भेदाभेदौ । तौ च समसत्ताकावविशेषेणोभयस्य व्यपदेशात्प्रतीतेः । न च विरोधोऽहित्वकुण्डलत्वरूपाभ्यां भेदाभेदयोः प्रत्ययात् । एवं साम्यादिना ब्रह्मणोऽपि तावित्यर्थः । संक्षेपशारीरकोक्ते अविद्यामनःप्रतिबिम्बितचितोरीशत्वजीवत्वे तदुभयानुगतस्याविद्याबिम्बीभूतसाक्षित्वमिति पक्षेऽविद्यागतचिदाभासादेः साक्षित्वपक्षे च शुद्धचिद्रूपब्रह्मणा सह भेदाभेदौ न तु शुद्धचितः साक्षित्वपक्ष इति भावः ॥ २७ ॥

१ क, साम्यादि° ।

न्यूनाधिकदेशावच्छिन्नत्वेन प्रतीयमानयोर्भेदाभ्युपगमे सुसदृशं दृष्टान्तमाह—

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥ इति ।

प्रकाशपदार्थस्य स्वाश्रयेण भिन्नत्वे परमते ज्ञानस्याप्यात्मना तथात्वं स्यात्तत्राऽऽह—तेजस्त्वात् । तेजस्त्वमन्तर्भाव्य तेजोरूपप्रकाशतदाश्रययोरिवेत्यर्थः ॥ २८ ॥

पूर्ववद्वा ॥ २९ ॥ इति ।

अवस्थितेरिति काशकृत्स्नः ' ( ब्र० सू० १ । ४ । २२ ) इत्यत्र यथा भेदस्य तात्त्विकत्वे मोक्षो न सिध्येदतात्त्विकतयैवोपपत्तौ तात्त्विकत्वे मानाभावश्चेत्यादिना ब्रह्मणि जीवैरैक्यं तात्त्विकं भेदस्तु कल्पित इत्युक्तमेवं साक्षिणाऽपीति भावः । वाऽवधारणे ॥ २९ ॥

प्रतिषेधाच्च ॥ ३० ॥ (६) इति ।

' नान्योऽतोऽस्ति द्रष्टा ' [ बृ० ३।७।२३ ] इत्यादिना ब्रह्मान्यद्रष्टृप्रतिषेधादप्येवमित्यर्थः ॥ ३० ॥ (६)

यद्यपि श्रुतियुक्तिभ्यो ब्रह्मनिर्विशेषत्वं निर्णीतं तथाऽप्यनभिज्ञं प्रति तदनूद्य सेत्वादिश्रुतिविनिगमनिकां दर्शयितुं तदाक्षिपति—

परमतः सेतून्मानसंबन्धभेद-
व्यपदेशेभ्यः॥ ३१ ॥ इति ।

अतो ब्रह्मणः परमपि वस्तु सत्यमस्ति । ' य आत्मा स सेतुः ' [ छा० ८ । ४ । १ ] इति सेतोः ' चतुष्पादष्टाशफं षोडशकलम् ' इति चतुष्पात्त्वाद्युन्मानस्य ' सता सौम्य तदा संपन्नः [ छा० ६ । ८ । १ ] इति सत्संपत्तिरूपसंबन्धस्य 'य एषोऽन्तरादित्ये' [ छा० १ । ६ । ६ ] इति ' य एषोऽन्तरक्षिणि ' [ छा० १ । ७ । ५ ] इत्यादिसाक्ष्याधारत्वाभ्यां भेदस्य च निर्देशात् । निर्विशेषस्य तदनुपपत्तेः। ब्रह्मस्वसमसत्ताकद्वितीयवत्सेतुत्वात्प्रसिद्धसेतुवदित्याद्यनुमानाच्चेति भावः ॥ ३१ ॥

प्रत्याह—

सामान्यात्तु ॥ ३२ ॥ इति ।

विधारकत्वसामान्यमादाय सेतुत्वव्यपदेशस्तु शब्दात्सेतुत्वादेरतात्त्वि-

---

१ ख. जीवैनैक्यं । २ क. 'षाऽप्येतमितं प्र॰ ।

कत्वेऽपि न तन्निर्देशानुपपत्तिर्जडत्वादिना चोक्तानुमानमुपाध्यादिव्याहतम् ॥ ३२ ॥

बुध्यर्थः पादवत् ॥ ३३ ॥ इति ।

यथा व्यवहारार्थं कार्षापणादेः पादादिविभागस्तथोपासनादिरूपबुद्धिवृत्त्यर्थश्चतुष्पात्त्वादिव्यपदेशः ॥ ३३ ॥

स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥ इति ।

स्थानमवस्थानं तद्विशेषं ब्रह्मावस्थानमादाय संबन्धव्यपदेशः सौरप्रकाशादेरिवौपाधिकः साधारत्वव्यपदेशः ॥ ३४ ॥

कथमेवं व्यपदेशस्यातात्त्विकविषयकत्वं गौणत्वं च तत्राऽऽह—

उपपत्तेश्च ॥ ३५ ॥ इति ।

प्रकृतसेतुत्वादेरव्यस्तत्वेन मुख्यतावच्छेदकशून्यत्वेन चातात्त्विकं गौणं तमादायैव व्यपदेशोपपत्तेः ॥ ३५ ॥

तथाऽन्यप्रतिषेधात् ॥ ३६ ॥ इति ।

'स एवाधस्तात्' [ छा० ७ । २५ । १ ] इत्यादिना साधारत्वादेः प्रतिषेधात् ॥ ३६ ॥

ननु सेतुत्वादेरतात्त्विकत्वेऽपि 'यावान्वाऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' ( छा० ८ । १ । ३ ) इत्यादि 'आकाशवत्सर्वगतः' ( छा० ३ । १४ । ३ ) इत्यायामादिशब्देभ्यः सर्वगतत्वं तात्त्विकमवश्यं वाच्यं तथा च सेतुत्वाद्यपि तथाऽस्तु तत्राऽऽह—

अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥ (७) इति ।

आयामादिबोधकतावानित्यादिशब्दलब्धं सर्वगतत्वमप्यनेन प्रकारेण साधारत्वपरिच्छिन्नत्वादिनिषेधपर्यवसितमेव न तु तात्त्विकसर्वसंबद्धत्वरूपमित्यर्थः ॥ ३७ ॥ ( ७ )

तत्पदस्य लक्ष्यं निरूप्य वाच्यं निरूपयितुं यद्यपि ब्रह्मान्यदसत्तथाऽपि व्यावहारिकं ब्रह्मणः फलदातृत्वमव्याहतमित्याह—

फलमत उपपत्तेः ॥ ३८ ॥ इति ।

अतो ब्रह्मणः फलं जायते । कर्मफलं तत्तद्देशकालनिमित्तविपाकाद्यभिज्ञदीयमानं व्यवहितकर्मफलत्वाद्राजसेवादिफलवदित्यनुमानाद्देहेन्द्रियादेरिव दातुरप्यन्वयव्यतिरेकमूलकं फलहेतुत्वमित्युपपत्तेः । ननु कर्मणः

---

१ ख. 'नेकम' । २ क. 'दिनिषे' ।

फलसाधनत्वान्यथानुपपत्त्याऽपूर्वमवश्यं कल्प्यं तेनैवोपपत्तौ न ब्रह्मणः फलहेतुत्वानुमानायकाशः । राजसेवाफलादिसाधारणं हेतुतावच्छेदकं च दुर्वचम् । राजादिश्च सेवाफलादौ परम्परया प्रयोजकमात्रं तत्राऽऽह—

श्रुतत्वाच ॥ ३९ ॥ इति ।

'स वा एष महानज आत्माऽन्नादो वसुदानः' [ बृ० ४ । ४ । २४ ] इत्यादिनाऽन्नशब्दितहविर्भोक्तृत्वस्य वसुशब्दितफलदातृत्वस्य च श्रुतत्वादन्यथयितुमशक्यत्वात् ॥ ३९ ॥

नन्वपूर्वमेव फलदं न ब्रह्म । उक्तश्रुतिश्च स्तावकत्वादिना नेयेति जैमिनिमते को दोषस्तत्राऽऽह—

धर्मं जैमिनिरत एव ॥ ४० ॥ इति ।

जैमिनिर्यद्धर्ममात्रं फलदं वक्ति तदतो यागादेः फलसाधनान्यथानुपपत्तिरूपाया उपपत्तितः । एवकारान्न तेन श्रुतिरन्यथयितुं शक्या । न च तस्याः स्तावकत्वमात्रम् । देवताधिकरणन्यायेन मानान्तराविरुद्धेऽर्थेऽपि प्रमाणत्वात् ॥ ४० ॥

ननु तथाऽप्यपूर्वाङ्गीकारो व्यर्थो ब्रह्महेतुत्वादेवोपपत्तेस्तत्राऽऽह—

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥ (८) इति ।

पूर्वं ब्रह्म फलहेतुस्तुशब्दान्न त्वपूर्वमिति बादरायणो वक्ति । 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते' [ कौषी० ३।८ ] इत्यादिश्रुतिभिः 'लभते च ततः कामान्मयैव विहितान्' [भ० गी० ७। २१] इत्यादिस्मृतिभिश्चेश्वरस्यैवान्यनैरपेक्ष्येण फलहेतुत्वव्यपदेशात् । न च स्वर्गिशरीरादेरपि हेतुत्वात्कथमन्यनैरपेक्ष्यमिति वाच्यम् । तत्तच्छरीरादेरपि फलकोटिनिक्षिप्तत्वात्तदन्यनैरपेक्ष्यस्यैव बोधनात् । न चापूर्वानङ्गीकारे कर्मणो नष्टस्य कथं हेतुत्वमिति वाच्यम् । कोपितप्रसादितेश्वरस्यैव हेतुत्वादीश्वरप्रसादकोपयोरेव कर्मव्यापारत्वात् । तयोश्च मायावृत्तिरूपयोः फलसमवायिनि तत्तदन्तःकरणेऽवच्छेदकताख्यसंबन्धस्वीकारेण फलसामानाधिकरण्यम् । जैमिनीयैरप्यपूर्वं प्रति शरीरावच्छेदकत्वस्य वाच्यत्वादुक्तश्रुत्यादिविरोधस्य तेषामधिकत्वात्कर्मणीश्वरेऽपि तयोर्व्यापारत्वात्तत्कारणत्वमादाय नेश्वरनैरपेक्ष्यश्रुत्यादिविरोधः । 'लभते च ततः' इत्याद्युक्तस्मृतौ तत इत्यस्य कृतकर्मभ्य इत्यर्थकत्वेनैवकारस्य तन्निरपेक्षत्वबोधकत्वात् । अत एव 'स एवैनमिन्द्रः प्रजया पशुभिस्तर्पयते'

इत्यादिश्रुतिस्तुतिरूपप्रसादवत्या देवतायाः फलदातृत्वमाह । इन्द्रादिदेवतारूपेण भगवत एव हविरादिभोक्तृत्वात्प्रसादभाक्त्वाच्च । अत एव 'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्ति ' भ० गी० ९।२३ ] इत्यादिस्मृतिरिति भावः ॥ ४१ ॥ ( ८ )

इति तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

अथ तृतीयाध्यायस्य तृतीयः पादः ॥

---

तत्त्वं पदार्थौ शोधितौ । तृतीये तु शाखान्तरोक्ताकाङ्क्षितपदार्थोपसंहारेण सगुणनिर्गुणवाक्यार्थनिर्णयः । सगुणवाक्यार्थनिर्णयस्याप्युपासनाफलसत्त्वशुद्धिद्वारा निर्गुणविद्योपयोगात् । तत्र नामादिभेदाद्वेदान्तेषु प्रतिशाखमुपासनानि भिन्नानि । तथा हि—यथा 'अथैष ज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत ' इत्यत्र संज्ञान्तरात्सहस्रदक्षिणागुणकज्योतिष्टोमात्कर्मान्तरं तथा तैत्तिरीयकवाजसनेयककाठकादिसंज्ञान्तरादुपासनान्तरं ग्रन्थ इव विद्यायामपि तादृशसंज्ञामुख्यत्वसंभवात् । यथा च वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् ' इत्यत्र तद्धितश्रुतिबोधितद्रव्यदेवतासंबन्धानुमिते यागे विहित उत्पत्तिशिष्टामिक्षावरुद्धे दुर्बलेन वाक्येन वाजिनविधानासंभव इति रूपभेदात्कर्मान्तरं तथा ' पञ्चाग्नीन्वेद ' [ छा० ५।१०।१० ] इति छन्दोगाः ' तस्याग्निरेवाग्निः समित्समिद् ' [ बृ० ६।२।१४ ] इत्यादिना षष्ठमप्यग्निं वाजसनेयिनः पठन्तीति पञ्चाग्निषडग्निरूपरूपभेदादुपासनान्तरम् । यथा च कौ(कु)ण्डपायिनामयने मासमग्निहोत्रं जुहु(हो)तीत्यत्र नित्याग्निहोत्रस्यासंनिहितत्वान्मासगुणकं कर्मान्तरं तथा तत्तच्छाखोक्तोपासनानां मिथोऽसंनिहितत्वाद्भेद इति प्रत्याह—

सर्ववेदान्तप्रत्ययं चोदनाद्य-
विशेषात् ॥ १ ॥ इति ।

तत्तदुपासनं सर्वैर्वेदान्तैस्तत्तच्छाखास्थवाक्यरूपैरेकमेव प्रतीयते । यथा यजतीत्यादिरूपो देवतोद्देश्यकद्रव्यत्यागरूपज्योतिष्टोमादियागाद्यवच्छिन्नप्रयत्नस्य चोदना विधिः सर्वशाखास्वविशिष्टस्तथा प्राणज्येष्ठश्रेष्ठत्वविषयकोपासनाद्यवच्छिन्नप्रयत्नस्यापि सर्वासु शाखासु ' यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ' [ छा० ५।१।१ । बृ० ६।१।१ ] इत्यादिविधे-

रविशेषात् । आदिना यथा ज्योतिष्टोमादेः स्वर्गादिरूपफलसंयोगैक्यं तथा ज्येष्ठत्वश्रेष्ठत्वगुणवत्प्राणाद्याप्तिरूपफलैक्यात् । यथा च तत्र द्रव्यदेवतारूपरूपैक्यं तथा तत्तद्गुणवत्प्राणादिरूपरूपैक्यात् । यथा च तत्र ज्योतिष्टोमाद्याख्यैक्यं तथा प्राणविद्याद्याख्यैक्यात् । अत एव 'एकं वा संयोगरूपचोदनाख्याविशेषात्' [ पू० मी० सू० २।४।१६ ] इत्यनेन शाखाभेदस्थकर्मैक्यं सूचितं पूर्वतन्त्रोऽपीति भावः ॥ १ ॥

भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥ इति ।

तैत्तिरीयादिसंज्ञादिभेदान्नैक्यमिति चेन्न । यतः शाखाभेद एकस्यामुपासनायां सत्यामपि ग्रन्थविषयत्वेनैव नामभेदोपपत्तिः 'आख्याः प्रवचनात्' [ पू० मी० १ । १ । ८ । ३० ] इतिन्यायेन कठादिप्रकाशितशाखानामत्वेन तत्तदाख्याप्रतिपादनात्तत्रैव निरूढत्वाच्च । तथा संवाद्यामार्थं दर्शयितुम् 'अग्निरेवाग्निः' [ बृ० ६ । २ । १४ ] इत्यनेन षष्ठाग्नेरेवानुवादमात्रमतो न रूपभेदः । तत्तद्गुणविशिष्टविद्यायाः शाखान्तरेऽपि प्रत्यभिज्ञया संनिधापितत्वाच्च नासंनिधानम् । न च शाखाभेदेन पुनरुक्तिरूपादभ्यासाद्भेद इति वाच्यम् । अध्येतृभेदान्प्रति तत्तद्वाक्यप्रवृत्तेरपौनरुक्त्यात् ॥ २ ॥

ननु 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' [ मु० ३ । २ । १० ] इत्याथर्वणिकानां विद्यां प्रति शिरोव्रतरूपधर्मभेदादस्तु भेदोऽत एव तैत्तिरीयाणां कारीर्यादिषु भूभोजनादिधर्मभेदाद्भेद आशङ्कितस्तत्राऽऽह—

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिका-<br>राच्च सववच्च तन्नियमः ॥ ३ ॥ इति ।

स्वाध्यायस्य मुण्डकोपनिषदध्ययनस्यैव स धर्मो न तु ब्रह्मविद्यायाः । हि यस्मात्तथात्वेनाध्ययनधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे शिरोव्रतं प्रकृत्य वेदव्रतत्वेन व्याख्यातमित्याथर्वणिका एवाऽऽमनन्ति— 'नैतदचीर्णव्रतोऽधीते' [ मु० ३ । २ । ११ ] इत्यनेनातद्व्रतवतोऽध्ययनानधिकारोक्तेश्च । तथा च ब्रह्मविद्यासंयोगश्रवणेऽप्याथर्वणिकग्रन्थ-

---

१ क. 'मादिः स्व' । २ ख. 'पकफ ।

द्वारा यैर्विद्या प्राप्या तेषां तद्व्रतनियमो यथा सवाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यसंबन्धादाथर्वणिकोक्तैकाग्निसंबन्धाच्चाऽऽथर्वणिकानामेव नियम्यन्ते ॥ ३ ॥

दर्शयति च ॥ ४ ॥ ( १ ) इति ।

' सर्वे वेदा यत्पदमामनन्ति ' [ कठ० २ । १५ ] इत्यादि । तथा वाजसनेयके प्रादेशमात्रसंपादितवैश्वानरस्य च्छान्दोग्ये ' यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते ' [ छा० ५ । १८ । १ ] इति सिद्धवदेवोपादानं विद्यैक्यं दर्शयत्यपि । अभिविमानमभि सर्वतोभावेन जगद्रूपतया श्रुत्यादिबोधितम् ॥ ४ ॥ ( १ )

नन्वस्तु सर्वशाखाप्रत्ययमेकमुपासनं तथाऽपि शाखान्तरोक्तगुणानां नान्यशाखोक्तोपासन उपसंहारस्तं विनाऽप्युपकारसिद्धेर्गृहमेधीय आज्यभागाभ्यामेवाऽऽतिदेशिकसर्वाङ्गोपकारसिद्धिवत् । एवं चैकस्यामपि शाण्डिल्यविद्यायां वाजसनेयिनां ' मनोमयोऽयं पुरुषो भाः सत्यः ' [बृ० ५ । ६ । १] इति च्छन्दोगानां तु ' मनोमयः प्राणशरीरो भारूपः ' [छा०३।१४।२] इति यथाश्रुतगुणैरेवोपासनमिति प्रत्याह—

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥ ( २ ) इति ।

एकस्मिन्नुपासने सिद्धेऽर्थस्य तदुपकाररूपप्रयोजनस्याभेदाच्छाखान्तरस्थगुणानामुपसंहार एव यथा विधिविशेषाणामग्निहोत्रादिधर्माणां शाखान्तरोक्तानामन्यत्रोपसंहारः । गृहमेधीये चोदकप्राप्तयोराज्यभागयोः सर्वाङ्गोपकारसाधकत्वकल्पनेऽप्युपासनाङ्गगुणानामप्राप्तत्वात्तद्विधानपर्यवसायिवाक्यानां न शाखान्तरीयगुणजन्योपकारसाधकत्वकल्पकत्वमित्येकोपकारसाधकत्वेन वलप्तानां गुणानां शाखान्तरेऽप्युपसंहार इति भावः । निरूपितस्योपासनैक्यस्य गुणोपसंहाररूपप्रयोजनोक्तेः संगतिः ॥ ५ ॥ ( २ )

आख्यैक्येन विद्यैक्याद्गुणोपसंहार उक्तस्तमपवदितुमाशङ्कते—

अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥ इति ।

वाजसनेयके ' द्वया ह प्राजापत्या देवाश्चासुराश्च । ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति ' [ बृ० १ । ३ । १ । ] ' ते ह वाचमू-

चुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत् । यो वाचि भोगस्तं देवेभ्य आगायद्यत्कल्याणं वदति तदात्मने । ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तामभिद्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ' [ बृ० १ । ३ । २ । ] एवम् ' अथ ह प्राणमूचुः ' [ बृ० १ । ३ । ३ ] इत्यादिना प्राणं चक्षुः श्रोत्रं मन इत्याद्युक्त्वा ' अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्राऽत्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविव्यत्सन्स यथाऽश्मानमृत्वा लोष्टो विध्वꣳसेतैवꣳ हैव विध्वꣳसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन्पराऽसुरा भवत्यात्मना पराऽस्य द्विषन्भ्रातृव्यो भवति य एवं वेद ' [ बृ० १ । ३ । ७ ] इत्यादि ' यदनेनान्नमत्ति तेनेतास्तृप्यन्ति ' [ बृ० १ । ३ । १८ ] इति वाक्यम् । द्वया द्विविधाः प्राजापत्या वर्तमानप्रजापतेः पूर्वजन्मावस्थायां मनोवृत्तिरूपाणि कार्याणि देवाः शास्त्रानुसारिण्यसुरास्तदन्यानि तानि लोकेषु तत्तल्लोकेषु विद्यमानान्यस्पर्धन्त कदाचिद्देवानां वृद्धिः कदाचिदसुराणां शास्त्राधीनज्ञानकर्माधिक्ये प्रजापतित्वप्राप्तिपर्यन्तं देवानां वृद्धिः स्यादन्यत्वप्राप्तिपर्यन्तमसुराणां वृद्धिः । ततो वक्ष्यमाणाद्देवानां वृद्धिहेतुस्पर्धावस्थात्कानीयसा वृद्धिमत्त्वेन रूपेण कनिष्ठाः । असुराणां तु स्वाभाविकवृद्धिमत्त्वेन ज्येष्ठत्वम् । स्पर्धा च देवानां शास्त्राधीनज्ञानकर्मवत्त्वं तदभाव एवासुराणाम् । तथा चासुराणां स्पर्धाऽपि स्वाभाविकी । देवास्ताद्दृशवृत्तिजनकवागाद्यभिमान्यग्न्यादिदेवता ऊचुरन्योन्यम् । हन्तेत्यनुमतौ यदि नोऽनुमतमित्यर्थः । अत्ययामाऽऽसुरभावप्रयुक्तव्यष्टिवागाद्यभिमानं त्यक्त्वा वैराजपिण्डगताग्न्यादिभावं गच्छाम । ताद्दृशभावश्च प्रजापतिरूपप्राणत्वप्राप्तिः । वाचि वागधीनो यो भोगो वागादिसमुदायस्योपकारस्तं तदर्थमुदगायत्रिषु पवमानस्तोत्रेषु । यत्वन्येषु नवस्तोत्रेष्वागायत्तदात्मने स्वार्थं तस्य हि न पूर्ववद्याजमानं फलं किंतूद्गातुरेव । तथा च स्वार्थफलासङ्गदोषादासुरवेधः । प्राणस्त्वस्य सङ्गस्वभावत्वेन न फलासक्तिः । न हि वागादेरिव प्राणस्य शरीरस्थस्य विषयासक्तिरत आर्त्विज्यफलमकामयमान एव प्राण उदगायत् । असुरास्तु प्राणं पाप्मनाऽविव्यत्सन्वेद्धुमैच्छन् । ततो यथा लोष्टः

---

१ ख. 'षंवद्देवा' । २ ख 'तिरूरू' । ३ ख. 'सस्य तस्' । ४ क. विनत ।

पांशुपिण्डोऽश्मानं पाषाणमृत्वा प्राप्य विध्वंसेतैवमसुरा विष्वञ्चः परितश्चलिता विनेशुः। ततस्तस्माद्विशुद्धप्राणकर्तृकाज्ज्योतिष्टोमयज्ञ उद्गानान्निष्क्रामात्प्राणवायुसाध्योद्गानादिकर्मण इति यावत्। वागाद्यभिमान्यग्न्यादयो देवा अभवन्व्यष्टिवागाद्यभिमानं त्यक्त्वा वैराजगताग्न्यादिरूपप्राणत्वं प्राप्ताः। अत एवासुराः पराऽभवन्। तस्माद्विशुद्धस्योद्गानकर्तृत्वादिविशिष्टप्राणोऽहमिति य उपास्ते तस्य द्वेष्टा शत्रुर्वागादिगतासुरभावः पराभवति पूर्वोक्तप्राणत्वं स प्राप्नोतीति यावदित्याद्यर्थकं छान्दोग्ये 'ओमित्येतदक्षरमुद्गीथमुपासीत' [ छा० १ । १ । १ ] इत्युपक्रमकं 'य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' [ छा० १ । २ । ७ ] इति तयोरेकैव विद्या। अथोद्गानकर्तृत्वमध्यस्य प्राणस्योपास्यत्वं पूर्वत्र प्रतीयते सामभक्त्यात्मकोद्गीथावयवप्रणवस्य प्राणदृष्ट्योपास्यत्वं च परत्रेति तादृशविद्याद्वयबोधकशब्दादन्यथात्वं विद्यानानात्वमिति चेन्न। द्वया ह प्राजापत्या इत्यादिना देवासुरसङ्ग्रामाख्यायिकोपक्रमस्य वागादीनामासुरपाप्मभिर्वेधस्य मुख्यप्राणं प्रति गौणत्वप्रतिपादनस्य मुख्यप्राणवीर्यादासुरजयादेश्च शाखाद्वयेऽविशेषेणोक्तत्वात्तदनुरोधेनोद्गीथशब्दमुद्गानकर्तरि 'ओमित्येकाक्षरम्' इति च तदवयवकसमग्रसामभक्तौ लक्षणया नीत्वोद्गानकर्तृत्वेन प्राणस्यैवोभयत्रोपास्यत्वात् ॥ ६ ॥

प्रत्याह—

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥ इति।

वाऽवधारणे। उक्तस्थले नैव विद्यैक्यं प्रकरणयोरुपक्रमयोर्भेदादेकवाक्य उपसंहारस्योपक्रमाधीनत्वाच्छान्दोग्ये सामभक्त्येकदेशस्यान्यत्र च समग्रभक्तिरूपोद्गानकर्तुरुपास्यत्वेनोपक्रान्तत्वात्तदनुसारेण चरमावगतस्योक्ताविशेषस्य नेयत्वात्। यथैकस्यामेव शाखायां परमात्मदृष्ट्यध्याससाम्येऽपि 'स एष परोवरीयानुद्गीथः' [ छा० १ । ९ । २ ] इत्यादिनोक्तं परोवरीयस्त्वादिगुणविशिष्टब्रह्म उद्गीथ उपासनमक्ष्यादित्यगतहिरण्यश्मश्रुत्वादिगुणविशिष्टब्रह्मण उद्गीथ उपासनाद्भिन्नम् ॥ ७ ॥

---

१ ख. °पासते त°। २ क. समागो°।

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ८ ॥ (३) इति ।

उक्तविद्ययोः प्राणविद्येतिसंज्ञाया ऐक्यादैक्यमिति चेन्नेत्यनुषङ्गः । यतस्तस्य संबन्ध्युक्तं प्रकरणभेदादित्यनेनैव सिद्धान्तितं विभिन्नरूपविशिष्टोपासनयोः प्रक्रमाद्रूपस्य संज्ञापेक्षयाऽन्तरङ्गत्वेन बलवत्त्वाद्भेदकत्वमिति भावः । अन्यथा संज्ञैक्यमात्रेणैक्ये परोवरीयस्त्वाद्युक्तोपासनयोरप्युद्गीथेत्यग्निहोत्रदर्शपौर्णमासादौ काठकेति संज्ञैक्यमप्यस्तीति तत्राप्यैक्यं स्यात् ॥ ८ ॥ [ ३ ]

'ओमित्येतदक्षरमुद्गीथम्' इत्यत्रोद्गीथशब्दितोद्गीथावयवत्वविशेषितप्रणवस्योपास्यत्वोपक्रमाद्विद्याभेद उक्तः । तत्र 'ओमित्येतदक्षरमुपासीत' तं चोद्गीथमिति विध्यावृत्त्या वाक्यभेदापत्तिरतोऽक्षर उद्गीथदृष्ट्यध्यास इति प्रत्याह—

व्याप्तेश्च समञ्जसम् ॥ ९ ॥ ( ४ ) इति ।

प्रणवस्य सर्ववेदव्याप्तेरुद्गीथावयवत्वं विशेषणं तदेव च समञ्जसम् । विशेषणस्य विशिष्टप्रतीत्यर्थत्वात्पारार्थ्येन च स्वतन्त्रफलाकल्पनात् । न तूक्तदृष्ट्यध्यासः फलकल्पनापत्तेः । 'आपयिता ह वै कामानां भवति' [ छा० १ । १ । ७ ] इत्यादिनाऽऽप्त्यादिगुणकप्रणवोपास्तेरेव फलोक्तेरवयवलक्षणायाः प्रसिद्धत्वेन तदपेक्षयोद्गीथदृष्टिविषयत्वेन लक्षणाया जघन्यत्वाद्विशिष्टोपास्तिविधानाद्वाक्यभेदाचेति भावः ॥ ९ ॥ ( ४ )

उद्गीथविशेषणाद्यथा प्रणवान्तरव्यावृत्तिरुक्ता तथा कौषीतकिप्रभृतीनां प्राणविद्यायां ज्येष्ठत्वादिगुणकप्राणोक्त्यनन्तरमुक्ते 'अथो य एवं विद्वान्प्राणे निःश्रेयसं विदित्वा' [ कौ० २ । १४ ] इत्यत्रैवंशब्देन शब्दोपात्तज्येष्ठत्वाद्युक्त्या वसिष्ठत्वादिगुणानां छान्दोग्याद्युक्तानामपि व्यावृत्तिरस्तु तथा च तेषां नोपसंहार इति प्रत्याह—

सर्वाभेदादन्यत्रेमे ॥ १० ॥ ( ५ ) इति ।

छान्दोग्याद्युक्ता इमे वसिष्ठत्वादयोऽन्यत्र कौषीतकिष्वप्युपसंहि-

---

१ ख. 'बन्ध उक्तं । २ क. 'त्येत्राग्नि' । ३ क. 'तनागस्यो' । ४ क. 'वत्वावि' । ५ ख. 'द्वाक्यभे' ।

यन्ते । सर्वेषां गुणानां शब्दतो गुण्यविनाभूतत्वेन वा प्रागुपस्थितत्वेनै॰ वंपदवोध्यतयैकोपासनाङ्गत्वरूपादभेदात्साधर्म्यात् ॥ १० ॥ [ ५ ]

तैत्तिरीयके निर्गुणविद्यायां 'सत्यं ज्ञानमनन्तम्' [ तै० २ । १ । १ ] इति । 'आनन्दो ब्रह्म' [ तै० ३ । ६ । १ ] इति । 'आत्मन आकाशः' [ तै० २ । १ । १ ] इत्यादिना सत्यत्वादिगुणा उक्ता यत्र शाखान्तरे नोक्ताः किंतु कश्चन गुण उक्तस्तत्र नोपसंहर्तव्या निर्गुणप॰ मितावनुपयोगादन्यथा संयद्वामत्वादीनामप्युपसंहारापत्तेरिति प्रत्याह—

आनन्दादयः प्रधानस्य ॥ ११ ॥ इति ।

आनन्दादयो गुणा उपसंहर्तव्याः । एवमुपसंहारं विनाऽनानन्दत्वादिभ्रमानिवृत्तेरानन्दादिरूपतत्त्वंपदार्थैक्यरूपमहावाक्यार्थबोधानुपपत्तिः। ब्रह्मणोऽनानन्दत्वजडत्वाविशुद्धत्वापुरुषार्थत्वधीस्ततप्राप्तौ स्यात् । ब्रह्मणि मिथ्यात्वबुद्धौ च तज्ज्ञाने मिथ्याविषयकत्वरूपाप्रामाण्यबुद्ध्या तस्याज्ञाननिवर्तकता न स्यात् । अतोऽनानन्दत्वजडत्वमिथ्यात्वभ्रमनिवृत्तयेऽनानन्दादिव्यावृत्त्युपलक्षितब्रह्मलक्षणया तात्पर्यविषयीभूतशुद्धब्रह्मबोध आनन्दज्ञानसत्यपदैर्जन्यते। तादृशस्य च बोधस्यानानन्दत्वादिभ्रमनिवर्तकत्वमानुभविकं यथा प्रकृष्टप्रकाशश्चन्द्र इत्यादिस्थलीयशुद्धचन्द्रादिव्यक्तिबोधस्याप्रकृष्टप्रकाशत्वादिभ्रमनिवर्तकत्वम् । तस्मात्प्रधानस्य महावाक्यार्थबोधस्योक्तरीत्योपकारका इत्यन्यत्राप्यानन्दत्वादयो गुणा उपसंहर्तव्या एव । न च प्रकृष्टप्रकाशश्चन्द्र इत्यादौ सत्यं ज्ञानमित्यादिप्रकृते च कथं स्वरूपमात्रगोचरं निर्विकल्पं शब्दजन्यवाक्यार्थबोधस्य सविकल्पकत्वनियमादिति वाच्यम् । कश्चन्द्र इति चन्द्रस्वरूपमात्रजिज्ञासानुसारेण महावाक्यार्थान्वयिशुद्धस्वरूपस्यैवाऽऽकाङ्क्षितत्वेन च तादृशबोधस्यैव तात्पर्यविषयत्वात् 'एकधैवानुद्रष्टव्यम्' [ बृ० ४ । ४ । २० ] 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' [ मु० २ । २ । ५ ] 'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः' [ईशा० ७] 'तमेव विदित्वाऽति मृत्युमेति' [ श्वे० ३ । ८ इत्यादिश्रुतिभिः । एकधैव केवलब्रह्मविषयकं यथा स्यात्तथाऽनुद्रष्टव्य श्रवणाद्युत्तरं साक्षात्कर्तव्यम् । एकं केवलम् । अत्र पूर्ववाक्ये चेवकारेणैकपदार्थस्य शुद्धविष-

यकत्वस्यानुवादः । एवं च कदाचिदद्वैतदर्शनं कदाचिद्द्वैतदर्शनं न युगपदेवोभयं संतमसबहलालोकयोरिव विरोधादिति विवरणोक्तिः केवलात्मजिज्ञासाकालीनात्मज्ञानस्य केवलात्ममात्रविषयकत्वात्तादृशजिज्ञासायाश्च प्रायः सर्वदा मुमुक्षोः सत्त्वात्तदभिप्रायेण योजनीया । यदि तु सा यथाश्रुतैव योज्या तदैवकारबलात्केवलात्मान्याविषयकं यथा स्यादित्यर्थो बोध्यः। यस्मिन्काले सर्वाणि भूतानि विजानत आत्मैवाभूत्स्वकालपूर्वकालीनभिन्नविज्ञातात्मनस्तादात्म्यवत्त्वस्यैवकारान्न तु तादृशतादात्म्यशून्यानि तत्र काले को मोहः कः शोको मोहादेः स्वकालपूर्ववर्तितासंबन्धेन विज्ञातात्मन्यभाव एकत्वमनुपश्यत. एकात्मदर्शनहेतुको हेतौ शतृप्रत्ययात् । स्वकालेत्यत्र स्वपदार्थः सर्वभूतानि बाधकाले शुक्तावारोपितं रजतादिकं ज्ञातशुक्तिरभूदित्यादौ लोकेऽपि तादृशार्थप्रतीतेः । स्वकालेत्याद्यर्थकल्पना नापूर्वा, एकत्वमित्यग्रिमानुरोधात् । आत्मपदं केवलात्मपरम् । तमेवेत्यादौ तदन्याविषयकज्ञानोत्तरं मृत्युमतिक्रामतीत्यर्थः । तादृशविवरणोक्तेरुक्ताभिप्रायकत्वे स्वन्नमेव भुक्त्वाऽयं तृप्यतीत्यादावेतद्धीयतृप्तावन्नेतरभोजनत्वेन न हेतुत्वं किंत्वन्नभोजनत्वेनेति धीरिव मोक्ष आत्मेतरज्ञानत्वेन न हेतुत्वं किंत्वात्मज्ञानत्वेनेति धीः सविकल्पकं ज्ञानं घटत्वादिविशिष्टस्य निर्विकल्पकं तु घटस्यैवेत्यादाविवान्यविषयत्वानिरूपितविषयताकज्ञानस्य धीर्वित्याद्यर्थिकाभिर्निर्विशेषात्मज्ञानस्यैव मोक्षहेतुत्वसिद्ध्या तत्रैव महावाक्यतात्पर्यावसायात्तस्यैवाधिष्ठानत्वेन तन्मात्रज्ञानस्यैवाविद्यानिवर्तकत्वेनेतरांशतात्पर्यकल्पने मानाभावात्त्वंपदार्थविशेषणयोरभेदस्यायोग्यतया विशिष्टयोरन्वयासंभवाद्विशिष्टान्वयमुख्यत्वस्य लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादौ महाभाष्याद्युक्तस्य विशेष्यान्वयिना विशेषणयोग्यताज्ञानविशिष्टशक्तिज्ञानव्यापकसामग्रीत्वकल्पनयैव निर्वाह्यत्वेनोपहितान्वयस्यापि लक्षणसाध्यत्वाच्छुद्धलक्षणाया अप्यदोषत्वाच्च । अन्यथा वेदान्तानां पारमार्थिकार्थतात्पर्यकत्वप्रयुक्तप्रत्यक्षादिप्रमाणबाधकताया अनुपपत्तेः । 'सलिल एको द्रष्टाऽद्वैतो भवति' [बृ० ४।३।३२] 'एकमेवाद्वितीयम्' [छा० ६।२।१] 'नेह नानाऽस्ति ' [ बृ० ४।४।१९] 'नेति नेति' [बृ०३।९।२६] इत्याद्युपदेशानां वैयर्थ्यापाताच्च । शोधिततत्त्वंपदार्थयोरैक्येन तस्यैव तस्मिन्प्रकारत्वासंभवात्तस्यरूपस्य तादा-

१ ख. °माणाबा° ।

त्म्यस्य संबन्धत्वासंभवात्स्वं न स्वीयमित्यनुभवान्मानाभावाच्च । नीलो घट इत्यादावत एव स्वान्यः संबन्धो भाट्टैरङ्गीकृतस्तादात्म्यनामा । न च सामग्रीबाधः । परेषां संनिकर्षादिघटिताया इवास्माकमेतादृशस्थलीयलक्षणाज्ञानघटिताया एव सामग्र्यास्तात्पर्यानुरोधेन निर्विकल्पकत्वनियामकत्वात्संनिकर्षादिघटितसामग्रीस्थले प्रथमत एव विशिष्टबुध्यङ्गीकाराद्विशेषणधियस्तत्र हेतुत्वानङ्गीकारात् । अत एव निर्विकल्पार्थं लक्षणाऽपि न दोषस्तात्पर्याद्धि वृत्तिर्न तु वृत्तेस्तात्पर्यमिति न्यायात्सत्यादिपदानां शुद्धव्यक्तावेव शक्तिर्घटादिपदानां जातावित्यप्याहुः । न च निर्विकल्पकस्यात्र भ्रमनिवर्तकत्वं क्वचित्सप्रकारकस्यापीत्यननुगमो गौरवं चेति वाच्यम् । एकशक्तिमत्त्वेन निवर्तकत्वाददोषात् । अत्र चाऽऽनन्दत्वानन्तत्वादयो ब्रह्मस्वरूपा अपि कल्पितभेदेन तद्धर्मतापन्ना आनन्दादिपदशक्त्योपस्थिताः शुद्धस्वरूपलक्षका इति तादृशत्वोपस्थित्या साहाय्यमेवाऽऽनन्दत्वादीनामुपसंहारः ॥ ११ ॥

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥ इति ।

प्रियशिरस्त्वं ब्रह्मप्रतिपत्त्युपायत्वेन कोशधर्मतयैवोक्तं न तु ब्रह्मधर्मतया । आदीति संयद्वामत्वादीत्यर्थः । तेषां त्वप्राप्तिरनुपसंहारः । हि यस्माद्भेदघटितायोपासनाय संयद्वामत्वादिरूपावुपचयापचयावुक्तौ न तु निर्गुणविद्यायां तेषामानन्दत्वादेरिव दर्शितप्रयोजनमस्तीति भावः ॥ १२ ॥

इतरे त्वर्थसामान्यात् ॥ १३ ॥ ( ६ ) इति ।

इतरेऽनन्तत्वात्मत्वादयोऽप्युपसंहर्तव्याः । आनन्दत्वादेरिवान्तवदादिव्यावृत्त्युपलक्षितशुद्धब्रह्मलक्षणमात्रोपकारद्वारा तेषामप्यनन्तवत्त्वादिभ्रमनिवृत्तिरूपस्यार्थस्य समानत्वात् ॥ १३ ॥ ( ६ )

'इन्द्रियेभ्यः परा ह्यर्थाः' [ कठ० १ । ३ । १० ] इत्यादि 'अव्यक्तात्पुरुषः परः' [ कठ० १ । ३ । ११ ] इत्यन्ते वाक्ये प्रत्येकमर्थादीनां परत्वं विवक्षितमुपासनार्थत्वात् । अत एव—

दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः ।
भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः ।

---

१ क. °कानि° । २ ख. °त्वाद्° । ३ ख. °त्वं श्रीमच्छंकराचार्यमते न° । ४ ख. °क्षणामा° । ५ ख. °दात्ते° ।

चौल्क्षा दश सहस्राणि तिष्ठन्ति विगतज्वराः ।
पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥
पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते '।

इति गौतिकशब्दितार्थाद्युपासनफलमपि स्मर्यते । अत एव प्रामाणिको वाक्यभेदो न दूषणमिति प्रत्याह—

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥ इति ।

आध्यानाय साक्षात्कारहेतुनिदिध्यासनाय पुरुष एव सर्वपरत्वोपलक्षितः प्रतिपाद्योऽन्यथाऽर्थादीनां प्रत्येकं परत्वं विवक्षित्वोपासने प्रतिपाद्ये प्रयोजनस्य फलस्योक्तस्याभावादुक्तश्रुतौ चेन्द्रियादिपरत्वगुणकोपासनस्याप्रतीतेः ॥ १४ ॥

ननु तत्तदुपासनस्य सामान्यत एव प्रतीतेरिन्द्रियादिपरत्वगुणकेऽपि तत्तत्फलमस्तु तत्राऽऽह—

आत्मशब्दाच्च ॥ १५ ॥ ( ७ ) इति ।

'तद्विष्णोः परमं पदम् ' [ कठ० १ । ३ । ९ ] इत्युपक्रमे ' पुरुषान्न परं किंचित् ' [ कठ० १ । ३ । ११ ] इत्युपसंहारे चाऽऽत्मन एव परत्वेन प्रतिपादकशब्दात् ' गूढोत्मा न प्रकाशते ' [ कठ० १ । ३ १२ ] इत्यत्र गूढत्वेनोच्यमान आत्मशब्दप्रयोगाच्चाऽऽत्मप्रतीत्यर्थमेव तत्तत्परत्वप्रतिपादनमित्यर्थः । चकारात्परमप्रयोजनवदात्मगतं सर्वपरत्वमादायैकवाक्यतासंभवेन वाक्यभेदोऽन्याय्य इति भावः । वाक्यभेदमादायोपासनभेदशङ्कोत्पादेन संगतिः स्वरूपभूतैरुपसंहार्यैरानन्दत्वादिभिरतथाभूतसर्वपरत्वादेर्ब्रह्मधर्मस्योपास्थितेस्तु पूर्वाधिकरणेनेति बोध्यम् । उक्तरीत्या स्वरूपलक्षणानामेवाऽऽनन्दत्वाद्यनन्तत्वादीनां साक्षान्निर्विशेषविद्योपयोगित्वं तटस्थलक्षणानां तु सर्वपरत्वादीनां स्वरूपलक्षणप्रतीत्युपकारद्वारा परम्परयेति न तेषामुपसंहारः ॥ १५ ॥ ( ७ )

एकवाक्यतानुरोधेनार्थादिपरत्वमात्मनः प्रतिपत्त्युपायमाश्रित्य विद्यैक्यमुक्तं ' कतम आत्मेति योऽयं विज्ञानमयः ' [ बृ० ४ । ३ । ७ ] इत्यादि ' स वा एष महानज आत्मा ' [ बृ० ४ । ४ । २२ ] इत्य-

---

१ ग. °क्स्मृतौ ।

न्तवाजसनेयकस्य ' सदेव ' [ छा० ६ । २ । १ ] इत्यादि ' तत्त्वमसि ' [ छा० ६ । ८ । ७ ] इत्यन्तच्छान्दोग्यस्य च नैकवाक्यत्वसंभव आत्मशब्देनैकत्र सच्छब्देन चान्यत्रोपक्रमयोर्भेदात् । एवं च च्छान्दोग्य उपक्रमस्थस्य सत्तासामान्यवाचिसच्छब्दस्यानुरोधेनोपसंहारस्थतत्त्वमसीत्यत्र त्वंशब्दस्य परमात्मपरत्वमङ्गीकृत्य सत्तासामान्ये परमात्मदृष्टिर्विधीयते वाजसनेयके तु जीवस्य ब्रह्मत्वं प्रतिपाद्यत इति सद्रूपत्वं वाजसनेयके विज्ञानरूपत्वं च च्छान्दोग्ये नोपसंहर्तव्यमिति प्रत्याह—

आत्मगृहीतिरितरवदुत्तरात् ॥ १६ ॥ इति ।

इतरेणाऽऽत्मशब्देनेव सच्छब्देनाऽऽत्मन एव गृहीतिरुत्तरात् । ' स आत्मा ' ' तत्त्वमसि ' इतिवाक्यशेषात्सत्स्वरूपस्याऽऽत्मत्वमुक्त्वा तदैक्येन जीवस्य तत्र प्रतिपादनात्त्वंपदेन परमात्मलक्षणे च स आत्मेत्यस्य वैयर्थ्याद्वस्तुपरत्वसंभव उपासीतेतिपदाध्याहारेण दृष्टिविधाने गौरवाच्च ॥ १६ ॥

अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥ ( ८ ) इति ।

उपक्रमान्वयानुरोधाद्दृष्टिविधिरिति चेदुपक्रमादप्यात्मगृहीतिरेव स्यात् । सदेवेत्यस्यापि पूर्वमेकविज्ञानात्सर्वविज्ञानप्रतिज्ञाया 'उत तमादेशम्'[छा०६।१।३] इत्यादिनोपक्रमात्तत्र च स्वेतरयावदुपासनस्याऽऽत्मन एव सत्स्वरूपत्वावधारणात्सन्घट इत्यादिव्यवहारस्याधिष्ठानब्रह्मात्मकसत्तामादायैवोपपत्तेः सत्तासामान्यस्यान्यस्याप्रामाणिकत्वात् । अन्यथा सत्तासामान्येनाभावादौ सद्व्यवहारस्योपपादयितुमशक्यत्वादिति भावः ॥ १७ ॥ ( ८ )

वाक्यशेषाद्यथा सच्छब्दस्याऽऽत्मार्थत्वं तथा प्राणस्याऽऽपो वास इत्युपक्रमके ' तस्मादेवंविदशिष्यन्नाचामेदशित्वा चाऽऽचामेदेतमेव तदनमनग्नं कुरुते ' इत्यत्राप्याचामेदितिवाक्यशेषादाचमनविधिनिर्णयो न त्वनग्नताचिन्तनं वाक्यभेदापत्तेः । एतमुपास्यत्वेनोक्तमनं प्राणमनग्नं कुरुते । तदित्याचमनार्थकं क्रियाविशेषणमाचमनाभिन्नमनग्नीकरणमित्यर्थः । आचमनस्तुतिरियम् । पूर्वपक्षे यद्यपि स्मृतावाचमनं सामान्यतो विहितं तथाऽपि प्राणविद्याङ्गत्वेनेह विधीयते यथा स्मार्तं सामान्यतोऽ-

नृतवदननिषेधे सत्यपि ज्योतिष्टोमाङ्गतयाऽपि तन्निर्णयः पृथगिति प्रत्याह—

कार्याख्यानादपूर्वम् ॥ १८ ॥ ( ९ ) इति ।

आचमनस्य कर्ममात्राङ्गत्वेन कार्यतयाऽभिधानात्प्राणविद्यायामपि तत एव प्राप्तत्वादपूर्वमप्राप्तं प्राणस्य पूर्वोत्तराचमनीयापोऽभि रनग्नताचिन्तनमेव विधीयते । अनृतोक्तिप्रतिषेधस्तु क्रत्वर्थतया न प्राप्तः किंतु पुरुषार्थतयेति क्रत्वर्थतया तद्विधानं युक्तम् । एवं चान्यत्रापि प्राणविद्यायां तदुपसंहर्तव्यमिति भावः ॥ १८ ॥ [९]

एकस्यामेव वाजसनेयिशाखायां शाण्डिल्यविद्यामधिकृत्याग्निरहस्यभागे 'आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवं सत्यसंकल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा दिशोऽनुभूतं सर्वमिदमभ्यात्तमवाक्यनादरं यथा व्रीहिर्वा यवो वा' इति । बृहदारण्यकभागे तु 'मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच' [ बृ० ५ । ६ । १ ] इत्याद्युक्तम् । तत्र श्रवणादिरूपमनोबहुतरवृत्तिव्यङ्ग्यं प्राणस्पन्दहेतुयत्नवन्तं स्वप्रकाशमपरिच्छिन्नं यथेच्छरूपधारिणं मनो यथा शीघ्रं सूर्यादिप्राप्तिकार्यमिच्छामात्रेण करोति तथेच्छामात्रेण शीघ्रमेव कार्यकारिणमवश्यंभाविसंकल्पविषयमलङ्घनीयमर्यादं सर्वगन्धरसाश्रयं सर्वदिक्षु प्रभुं सर्वग्राहकं वाक्शून्यमुदासीनम् । व्रीह्यादिवत्सूक्ष्मो हृदयायतनत्वेनोपास्यत्वात्तस्मिन्मनसि मनोमयशब्देन प्रस्तुतेऽथवा तस्मिन्प्रसिद्ध उपासकनिष्ठे हृदये व्रीह्यादिवत्सूक्ष्म इत्यर्थः । तत्र परस्परानुक्तकामरूपित्वसर्वेश्वरत्वादेः परस्परोक्तत्वात्कुत्र गुणविधिः कुत्र विद्याविधिरिति निश्चेतुमशक्यत्वात्समिधो यजतीत्यादिवदेकशाखायामेवाभ्यासाद्गुणिन एव प्रत्यभिज्ञाविषयत्वादुभयत्रैकजातीयगुणाभिधानवैयर्थ्याच्च विद्याभेदः । एवं च न गुणोपसंहार इति पूर्वं यथाऽऽचमनानुवादेनानग्नताचि-

---

१ ख. तन्निषेधः पृ° । २ ख. °स्य चोष° । ३ ख. °नुप्रभु° । ४ ख. °कल्पावि° । ५ क. °मुपास्ती° ।

न्तनविधिस्तथाऽत्र विद्यानुवादेन गुणविधिर्न संभवतीति संगतं प्रत्याह—

समाने एवं चाभेदात् ॥ १९ ॥ ( १० ) इति ।

समाने समसंख्याकगुणबोधकवाक्यद्वय एवैवं पूर्वपक्षः संभवति । प्रकृते तु यत्र भूयांसो गुणा उक्तास्तत्रैव तावद्गुणविशिष्टविद्याविधिरन्यत्र गुणमात्रविधिः । अन्यथा स्वल्पगुणवाक्ये विशिष्टविद्याविधेर्भूयोगुणवाक्ये गुणमात्रविध्यङ्गीकारे भूयोगुणानां प्रत्येकं विध्यावृत्तौ गौरवात् । स्वल्पगुणवाक्ये प्राप्तगुणान्तरविशिष्टगुणाभिधानं तु प्रत्यभिज्ञादार्ढ्याय । चो हेतौ । अतो विद्याभेदाभावाद्गुणोपसंहारोऽवश्यमिति भावः ॥ १९ ॥ ( १० )

'आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते देवाः सत्यमेवोपासते ' [ बृ० ५ । ५ । १ ] इत्यादि ' तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन्स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ' [ बृ० ५ । ५ । २ ] 'य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकँ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ' [ बृ० ५ । ५ । ३ ] ' योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिरः ' [ बृ० ५।५।४ ] इत्यादि समानं तस्योपनिषदहमिति विशेषः । इति बृहदारण्यवाक्यम् । आपोऽग्निहोत्रादिसंबन्धिद्रवद्रव्यसूक्ष्मावस्थारूपादृष्टोपरक्तमव्याकृतमिदं जन्यमात्रतादात्म्यवत्सत्यं ब्रह्म हिरण्यगर्भात्मकं भवति । मण्डले मण्डलाभिमानी दक्षिणेऽक्षंस्तदभिमानी प्रतिष्ठित उपकर्ता प्राणैरिन्द्रियैः प्रतिष्ठितो ग्राहकः शुद्धं रश्मिहीनं चन्द्रमण्डलमिव प्रत्यायन्ति प्रत्यागच्छन्ति । प्रतिष्ठा पादः । उपनिषद्रहस्यं नाम । अहरिति प्रकाशवाचकम् । अहमिति प्रत्यगात्मवाचकम् । भूरिति शिरस्कत्वादिविशिष्टादित्यप्रत्यगात्माभिन्नतया ब्रह्म चिन्त्यम् । अहरित्यादित्याभिन्नस्य नाम चिन्त्यम् । अहमिति प्रत्यगात्माभिन्नस्येत्याद्यर्थकम् । तत्र

१ ख. 'गात्मभि' ।

तस्येत्यनेन सत्यस्य ब्रह्मण एव प्राधान्येन परामर्शादित्याक्षिरूपो-भयायतनावच्छेदेनैव नामद्वयं चिन्त्यमिति शङ्कते—

संबन्धादेवमन्यत्रापि ॥ २० ॥ इति ।

पूर्वं प्रत्यभिज्ञानाद्यथा विद्यैक्यमुक्तमेवं सत्यस्य ब्रह्मणो नामिन एकस्यैवोभयत्रापि संबन्धात्प्रत्यभिज्ञायमानत्वेनैकायतनावच्छेदेनेवा-न्यायतनावच्छेदेनापि नाम चिन्त्यम् ॥ २० ॥

प्रत्याह—

न वा विशेषात् ॥ २१ ॥ इति ।

वाऽवधारणे । एवं नेव । विशेष्यस्य सत्यस्यैकत्वेऽपि तत्तदायतनाव-च्छिन्नत्वेन विशेषाद्भेदात् ॥ २१ ॥

दर्शयति च ॥ २२ ॥ (११) इति ।

प्रकृतवाक्यं प्रत्येकायतनावच्छिन्नं सत्यमेव तत्पदाभ्यां परामृश्य तस्य प्रत्येकनामवत्त्वेन चिन्त्यत्वं दर्शयत्यपि ॥ २२ ॥ (११)

राणायनीयानां खिलनामकपरिशिष्टग्रन्थेषु ‘ ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः ’ इति वाक्ये वीर्याणि पराक्रमविशेषा ब्रह्मैव ज्येष्ठं येषां तादृशानि । अन्येषां पराक्रमे कर्तव्ये सहायान्तरं कारणतया ज्येष्ठम् । ब्रह्मणस्तु सृष्ट्यादिपराक्रमे कर्तव्ये ब्रह्मैव कारणतया ज्येष्ठं न तु सहा-यान्तरमित्यर्थः । संभृतानि ब्रह्मरूपं कर्म प्राप्तानि । ब्रह्मपदं द्वितीयं कर्म-बोधकं प्रथमान्तविपरिणामेनानुषक्तमाततानेतेः कर्तृबोधकम् । अथवा ज्येष्ठानि सर्वकार्यपूर्ववर्तीनि जगत्सृष्ट्यादिहेतुनानासर्गीयवीक्षणान्यन्य-पुरुषीयपराक्रमापेक्षया वा ज्येष्ठानि वीर्याणि जगत्सृष्ट्यादीनि ब्रह्म प्राप्तानि । तथा च प्रथममेव ब्रह्मपदं कर्म ज्येष्ठमिन्द्रादेः पूर्वमस्याततान व्याप्तवत् । भूतानामेवमुत्पन्नानां प्रथमं जज्ञे वीक्षणादि-वीर्यवत्तयोत्पन्नमित्याद्यर्थक आम्नाता वीर्यसंभृतिद्युव्याप्त्यादयो गुणा-स्तेषामेवोपनिषदुक्तशाण्डिल्यविद्यायामुपसंहर्तुं शक्यन्ते । तत्रापि ‘ ज्यायान्दिवः ’ [ छा० ३ । १४ । ३ ] इत्यादिनोक्तस्याऽऽधिदैविक-विभूतिरूपगुणस्य ब्रह्मणश्च प्रत्यभिज्ञानाद्वैश्वानरषोडशकलादिविद्यासु

---

१ क. °नाम्नु° । २ ख. °कलविद्यादिषु प° ।

परस्परमाधिदैविकविभूतिप्रत्यभिज्ञानेऽपि तत्र प्रत्येकं प्रत्यक्षविधिविहितत्वेन भेदनिश्चयाद्वीर्यसंभृत्यादीनां त्वश्रुतविधिकत्वात्परिशिष्टग्रन्थरूपखिलभागोक्तत्वाच्चौपनिषद्विद्याशेषत्वं संभवतीत्यधिकमाशङ्क्यातिदेशेन प्रत्याह—

संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥ (१२) इति ।

व्याप्तीरयन्तं समाहारद्वन्द्वः । न वेत्यनुषज्यते । संभृत्याद्यपि नोपसंहर्तव्यम् । अतः शाण्डिल्यविद्यायामध्यात्ममन्यत्राधिदैवतमित्यायतनभेदेन विद्ययोर्विशेषाद्भेदात् । चकारात्साधारणस्याऽऽधिदैविकविभूतिगुणस्य प्रत्यभिज्ञानं नाभेदसाधकमन्यथा वैश्वानरषोडशकलादिविद्ययोरभेदापत्तेः । किंत्वसाधारणस्यैकत्र संभृत्यादेरन्यत्र मनोमयत्वादेः प्रकृत उक्तत्वाद्भेदः । एवं च संभृत्यादिगुणविशिष्टब्रह्मस्तुत्या तदुपासने विधिरपि कल्पनीय इति भावः ॥ २३ ॥ ( १२ )

असाधारणगुणाप्रत्यभिज्ञानाद्भेद उक्तः । ' तस्मान्न्यासमेषां तपसामतिरिक्तमाहुः ' [ महानारायण० २४ । १ ] इत्यनेन संन्यासम् । ' ओमित्यात्मानं युञ्जीत ' [ महानाराय० २४ । १ ] इत्यादि ' ब्रह्मणो महिमानमाप्नोति ' [ महानाराय० २५ । १ ] इत्यन्तेनाऽऽत्मविद्यां चोक्त्वा ' तस्यैवं विदुषो यज्ञस्याऽऽत्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युः ' इत्यादि 'ब्रह्मणो महिमानमाप्नोति य एवं वेद ' [ महानाराय० २५ । १ ] इत्यादि(इत्यन्त) तैत्तिरीयवाक्ये त्वेवं संन्यासपूर्वकं प्रणवे ब्रह्मोपासकरूपस्य विदुषो यो यज्ञ उक्तोपासनारूपस्तस्य यजमानत्वपत्न्यादिभावस्तादृशविदुष आत्मश्रद्धादावारोपणीयो विदुषः शिखा यज्ञस्य वेदो दर्भचयविशेषः शमयिता पशुहन्तेत्याद्यर्थके ' पुरुषो वाव यज्ञस्तस्य यानि चतुर्विꣳशतिवर्षाणि तत्प्रातःसवनम् ' [ छा० ३ । १६।१ ] ' अथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यंदिनꣳ सवनम् ' [ छा० ३।१६।३ ] ' अथ यान्यष्टचत्वारिꣳशद्वर्षाणि तत्तृतीयसवनम् ' [ छा० ३।१६।५ ] ' यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ' [ छा० ३ । १७ । १ ] 'अथ यद्धसति जक्षति तत्स्तुतशस्त्रैः '

[ छा० ३ । १७ । ३ ] 'तं चेदेतस्मिन्वयसि *किंचिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनꣳ सवनमनुसंतनुते' [ छा० ३ । १६ । २ ] इति 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसि' [ छा० ३ । १७ । ६ ] इत्यादि । एवं 'प्र ह षोडशं वर्षशतं जीवति य एवं वेद' [ छा० ३ । १६ । ७ ] इति छान्दोग्यवाक्ये स ब्रूयात्प्राण इत्यादि संतनुतेत्यन्तमाशीःप्रार्थनवाक्यं वदेदेतद्वक्ष्यमाणमक्षितमित्यादि संशितमसीत्यन्तं त्रयं प्र ह षोडशं षोडशाधिकमित्याद्यर्थकेनोक्तस्य पुरुषयज्ञत्वस्य मरणावभृथत्वादेश्च प्रत्यभिज्ञानादभेदोऽस्तु । न च विदुषो यज्ञस्येति व्यधिकरणे षष्ठी निषादस्थपतिन्यायेन सामानाधिकरण्यस्य मुख्यत्वादिति प्रत्याह—

पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥२४॥(१३) इति ।

न चेत्यनुषज्यते । छान्दोग्येऽपि पुरुषादौ यज्ञत्वादि संपाद्य यदुपासनमुक्तं तत्रत्यमाशीःप्रार्थनादिकं पुरुषयज्ञत्वादिकं च तैत्तिरीये नैवोपसंहर्तव्यम् । छान्दोग्योक्तपुरुषविद्यायामिवेतरेषां पुरुषाद्युपसवनत्रयायुर्वृद्धिफलादीनां तैत्तिरीयेऽनाम्नानाद्विद्याभेदात् । चकाराद्विदुषो यज्ञस्येत्यत्र यज्ञपदस्य यज्ञदृष्टिविषयार्थकतया गौणत्वापेक्षया विद्वत्संबन्धिप्रक्रान्तयज्ञानुवादेनाऽऽत्मादीनां यजमानत्वादिसंपादनमेव ब्रह्मविद्याप्रशंसार्थमुचितम् । यजमानादिसंपादनविषयात्मादिघटितत्वाद्वा पुरुषस्य यज्ञत्वमुक्तमिति भावः ॥ २४ ॥ ( १३ )

आथर्वणिकाद्युपनिषदारम्भे 'सर्वं प्रविध्य हृदयं प्रविध्य धमनीः प्रवृज्य' इत्यादयो मन्त्राः प्रवर्ग्यादिकर्माणि च फलवद्विद्यासंनिधौ श्रूयमाणानि विद्याङ्गानि यद्यपि मन्त्रलिङ्गेनाभिचारे कर्मणि च 'पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्ति' इति वाक्येन ज्योतिष्टोमे विनियुज्यन्ते तथाऽपि मन्त्राणां विद्यासमवेतहृदयादिप्रकाशकत्वात्कर्मार्थस्यापि मन्त्रकर्मणो विद्यार्थत्वसंभवादविरोध इति प्रत्याह—

वेधाद्यर्थभेदात् ॥ २५ ॥ ( १४ ) इति ।

न चेत्यनुषज्यते । मैवं वाच्यम् । यद्यपि मन्त्रस्थहृदयादिपदानि

---

* व्याध्यादिकम् ।

धिद्यासमवेतार्थानि तथाऽपि वेधाद्यर्थकपदानि न तथा। संनिधेश्च प्रकरणादिकल्पकतया विलम्बितत्वात्तदपेक्षया वाक्यस्य बलवत्त्वात्तेनाऽऽदौ ज्योतिष्टोमे विनियुक्तेषु प्रवर्ग्यादिषु निराकाङ्क्षत्वान्न तेषां विद्यान्वय इति वेधाद्यर्थकैः पदैर्ज्योतिष्टोमाङ्गतार्थकवाक्येन च भेदादुक्तमन्त्रकर्मणां विद्याङ्गाद्यावर्तनादित्यर्थः ॥ २५ ॥ [ १४ ]

यथा मन्त्रादेर्विद्यायामनुपयोगादनुपसंहारस्तथा ‘ श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ’ [ छा० ८।१३।१ ] इति ताण्डिनां निर्गुणविद्योक्तेः श्यामाद्दुर्बोधत्वेन श्यामवर्णतुल्याद्धृदयस्थब्रह्मणः सकाशाच्छबलं नानाकाम्यमिश्रं ब्रह्मलोकं प्रपद्ये हार्दं ब्रह्मध्यानेन ब्रह्मलोकं प्राप्स्यामि यतः शबलाद्ब्रह्मलोकात्सकाशान्नामरूपव्याकरणाय श्यामं हार्दं ब्रह्म प्रपद्ये प्रपन्नोऽहम्। ‘ अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि ’ [ छा० ६ । ३ । २ ] इतिश्रुतेरतस्तमेव प्रकृतिरूपं ब्रह्मलोकस्थमात्मानं प्रपद्ये। ब्रह्मलोकप्रपत्तिप्रकारमाहाश्व इवेत्यादीत्युपनिषद्भाष्ये व्याख्यातम्। तत्र निर्गुणप्रकरणे ब्रह्मलोकप्रपत्तेरुक्तिः स्तुत्यर्थम्। कल्पतर्वादौ तु ब्रह्मैव लोकमित्यर्थकं ब्रह्मलोकमेतीत्युक्तं तदनुसारेणायमर्थः—श्यामाच्छ्याममात्रादिवैकरसाद्ब्रह्मणः सकाशादुपाधिशबलरूपमाविद्यकं मिथ्याभूतं प्रपन्नोऽहमतः स्वीयं रूपं श्यामं ज्ञात्वा शबलात्तदेव प्रपद्ये प्राप्स्यामीति। श्यामप्राप्तिप्रकारमाह—अश्वो यथा जीर्णानि रोमाणि गात्रकम्पेनान्यत्र संचारयति तथा पापं पूर्वसंचितं सर्वकर्म विधूयान्यत्र संचार्य चन्द्रो यथा राहोर्मुखात्प्रमुच्य तेन संनिहितोऽपि न श्लिष्टो भवति तथा क्रियमाणेन पापेन संनिहितोऽपि तस्मात्प्रमुच्यासंश्लिष्य पापमित्यस्य विपरिणामेनानुषज्यते शरीरं विद्यमानं धूत्वा भोगेन क्षपयित्वाऽऽगामिशरीरं तन्मूलकर्माभावेन धूत्वाऽप्राप्याकृतमनाद्यनाशिनं ब्रह्मात्मकं लोकमभिसंभवामि प्राप्नोमि कैवल्यं प्राप्स्यामीति यावत्। कर्मविधूननादौ सर्वत्र तत्त्वधीरेव हेतुरित्याह—कृतात्मा कृततत्त्वधीरहं यतः। अयं च मन्त्रो ध्यानार्थ इत्याद्यर्थके स्वाश्रयगतफलाजनकत्वरूपपापविधुतत्वबोधकवाक्ये ‘ तत्सुकृतदुष्कृते विधुनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया

---

१ ख. °प्रतिप° । २ ख. ब्रह्मलो° । ३ ख. °कमितीत्यु° ।

दुष्कृतम् ' [ कौषी० १ । ४ ] इति कौषीतकिपर्यङ्कविद्यावाक्योक्तं विद्वत्प्रियाप्रियगतफलजनकत्वरूपं पुण्यपापस्योपेयमानत्वमपि नोपसंहार्यमुपेयमानत्वं विनाऽपि विद्यामाहात्म्येनैव विधुतत्वसंभवेन विधुतत्ववाक्य उपेयमानत्वस्यानुपयोगादिति प्रत्याह—

हानौ तूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥ (१५) इति ।

पुण्यपापस्य फलाजनकत्वहानिबोधकताण्डिवाक्य उपेयमानत्वमप्युपसंहार्यम् । कौषीतकिवाक्यस्योपायनबोधकशब्दघटितत्वाद्विद्यास्तुतिपरेऽपि वाक्ये देवताधिकरणन्यायेन हानोपायनाद्यंशे प्रामाण्यात्कीर्तितान्यकर्मणां फलैकनाश्यत्वस्य क्लृप्तत्वाच्च स्तुतिबुध्युपकारार्थमुपसंहार आवश्यक इति भावः । यथा भाल्लविनां ' कुशा वानस्पत्याः ' इत्यविशेषेण श्रवणेऽपि शाट्यायनिनामौदुम्बरा इति विशेषः । यथा वा क्वचिद्देवासुरच्छन्दसामविशेषे ' देवच्छन्दांसि पूर्वाणि ' इति पैङ्ग्याम्नानात्पूर्वत्वम् । यथा वा षोडशिस्तोत्रे कालानिश्चये ' समयाध्युषिते सूर्ये ' इति विशेषः । यथा वा भाल्लविनामुपगानविशेषोऽन्यत्र गृह्यते तथा प्रकृत एकत्रोक्तमुपायनमन्यत्रापि गृह्यते । तदुक्तमिति तत्साद्दृशमेकार्थवादसापेक्षमर्थवादान्तरस्थमुक्तमपि यथा ' एकविंशो वा इतोऽसावादित्यः ' [ छा० २ । १० । ५ ] इत्यत्रैकविंशत्वं ' द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्यः ' इत्येकविंश इत्यनेन सापेक्षमित्यर्थः ॥ २६ ॥ [ १५ ]

विद्यायाः कर्मविधूननहेतुत्वमुक्तं तन्न । ' स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधुनुते ' [ कौषी० १ । ४ ] इत्यत्र पञ्चम्यन्ततच्छब्देन प्रक्रान्तनदीतरणस्य ब्रह्मलोकगमनमार्गावच्छिन्नस्य कर्मविधूननहेतुत्वोक्तेरिति प्रत्याह—

सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥ इति ।

मैवं वाच्यम् । सांपराये परे तत्त्वे सति तर्तव्यस्य कर्मणोऽभावात्सर्वस्य ब्रह्मलोकभोगजनकान्यस्य तस्य तीर्णत्वात् । हि यस्मादन्ये

---

१ क. °पादानां° ।

ताण्डिनो ' विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि ' [ छा० ८ । १३ । १ ] इत्यनेन तथा शरीरत्यागपूर्वमेव कर्मविधूननमधीयते । अकृतं दैनंदिनप्रलयान्ते भूर्लोकादिवदजनितं ब्रह्मलोकम् ॥ २७ ॥

छन्दत उभयाविरोधात् ॥ २८ ॥ (१६) इति ।

छन्दतः स्वातन्त्र्येण नदीतरणाद्यनपेक्ष्य साक्षादेव विद्याया विधूननोपायनहेतुत्वे लाघवम् । एवं च तत्पदमपि प्रधानस्य विद्यावत एव प्रक्रान्तस्य परामर्शकमित्युभयोः श्रुत्योरविरोधात् । नैकविरोधेनापरव्याख्यानं युक्तम् । तथा हि ' स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य ह वा एतस्य ब्रह्मलोकस्याऽऽरो ह्रदो मुहूर्ता येष्टिहा विजरा नदील्यो वृक्षः सालज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगोपौ । विभुप्रमितं विचक्षणाऽऽसन्द्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यावयतौ वै च जगान्यम्बाश्चाम्बायवश्चाप्सरसः । अम्बया नद्यस्तमित्थंविदागच्छति तं ब्रह्माऽऽहाभिधावत मम यशसा विजरा वा अयं नदीं प्रापन्न वा अयं जरयिष्यतीति ' । [ कौषी० १ । ३ ] ' तं पञ्च शतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतमाञ्जनहस्ताः शतं चूर्णहस्ताः शतं वासोहस्ताः शतं फणहस्तास्तं ब्रह्मालंकारेणालंकुर्वन्ति स ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति स आगच्छत्यारं ह्रदं तं मनसाऽत्येति । तमृत्वा संप्रतिविदो मज्जन्ति स आगच्छति मुहूर्तान्येष्टिहांस्तेऽस्मादपद्रवन्ति स आगच्छति विजरां नदीं तां मनसैवात्येति । तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतं तद्यथा रथेन धावयन्रथचक्रेण पर्यवेक्षतैवमहोरात्रे पर्यवेक्षत एवं सुकृतदुष्कृते सर्वाणि च द्वंद्वानि स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान्ब्रह्मैवाभिप्रैति ' [ कौषी० १ । ४ ] । ' स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति स आगच्छति सालज्यं संस्थानं तं ब्रह्मरसः प्रविशति स आगच्छत्यपराजितमायतनं तं ब्रह्मतेजः प्रविशति स आगच्छति । इन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति स आगच्छति विचक्षणामासन्दीं सा प्रज्ञा प्रज्ञया

हि विपश्यति स आगच्छत्यमितौजसं पर्यङ्कं स प्राणस्तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेरा चापरौ बृहद्रथंतरे अनूच्ये भद्रयज्ञायज्ञीये शीर्षण्ये ऋचश्च सामानि च प्राचीनातानं यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथ उपश्रीः श्रीरुपबर्हणं तत्र ब्रह्माऽऽस्ते तमित्थंवित्पादेनैवाग्र आरोहति तं ब्रह्माऽऽह कोऽसीति ते प्रतिब्रूयात्' । [ कौषी० १।५ ] ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भाया एतत्संवत्सरस्य तेजो भूतस्य भूतस्य भूतस्य भूतस्याऽऽत्मा त्वमात्माऽसि यस्त्वमसि सोऽहमस्मि तमाह कोऽहमस्मीति सत्यमिति ब्रूयात्किं तद्यत्सत्यमिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यद्देवाश्च प्राणाश्च तत्त्यं तदेतया वाचाऽभिव्याह्रियते सत्यमित्येतावदिदं सर्वमिदं सर्वमसि । इत्येवैनं तदाऽऽह तमाह केन मे पौंस्नानि नामान्याप्नोषीति प्राणेनेति ब्रूयात् । केन स्त्रीनामानीति वाचेति केन नपुंसकानीति मनसेति केन गन्धानिति प्राणेनेत्येव ब्रूयात् । केन रूपाणीति चक्षुषेति केन शब्दानिति श्रोत्रेणेति केनान्नरसानिति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे इति शरीरेणेति केनाऽऽनन्दं रतिं प्रजातीरित्युपस्थेनेति । केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयेति ब्रूयात्तमाह । आपो वै खलु मे ह्यसावयं ते लोक इति सा या ब्रह्मणो जितिर्या व्यष्टिस्तां जितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ' [ कौषी० १।६ ] इति श्रुतिः । तस्याश्चायमर्थः—स सगुणब्रह्मविद्देवैरर्चिराद्यभिमानिभिर्यानमुपासकस्य ब्रह्मलोकप्रापणं येन तं पन्थानम् । अग्निलोकमर्चिरभिमानिदेवताम् । आगच्छतीति । स दिनशुक्लपक्षोत्तरायणषण्माससंवत्सरदेवलोकाभिमानिदेवता इति शेषः । 'अर्चिषोऽहरह्न आपूर्यमाणपक्षम्' [छा० ४।१५।५] इत्यादिश्रुतेः । वायुलोकं तदभिमानिदेवताम् । एवमग्रेऽपि । स चन्द्रविद्युल्लोकाविति शेषः । श्रुत्यन्तरात् । आदित्यलोकमिति । चन्द्रलोकगमनात्पूर्वमादित्यलोकगमनं श्रुत्यन्तरात् । प्रजापतिर्विराट् । ब्रह्मा हिरण्यगर्भः । तस्य ब्रह्मलोकस्याऽऽरोऽरिभिः कामक्रोधादिभिः कृतत्वादारनामको ह्रदो ब्रह्मलोकस्य प्रथमो मार्गनिरोधकस्तस्य परपारे मुहूर्तास्तदभिमानिदेवा येष्टिहा यादिष्टं ब्रह्मलोकप्रापकमुपासनं तत्कामक्रोधाद्युत्पादनद्वारा घ्नन्तीत्यर्थः । विजरा विगता जरा यस्या दर्शनादिना सोपासनक्रियेव नदीरूपा । इल्यो वृक्ष इला पृथिवी तद्रूपत्वेनेल्यनामा स एव 'अश्वत्थः

सोमसवनः ' [ छा० ८ । ५ । ३ ] इति छान्दोग्योक्तः। सालज्यं सालवृक्षतुल्या ज्या धनुर्गुणो येषां तादृशानेकशूरजनसेव्यं वापीकूपतडागारामादियुक्तं संस्थानं पत्तनम् । अपराजितं केनापि न पराजितमायतनं ब्रह्मणो मन्दिरं तस्मिन्निन्द्रप्रजापतिनामानौ वाय्वाकाशौ द्वारपालौ । विभुप्रमितमहमित्येव प्रमितमहंकारस्वरूपं सभास्थानम् । विचक्षणा कुशला आसन्दी वेदिका महत्तत्त्वरूपा सभामध्यस्थाऽमितौजा ब्रह्मणः पर्यङ्कः प्राणस्वरूपः प्रिया भार्या मानसी मनसः कारणं प्रकृतिः प्रतिरूपा प्रतिच्छाया चाक्षुषी चक्षुष्प्रकृतिभूता तैजसी । चकाराभ्यां तयोरलंकारादिकमपि मानसचाक्षुषम् । पुष्पाण्यावयतौ वै च जगानि जगन्ति चतुर्विधप्राणिनो लोकसंस्थानानि च पुष्पाण्यावयतावा समन्तात्तन्तुसंतानकृतौ पटौ। अम्बाः श्रुतयः । अम्बायवो बुद्धयः । अम्बा इच्छन्तीत्यर्थेऽम्बशब्दात्क्यच्प्रत्यये कृते 'क्याच्छन्दसि' [ पा० सू० ३ । २ । १७० ] इत्यनेन विहितादुप्रत्ययादम्बायुशब्दनिष्पत्तेः । अम्बयानामका नद्योऽम्बं लोचनं ब्रह्मज्ञानं यान्ति यापयन्ति स्वीयजलपानादिनेति व्युत्पत्तेः । तं ब्रह्मलोकमित्थमुक्तेन वक्ष्यमाणेन वा प्रकारेण ब्रह्मविदागच्छति तमुपासकमागच्छन्तमुद्दिश्य ब्रह्माऽऽह स्वीयान्परिचारकानप्सरसश्चाभिधावन्तमुपासकमभि संमुखं धावत यूयं मम यशसा कीर्त्या मदुपासकस्य मया मल्लोकप्रवेशात्पूर्वमेव स्वकीयपूजालंकारसंमानादिकं दीयत इति कीर्तिं स्थापयतेति भावः । ननु कामक्रोधादिमानयं कथं भवदीयपूजादिकमर्हति तत्राऽऽह—. विजरामित्यादि । कामादिप्रयुक्तापकर्षरूपजराहारिणी नदी तस्मात्पूर्वमारे ह्रदे कामादिमतां मज्जनात्तत्प्राप्तिकाले कामादेर्न प्रसक्तिरिति भावः । माला अत्यद्भुतसौगन्ध्यादियुक्तपुष्पमाल्यानि । आञ्जनमञ्जनोपयोगिद्रव्यं कर्पूरकस्तूरीकक्कोलतैलादिकम् । चूर्णं केशरकुङ्कुमादिचूर्णम् । फणं विविधाभरणम् । तमनुत्तीर्णारह्रदमुपासकं ब्रह्मालंकारेण हिरण्यगर्भधारणयोग्यालंकारेण मनसैव न तु पादादिना कामक्रोधादिमयस्य तस्योद्रिक्तसत्त्वगुणकेन मनसैव जयात् । संप्रतिविद आत्मप्राप्तेः प्रतिकूलं विषयसुखं सम्यक्त्वेन जानन्तो ये सगुणब्रह्मविद्याहीनास्ते तं ह्रदमृत्वा प्राप्य मज्जन्ति कामादिमत्त्वात् । अस्मादुत्ती-

१ °कारः स्वयं स° ।

र्णारह्रदादुपासकादपद्रवन्ति पलायन्ते । ननु संचितविविधपापाकुलस्यो-पासकस्य कामक्रोधादिसंभवेन कुत आरह्रदस्योत्तरणं कुतस्तरां येष्टि-ह्वानां कुतस्तमां विजरायास्तत्राऽऽह—तत्सुकृतेति । तद्ब्रह्म विद्वानि-त्यनेन पूर्वोक्तात्स इतिपदेश्चोक्ताद्ब्रह्म विदुष एव हेतोः सुकृतदुष्कृते विधुनुतेऽन्यत्र संचारयति । सगुणब्रह्मसाक्षात्कारविशिष्टस्यैव कर्मवि-धूननहेतुत्वाद्यदोपासकस्य तथात्वं तदैव कर्मविधूननं तथात्वं च देहपा-तात्पूर्वमेवेति तदैव तदिति भावः । विद्याया हेतुत्वेऽपि विद्यावतो हेतुत्वोक्तिर्विद्याया उपासकनिष्ठः साक्षात्संबन्ध एव विधूननप्रयोजको न त्वारह्रदादितरणद्वारक इति ज्ञापनायेति बोध्यम् । अत एव स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वानित्यग्रिमवाक्ये विद्याया हेतुत्वमुक्तम् । हेत्वर्थकशतृप्रत्ययस्य वस्वादेशविधानेन सुकृतदुष्कृतशून्यताया विद्या-हेतुकत्वलाभात् । प्रियाः प्रियं कुर्वाणा ज्ञातयो ज्ञात्यादय उपयन्ति प्राप्नुवन्ति । तस्य सुकृतं दुष्कृतं तदीयसंचितसुकृतदुष्कृताभ्यां जनितं तत्सदृशं सुकृतदुष्कृतान्तरं क्रियमाणैस्तु तत्कर्मभिर्जनितमदृष्टं यथा रथेन धावयन्नश्वान्प्रेरयन्रथचक्रे भूमिसंयोगफलवत्तां पर्यवेक्षते न तु स्वयं तत्फलवानेवं तत्र ब्रह्मंविद्देहेन्द्रियादिकमहोरात्रे कालेऽदृष्टेन भ्रामिमाणं पर्यवेक्षते न तु तत्फलरागद्वेषादिमानेवं सुकृतदुष्कृते विहितनिषिद्धक्रिया देहादिना निष्पाद्यमानाः पर्यवेक्षते न तु तत्फलमदृष्टं प्राप्नोति । द्वंद्वानि शीतोष्णादीनि पर्यवेक्षते न तु तत्फलरागद्वेषवान् । विसुकृतदुष्कृतः सगुणोपासनाजन्याद्ब्रह्मलोके भोक्तव्याददृष्टादन्येनादृष्टेन शून्यो ब्रह्मैवाभिप्रैत्यनुसंधत्ते न तु विषयेषु रागद्वेषादिहेत्वनुसंधानवान् । तथा चाऽऽरह्रदादितरणं तस्य संभवत्ये-वेति भावः । ब्रह्मगन्धो ब्रह्मलोकादन्यत्र विद्यमानगन्धेभ्य उत्कृष्टो ब्रह्मलोक एवाऽऽसक्तिहेतुः । प्रविशति घ्राणद्वारा हृदयमायाति । एवं रसो रसनाद्वारा । तेजः कान्तिविशेषः सर्वदेहावयवद्वारा । अस्मादप-द्रवतोऽपसरन्तो दूरे तिष्ठन्तः । ब्रह्मयशो ब्रह्माहमस्मीति प्रकृतेरहंकारो मनोद्वारा प्रविशति । विपश्यति विविधं विश्वं यथावत्पश्यति । तस्यामितौजसः पर्यङ्कस्य भूतं भविष्यत्सर्वं पूर्वौ पूर्वदिग्वर्तिनौ श्रील-क्ष्मीरिरा पृथिव्यपरौ पश्चिमदिग्वर्तिनौ बृहद्रथंतरनामके सामनी । अनूच्यसंज्ञके दक्षिणोत्तरयोर्दीर्घे खट्वाङ्गे । मद्र्यज्ञायज्ञीयनामके

---

१ क. एतस्य ।

सामनी। शीर्षण्ये पूर्वपश्चिमयोर्ह्रस्वे खट्वाङ्गे। प्राचीनातानं प्राक्प्रत्यगुपर्यधोभावेन स्थिताः पट्टिकाः। तिरश्चीनानि दक्षिणोत्तरयोस्तिर्यक्पट्टिकाः। सोमांशवश्चन्द्रकिरणानि। उपस्तरणं शय्या। उद्गीथः सामभागविशेषः। उपश्रीरास्तरणोपर्यापादमस्तकं प्रक्षिप्यमाणं वस्त्रं श्रीर्वैदिकी प्राणस्तु लौकिकी श्रीरुक्ता। तस्मिंस्तादृशे पर्यङ्के। इत्थंविदात्तृशब्रह्माहमिति वेत्ता। पादेनैव न तु पादावधः स्थापयित्वा हस्तादिना। तं ब्रह्माऽऽह बालकमिव पिता। ब्रूयादुपासकः। ऋतुः कालात्मकः। आर्तवः कालसंबन्धी ब्रह्मणः स्तवकालत्वात्। लोकदृष्ट्याऽऽह-आकाशादीश्वराद्योनेर्जगदुपादानाद्भायाः स्वप्रकाशचिद्रूपात्। शास्त्रदृष्ट्याऽऽह—एतदित्यादि। एतस्य संवत्सरस्य तेजोभूतस्य सूर्यादिप्रवर्तकस्य भूतस्य व्यवहार्यस्य चेतनाचेतनप्रपञ्चस्य भूतस्य कारणस्य भूतस्य कार्यस्याऽऽत्माऽधिष्ठानम्। तथा च कार्यकारणात्मककालाधिष्ठानत्वादहं काल इत्युक्तमिति भावः। आत्माऽपि कस्तत्राऽऽह—त्वमात्मेति। देवेभ्य इन्द्रियाधिष्ठातृभ्योऽग्न्यादिदेवेभ्यः। प्राणेभ्य इन्द्रियेभ्यः। चकाराद्वाय्वाकाशाभ्यामन्यत्। देवाश्चेति। चकारार्थौ वाय्वाकाशौ। इदं सर्वं जगत्। तदा तत्काले पौंस्नानि पुंलिङ्गकानि। आप्नोषि साधयसि। मे सर्वात्मनो ब्रह्मणः। स्त्रीनामानि स्त्रीलिङ्गकानि शुक्लेति स्त्रीलिङ्गशब्दोच्चारणे वाचो व्यापाराधिक्यात्। मनसेति। शुक्र इत्यत्र प्राणस्य व्यापाराधिक्यं शुक्लेत्यत्र वाचः शुक्रमित्यत्र तु न तयोस्तत्। मनसस्तु स्त्रीपुंभिन्नस्वरूपक्लीबत्वप्रतिसंधातृत्वेन प्राधान्यमिति भावः। गन्धानाप्नोषि ज्ञेयतया साधयसि। प्राणेन घ्राणेन। प्रजातीः। पुत्रादिप्रजाः। इत्या गतीः। धियो धीवृत्तीः। विज्ञातव्यं ज्ञातत्वविशिष्टमज्ञातत्वविशिष्टं च विषयम्। कामान्धीरूपान्यान्मनःपरिणामान्सुखदुःखेच्छादीन्। प्रज्ञया साक्षिचिता। शरीरस्य सुखदुःखोत्पत्तावेव कारणत्वमुक्तं पादाद्यवच्छेदेन चन्दनादियोगस्य कारणत्वात्। सुखादेः साक्षिसाध्यत्वं व्यवहार्यत्वेन बोध्यम्। तमुपासकं ब्रह्माऽऽह। हि यस्मादसावापोऽमृतादिमयो ब्रह्मलोको मे भोग्यस्तस्मात्तव मदभिन्नत्वमुपासनया प्राप्तस्याप्ययं ब्रह्मलोको भोग्यः। उक्तमर्थं संक्षिप्य श्रुतिराह—येति। जितिर्जय उत्कर्षः। व्यष्टिर्व्याप्तिः। सर्वात्मकत्वं जयति व्यश्नुते प्राप्नोतीति। तस्मान्नदीतरणादेर्न विधून-

नादिहेतुत्वं 'तां स मनसैवाप्नोति तत्सुकृत' [ कौषी० १ । ४ ] इत्यादिपाठक्रमश्चार्थक्रमबाध्योऽग्निहोत्रं जुहोति यवागूं पचतीत्यादिवदिति भावः ॥ २८ ॥ ( १६ )

प्रासङ्गिकमुक्त्वा निर्गुणविद्याधीनकर्मविधूननबोधके 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' [ मु० ३ । १ । ३ ] इत्यत्र सगुणविद्यासंबन्धिदेवयानमार्ग उपसंहर्तव्यो ब्रह्मविद्यात्वेनैव तत्प्राप्तिहेतुत्वस्यानुमातुं शक्यत्वादिति प्रत्याह—

गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः॥ २९ ॥ इति ।

निर्गुणज्ञस्य देवयानगतेरर्थवत्त्वं निवृत्तिमत्त्वं हि यस्मादन्यथा निर्गुणज्ञस्य गतिमत्त्व उभयथा श्रुतियुक्तिभ्यां विरोधः । 'ब्रह्मविद्ब्रह्मैव भवति' 'न तस्य प्राणा उत्क्रामन्ति' [ बृ० ४ । ४ । ६ ] 'अत्रैव समवनीयन्ते' [ बृ० ३ । २ । ११ ] इत्यादिश्रुतिभ्योऽज्ञाननिवृत्तौ ज्ञानस्य निरपेक्षत्वमिति युक्तेः । पश्यः श्रवणमननादिमान्स्वप्रकाशं जगत्कर्तृत्वाद्युपलक्षितं ब्रह्म स्वाभिन्नं यदा पश्यति तदा विद्वान्परमं साम्यं ब्रह्मैक्यमुपैतीति श्रुत्यर्थः ॥ २९ ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥(१७) इति ।

तस्या गतेर्लक्षणस्य कल्पनस्य सगुणविद्यायामर्थोपलब्धेः पर्यङ्कारोहणादिफलदृष्टेर्निर्गुणविद्यायाश्च तदजनकत्वाल्लोकवन्निष्फला गतिर्न कल्प्यत इत्यतोऽपि पूर्वोक्तोऽर्थ उपपन्नः । सगुणविषयकत्वाद्युपाधिमत्त्वाच्चानुमानमिति भावः । इहानुमानादाशङ्का बादरंयधिकरणे तु ब्रह्मशब्दमुख्यत्वादिभिरित्यपौनरुक्त्यम् ॥ ३० ॥ ( १७ )

नन्वेवं सगुणविद्यास्वपि मधुविद्याशाण्डिल्यविद्याषोडशकलविद्यावैश्वानरविद्यासु देवयानगतिर्नोपसंहर्तव्या तदन्यास्वेव तच्छ्रवणेन प्रकरणस्य तत्रैव विनियोजकत्वात । न च 'य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्ति' [ बृ० ६ । २ । १५ ] इति वाक्येन पञ्चाग्निविद्यावतां सत्यशब्दितब्रह्मणोऽहंग्रहोपासकमात्रस्य च

देवयानगतिरुक्तेति वाच्यम् । उपास्यतावच्छेदकविशिष्टस्य ब्रह्मणो मिथ्यात्वेन सत्यवागुपासकस्यैव तत्र देवयानोक्तेरिति प्रत्याह—

अनियमः सर्वासामविरोधः शब्दा-
नुमानाभ्याम् ॥३१॥ (१८) इति ।

सर्वासामहंग्रहेण ब्रह्मोपासनानामेव देवयानगतिः फलं यतः शब्देनोक्तरूपेणानुमानेन 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते' [भ०गी०८।२६] इत्यन्तस्मृत्या च तादृशविद्यामात्रस्य तादृशगतिः फलमित्यनियमोऽविशेषो लभ्यते । अत एव प्रकरणेन विद्याविशेषे विनियोजकेनाविरोधो वाक्येन तस्य बाधात् । सत्यवचनं च न सत्यशब्दार्थस्तस्य विद्याप्रकरणेष्वप्रकृतत्वादमुख्यत्वापत्तेः । विशेषणस्य मिथ्यात्वेऽपि विशेष्यस्य ब्रह्मण एव मुख्यसत्यत्वात् । 'विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इति श्रुत्यन्तरैकवाक्यत्वाच्च । विद्यया सगुणब्रह्मणोऽहंग्रहेणोपासनया तद्ब्रह्मलोकस्थानं कामाः काम्यविषया, परा इतरलोकविषयेभ्य उत्कृष्टा दक्षिणा दक्षिणोपलक्षितकर्ममात्रयुक्ता यन्ति गच्छन्ति ॥ ३१ ॥ ( १८ ॥ )

विदुषामपि वसिष्ठादीनां संसारदर्शनान्न निर्गुणविद्या मोक्षजनिका 'निचाय्य तन्मृत्युमुखात्प्रमुच्यते' [ कठ० १ । ३ । १५ ] इत्यादि तु स्तावकम् । न च प्रारब्धफलकर्मणां प्रतिबन्धकत्वान्न तेषां मुक्तिरिति वाच्यम् । तेषामनारब्धफलकर्मतुल्यत्वानुमानात् । तथा च निर्गुणविद्यायामपि ब्रह्मलोकाद्यवच्छिन्नमैश्वर्यं फलं न च तद्देवयानगतिं विनेति तत्रापि सोपसंहर्तव्यैवेति प्रत्याह—

यावदधिकारमवस्थितिराधिकारि-
काणाम् ॥ ३२ ॥ (१९) इति ।

भोगविशेषजनकेश्वरोपासनमधिकारस्तं कृतवतां पुरुषाणां निर्गुणज्ञानामपि तादृशाधिकारस्य फलद्वारावस्थितिपर्यन्तमेवावस्थितिर्विदेहकैवल्याभावस्तस्यैव स्वजन्यभोगसाधनदेहेन्द्रियादिलयप्रतिबन्धकत्वात् । अत एव 'तत ऊर्ध्वमुदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' [ छा० ३ । ११ । १ ] इत्यादित्यपुरुषं प्रकृत्याधिकारावसाने कैवल्यश्रुतिः 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' [ छा०

६ । १४ । २ ] इति ज्ञाततत्त्वस्यापि प्रारब्धभोगश्रुतिश्च । मध्ये स्वीयब्रह्मस्वरूपे । तच्च प्रतिबन्धकं प्रारब्धं नानादेहप्रापकमपि—

> कार्तिक्यां कृत्तिकायोगे योऽर्चयेत्स्वामिकार्तिकम् ।
> सप्तजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ॥
> श्वशूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् ।
> चाण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति '

इत्यादिना तथोक्तेः । विद्याविद्ययोश्च नाश्यनाशकभावः प्रत्यक्षतः श्रुतितश्च सिद्धः । न च श्रुतिः स्ताविका, विधेयाभावादविद्यानिवृत्तिरूपदृष्टफलसंभवेऽदृष्टस्य तत्त्वज्ञानफलत्वासंभवाच्च । न च तत्त्वसाक्षात्कारेऽविद्यानिवृत्तौ वा प्रारब्धफलकर्मणः प्रतिबन्धकत्वं न तु विदेहकैवल्य इति कुतो न ब्रूष इति वाच्यम् । भुज्यमानफलानां हि कर्मणां न विधूननादिसंभवः । न हि यथोक्तफलमध्ये किंचित्कर्मणा जन्यते किंचिन्न जन्यत इति यथोक्तफलजनकत्वस्यैव क्लृप्तत्वात्तत्तत्खण्डफलं प्रति तत्तत्कर्मणामनन्तहेतुत्वकल्पने गौरवात् । एवं च वैजात्येन तादृशकर्मणां स्वस्वजन्यदेहेन्द्रियादिलय एव प्रतिबन्धकत्वं कल्प्यते न तु तत्कारणे विद्यायामविद्यानिवृत्तौ वा तयोर्विदुषाऽनुभूयमानत्वात्, प्रारब्धभोगानन्तरं ज्ञानोपायकल्पने गौरवात्, तावदेव चिरमितिश्रुतावेवकारेण प्रारब्धनाशान्यस्य कैवल्यार्थमनपेक्षोक्तेश्च । एवं च जीवन्मुक्तिर्निराबाधेति भावः ॥ ३२ ॥ ( १९ )

प्रारब्धकर्मण एव देहान्तरोत्पादकत्वसंभवान्नेतरस्य तथात्वमित्युक्तम् । एवं यथोक्तेन निषेधेनैवोपलक्षणतया ' यत्तदद्रेश्यमग्राह्यम् ' [ मु० १ । १ । ६ ] इत्यादिस्थले ब्रह्मप्रमितिसंभवात् ' अस्थूलम् ' [ बृ० ३ । ८ । ८ ] इत्यादिस्थलीययावन्निषेधानां नोपसंहारो निषेध्यानामानन्त्येनासंभवाच्चेति प्रत्याह—

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥ ( २० ) इति ।**

अक्षरस्य ब्रह्मणो धीर्येभ्यस्तादृशानां स्थूलादिनिषेधानामवरोधोऽन्यत्राप्युपसंहारः प्रपञ्चमात्रनिषेधेन ब्रह्मप्रतिपादनस्य सर्वशाखासु समानत्वात्तस्य निषेधस्य सर्वशाखासु समानत्वात्तस्य चाक्षरस्य प्रतिपाद्यतया सर्वत्र भावात् । यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु

चोदितासु पुरोडाशप्रदानमन्त्राणाम् 'अग्नेर्वैहौत्रं वेरध्वरम्' इत्येवमादीनामुद्गातृवेदोत्पन्नानामध्वर्युभिः संबन्धो भवति, अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य प्रधानतन्त्रत्वाच्चाङ्गानाम्। एवमिहाप्यक्षरतन्त्रत्वात्तत्तद्विशेषणानां यत्र क्वचिदुत्पन्नानामक्षरेण सर्वत्र संबन्धः। तदुक्तं प्रथमे काण्डे 'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' [ जै० सू० ३।३।८ ] इत्यत्र। 'आनन्दादयः प्रधानस्य' [ ब्र० सू० ३। ३।११ ] इत्यस्यैव प्रपञ्चोऽयम् ॥ ३३ ॥ ( २० )

प्रतिपाद्यस्याक्षरस्याभेदादुपसंहार उक्तः। 'द्वा सुपर्णा सयुजा सखाया' [ मु० ३।१।१ ] इत्यत्र 'ऋतं पिबन्तौ' [ कठ० ३।१ ] इत्यत्र च न प्रतिपाद्याभेदः। अन्त्ये द्वयोः पातृत्वस्याऽऽद्य एकस्यानशितृत्वस्योक्त्या भेदात्तथा च न विद्यैक्यमिति प्रत्याह—

इयदामननात् ॥ ३४ ॥ ( २१ ) इति।

विद्योत्पत्तिसमय एव मन्त्रद्वयेऽपि द्वाविति पिबन्ताविति च द्वित्वरूपेयत्तामननात्तदवगतविद्यैक्यानुसारेणान्यस्य नेयत्वात्प्रतिपादनप्रकारापेक्षया वाक्यार्थपर्यालोचनयाऽशनायाद्यतीतब्रह्मस्वरूपत्वेन प्रतिपाद्यजीवात्मकरूपैक्यस्यान्तरङ्गत्वाच्च विद्यैक्यमेवेति। कठवल्ल्यादिस्थेन 'अन्यत्र धर्मात्' [ कठ० १।२।१४ ] इत्यादिनोक्तधर्माद्यत्ययादीनामन्यत्राप्युपसंहारः ॥ ३४ ॥ ( २१ )

अर्थैक्याद्विद्यैक्यमुक्तम् 'अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानीति यो व्यानेन व्यानिति' [ बृ० ३।४।१ ] इत्यादि। 'अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्येति होवाच यदेव साक्षादपरोक्षात्' [ बृ० ३।५।१ ] इत्यादि समानं सर्वान्तर इत्यन्तं 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' [ बृ० ३।५।१ ] इत्यादिरूपयोः। चक्रस्यापत्यं चाक्रस्तस्यापत्यं चक्रस्य युवा चाक्रायणः। साक्षान्न तु घटादिवद्वृत्तिद्वारा। अपरोक्षादपरोक्षम्। कुषीतकस्यापत्यं कौषीतकस्तस्यापत्यं कुषीतकस्य युवा कौषीतकेयः। अशनाया बुभुक्षाऽत्येति स्वनिष्ठाभावप्रतियोगिनं करोतीत्याद्यर्थकयोर्वाजसनेयस्थयोरुषस्तकहोलब्राह्मणयोस्तु नार्थैक्यमभ्यासवैयर्थ्यापत्तेः। एवं

घाऽऽदौ प्राणादिव्यतिरिक्तस्य जीवस्योक्तेस्तस्योपास्यत्वं पश्चाच्चाशनायाद्यतीतपरमात्मोक्तेस्तस्य ज्ञेयत्वमिति प्रत्याह—

अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥ इति ।

नैवं वाच्यम् । यत उभयोः प्रतिपाद्यत्वे सर्वान्तरत्वमुच्यमानमुभयोरनुपपन्नमिति स्वात्मनो जीवस्यान्तरा सर्वान्तरत्वं भूतग्रामस्यैवौपचारिकं स्यात् । तस्मान्मुख्यत्वानुरोधाद्वेदैवेत्येकस्यैवान्तरत्वश्रुतेः प्रकृतप्रश्नप्रतिवचनयोरज्ञातब्रह्मपरत्वेनोक्तोपास्यत्वविध्यसंभवात् ॥ ३५ ॥

अन्यथा भेदानुपपत्तेरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥ ( २२ ) इति ।

अन्यथा भेदं विनाऽभ्यासरूपस्य भेदस्यानुपपत्तेरभ्यासाद्भेद इति चेन्न 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] इत्यादाविव वस्तुस्वरूपज्ञानेऽभ्यासस्यानुगुण्याच्छतकृत्वोऽपि पठनं कर्तव्यमिति न्यायात्प्राणाद्यतिरिक्तत्वस्य पूर्वमशनायाद्यतीतत्वस्य पश्चादुक्तिरिति प्रकारभेदाश्चेति भावः ॥ ३६ ॥ ( २२ )

यथाऽभ्यास आदरार्थ उक्तस्तथा 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यैतरेयकवाक्ये 'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' इति जाबालवाक्ये च व्यतीहारोऽप्यादरार्थोऽस्तु । तथा च जीव एवेश्वरदृष्टिर्विधीयते न त्वीश्वरे जीवदृष्टिरुत्कृष्टे निकृष्टदृष्टिर्न फलवतीति लौकिकन्यायादिति प्रत्याह—

व्यतीहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥ ( २३ ) इति ।

व्यतीहारेण दृष्टिद्वयमेव विधीयते । हि यस्मात्त्वमहमस्म्यहं च त्वमसीति विशिंषन्ति व्यतिहाररूपेण विशेषेणोच्चारयन्ति समाम्नातारः । अन्यथा तस्य वैयर्थ्यात् । इतरत्र ब्रह्मणः सगुणत्वेनोपासने यथा लौकिकन्यायस्य नावतारो वाचनिकत्वात्तथा प्रकृतेऽपीत्यर्थः ॥३७॥ (२३)

यथा व्यतीहारेण भेदनिर्देशाद्दृष्टिभेद उक्तस्तथा 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान्' [ बृ० ५ । ४ । १ ] इति सत्यविद्यां प्रकृत्य 'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मि-

न्मण्डले पुरुषः [ बृ० ५ । ५ । २ ] 'तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद' [बृ०५।५।३ ] 'योऽयं दक्षिणेऽक्षन्पुरुषः' 'तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद' [ बृ० ५। ५ । ४ ] इत्यत्रापि फलभेदनिर्देशाद्विद्याभेदोऽस्त्विति प्रत्याह—

सैव हि सत्यादयः ॥ ३८ ॥ ( २४ ) इति ।

'स यः' [ बृ० ५ । ४ । १ ] इत्यादिना सत्येत्यक्षरत्रयविशिष्टोपासना योक्ता सैवाऽऽदित्याक्ष्यधिकरणकाहरहंगुणविशिष्टा विधीयते न तु भिन्ना । हि यस्मादेकस्यैव ब्रह्मण उपास्यस्य 'तद्यत्तत्सत्यमसौ सः' [ बृ० ५ । ५ । २ ] इत्यादिना सत्यादयो विशेषणतयाऽऽम्नायन्ते । यक्षं पूज्यं प्रथमजं हिरण्यगर्भरूपम् । तथा च प्रधानफलेन पूर्वोक्तेनैवाङ्गानां फलवत्त्वादहस्यनामोपासनरूपाङ्गसंबन्धिपाप्मात्ययफलोक्तिः स्तुतिपरा । यदि चैकमितिपदाभावात्सत्रन्यायेनार्थवादिकं फलं कल्प्यते तथाऽप्यविशेषादार्थवादिकसर्वफलविशिष्टमेकमेवोपासनमविरुद्धमिति भावः ॥ ३८ ॥ ( २४ )

रूपाभेदाद्विद्यैक्येनोपसंहार उक्तः । 'यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' [ छा० ८ । १ । १ ] इत्यादि 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' [ छा० ८ । १ । ५ ] इत्यन्ते छान्दोग्ये 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते सर्वस्य वशी' [ बृ० ४ । ४ । २२ ] इत्यादिवाजसनेयके च रूपभेदेन विद्याभेदान्नोपसंहारः । तथा च वाजसनेयक आकाशाश्रितस्य निर्गुणस्य ज्ञेयत्वम् 'असङ्गो ह्ययमात्मा' [ बृ० ४ । ३ । १५ ] इत्यस्य तत्रोक्तत्वाच्छान्दोग्ये तु दहराकाशस्योपास्यत्वमिति प्रत्याह—

कामादीतरत्र तत्र चाऽऽयतनादिभ्यः ॥ ३९ ॥ ( २५ ) इति ।

कामः सत्यकामत्वमादिना सत्यसंकल्पत्वादि । तथा च च्छान्दोग्योक्तं सत्यकामादीतरत्रोपसंहार्यं तत्र च्छान्दोग्येऽपि वाजसनेयोक्तं

वशित्वाद्युपसंहार्थं हृदयायतनादिभ्य उभयत्राऽऽम्नातेभ्यः । यद्यपि वाजसनेये निर्गुणं वेद्यमन्यत्र च सगुणोपासनविधिस्तथाऽपि वशित्वादेर्वेद्यकोट्यन्तर्भावासंभवात्स्तुतिमात्रेणाकृतार्थत्वादुपास्यत्वसाकाङ्क्षत्वादुपासनान्वयः 'य चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम्' इत्यनेन सर्वाधारत्वस्योपास्यतया दहरविद्यायामुक्तत्वात् । किं किं ब्रह्मण्यस्तीत्याकाङ्क्षायामुपनिषदुक्तवशित्वादिकमाकाङ्क्षितमेव । न चैवं सकलसगुणोपासनागतगुणानामुपसंहारापत्त्या दहरोपासनाया अशक्यानुष्ठानत्वापत्तिरिति वाच्यम् । हृदयायतनत्वनिर्देशस्य प्रत्यभिज्ञापकस्य नियामकत्वादिति न्यायनिर्णयाद्यनुयायिनः । कल्पतरौ तु वाजसनेयकेऽपि वशित्वादेरुपास्यत्वेनानुक्तत्वादुपास्यत्वेन दहरविद्यायां नोपसंहारः किंतु स्तुत्यर्थत्वेन । अत एव भाष्य उक्तं विभूतिप्रदर्शनाय गुणोपसंहारः सूत्रितो नोपासनायेति । सर्वाधारत्वं तु सर्वाधारत्वेनैव सामान्यत उपास्यं न तु विशेषत इत्युक्तम् । निर्गुणेन चाऽऽयतनादिसंनिहितसत्यकामत्वादीनां स्तुतिप्रकर्षार्थमाकाङ्क्षितत्वादन्वय इति भावः ॥ ३९ ॥ ( २५ )

यथोपासनाभावेऽपि स्तुत्यर्थं गुणोपसंहारालोपस्तथा वैश्वानरविद्यां प्रकृत्योक्ते 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा' [ छा० ५ । १९ । १ ] इत्यादि 'एवं विद्वानग्निहोत्रं जुहोति' [ छा० ५ । २४ । २ ] इत्यन्ते 'पूर्वोऽतिथिभ्योऽश्नीयात्' इत्यनेनातिथिभोजनोत्तरानियतभोजनकालापूर्वत्वेन प्राणाहुतिरूपाशनोक्त्या स्तुत्युपपत्त्यर्थमग्निहोत्रशब्दितप्राणाहुतीनां भोजनाभावेऽप्यलोपोऽस्त्वित्याशङ्कते—

आदरादलोपः ॥ ४० ॥ इति ।

भोजनभक्ते सति तेनैव प्राणाहुतिरग्निहोत्रशब्देन साध्यसादृश्यार्थकेनाग्निहोत्रधर्मप्राप्तावपि तद्यद्भक्तमित्यादिनाऽपवादाद्भोजनभक्ताभावे त्वपवादासंभवादौत्सर्गिकेनाग्निहोत्रीयपयआदिना प्राणाहुतीनामलोप उक्तरीत्या स्तुतिरूपादरानुरोधात् ॥ ४० ॥

---

१ क. °नाया न्याय्यत्वाचा° ।

प्रत्याह—

उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥ ( २६ ॥ ) इति ।

भोजनभक्त उपस्थित एव प्राणाहुतिरनुपस्थिते तु तस्या लोप एव । तस्य तादृशार्थस्य बोधकात्तद्यद्भक्तमित्यतो वचनात्तद्वचनेन भोजनार्थागतभक्तोद्देशेनाऽऽहुतिविधानादुद्देश्याभाव उपादेयाप्रवृत्तेः । अत एवाऽऽमिक्षार्थदध्यानयनाधीनवाजिनद्रव्याभावे वाजिनकर्माप्रवृत्तिः 'मासमग्निहोत्रं जुह्वति' इत्यादिविधिगतस्याग्निहोत्रशब्दस्य प्रसिद्धधर्मातिदेशकत्वेऽप्यर्थवादगतस्य तस्य स्तावकत्वेनाप्युपपत्तेरतथात्वात् । अत एव पूर्वोऽतिथिभ्योऽश्नीयादित्यपि भोजनभक्तोपस्थितावेव प्रवर्तेत इति भावः । विद्यासंबन्ध्याहुतिविषयत्वात्परम्परया पादसंगतिः ॥ ४१ ॥ ( २६ )

यथा भोजनभक्ते सति प्राणाहुत्यावश्यकत्वं तथा 'ओमित्येतदक्षरमुद्गीथमुपासीत' [ छा० १ । १ । १ ] इत्यादीनि कर्माङ्गोद्गीथाद्याश्रितोपासनान्याश्रये सत्यावश्यकानि क्रतुप्रकरणानाम्नातत्वे सति क्रत्वङ्गाश्रितत्वात्पर्णमयीत्वादिवद्गोदोहनादेर्हिरण्यभरणादेश्च व्यावृत्तये वृलद्वयमिति प्रत्याह—

तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥ ( २७ ) इति ।

तेषां निर्धारणानामुपासनानामाश्रये सत्यावश्यकत्वरूपो नियमो नास्ति । हि यस्मात् 'तेनोभौ कुरुतः' 'नाना तु विद्या चाविद्या च यदेव विद्यया करोति' 'तदेव वीर्यवत्तरं भवति' [ छा० १ । १ । १० ] तथा 'तां चेदविद्वानुद्गास्यसि' [ छा० १ । १० । १० ] इत्यादिना विद्यारहितानामपि साङ्गकर्मणि प्रवृत्तिलाभेन तस्यानियमस्य दृष्टेः पृथग्विद्याशून्यकर्मफलव्यावृत्तमप्रतिबन्धः फलोत्कर्षरूपं फलं विद्याया इति गोदोहनवदाश्रयानियतमिति भावः ॥ ४२ ॥ ( २७ )

फलभेदात्कर्माङ्गानां तदाश्रितोपासनानां च प्रयोगो भेदितः । संवर्गविद्यायां 'वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति'

१ प्र. 'वृत्तिः । अ' ।

[ छा० ४ । ३ । १ ] 'यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्ते इत्यधिदैवतम्' [ छा० ४ । ३ । २ ] 'अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणᳪ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्ते' [ छा० ४। ३ । ३ ] इत्यादि 'अन्नादो भवति य एवं वेद' [ छा० ४ । ३ । ८ ] इति वाक्ये संवृणोत्यग्न्यादीन्स्वस्मिँल्लीनान्करोतीति वायुः संवर्गो वागादींस्तथा करोतीति प्राणः संवर्ग इत्याद्यर्थके यदुपासनमुक्तं तत्र वायुप्राणाप्तेरेव फलस्योक्तेर्वायुप्राणयोश्चैक्येन फलाभेदात्प्रयोगो न भिद्यतामिति प्रत्याह—

प्रदानवदेव तदुक्तम् ॥ ४३ ॥ ( २८ ) इति ।

यथेतरेतरानन्तर्भूतसायंप्रातरवच्छेदेनैकस्मिन्नप्यग्निहोत्रे प्रयोगभेदस्तथैकस्मिन्नप्युपासने परस्परानन्तर्भूताध्यात्माधिदैवसंवर्गविशेषसंबन्धात्प्रयोगभेदः । प्रयोगाभेदव्यवच्छेद एवकारार्थः । यथा त्रिपुरोडाशिन्यामिष्टौ 'इन्द्राय राज्ञ इन्द्रायाधिराजायेन्द्राय स्वराज्ञे' इत्यत्र राजादिरूपभेदात्पृथक्प्रदानं तद्वत्प्राणवाय्वोरप्याध्येयांशभेदादुपासनाप्रयोगभेदः । तदुक्तं संकर्षे पूर्वतन्त्रे 'नाना वा देवता पृथग्ज्ञानात्' इति । 'सर्वेषामभिगमयन्नवद्यति' इति श्रुतेरेकत्यागस्य प्राप्तस्य वाशब्दाद्व्यवच्छेदः । राजादिगुणानां पृथग्ज्ञानादिति तदर्थः ॥ ४३ ॥ ( २८ )

'नैव मन एवाऽऽसीत्' इति प्रक्रम्य 'षट्त्रिंशत्सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्मनोमयान्मनश्चितः' इति । तथा 'वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचितः' इति वाजसनेयाग्निरहस्यवाक्यम् । षट्त्रिंशत्सहस्राणि मनोमयान्मनोवृत्तिरूपान् । अत एव मनश्चितो मनसा चीयमानानग्नींश्चयनरूपेण चिन्त्यमानानर्कानर्चनीयानात्मनः स्वस्य मनोऽपश्यत्स्वं मन एव । वाक्चितो वागिन्द्रियवृत्तिरूपान्वागिन्द्रियचीयमानत्वाद्वाक्चितः । एवं श्रोत्रचितः प्राणं घ्राणमिन्द्रियाधिकारात् । कर्म वागिन्द्रियान्यकर्मेन्द्रियं तेन चीयमानास्तद्वृत्तयोऽग्निचितो जाठराग्निना चीयमानास्तद्व्यापारा अग्नयः । अत्र मनोवृत्तय एकाहोरात्रगता एकं चयनमिति चिन्त्यमेवं वागादिवृत्तय इत्याद्यर्थकम् । तथा च शतसंवत्सरात्मकपुरुषायुषमध्ये यानि षट्त्रिंशत्सहस्राण्यहोरात्राणि स्युस्तेषामेकैकावच्छिन्नमनोवृत्तिविशिष्टकालं संपाद्य ताभिश्ची-

यमानोऽग्निश्चयनरूपः संपाद्यते । एवं वागादिवृत्तिषु कर्माग्निवृत्तिषु तेऽग्नय इष्टकाचितेन बाह्याग्निना विकल्प्यमानाः क्रत्वर्था इति प्रत्याह—

लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥ इति ।

प्रयोगभेदाद्वायुप्राणयोः पृथग्ध्येयत्वमुक्तमत्र तु क्रत्वर्थत्वान्न प्रयोगभेद इति संगतिः । तदुक्ताग्निसंपादनं बलीयः स्वतन्त्रमेव न तु क्रत्वर्थतया गुणीभूतम् । 'तान्हैतानेवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपते ' इत्यादिना तान्मनोमयानग्नीनेवमुक्तप्रकारेण विदे चिन्तयते स्वपते स्वापं कुर्वतेऽपि सर्वाणि भूतानि प्राणिनश्चिन्वन्ति भावनामये चयने विघ्नं न कुर्वन्तीत्यर्थकेन कर्म विनाऽपि तत्सद्भावादिभूयोलिङ्गोक्तेः । कर्मप्रकरणादस्वातन्त्र्यं नाऽऽशङ्क्यं यतस्तल्लिङ्गमपि प्रकरणाद्बलीयः ॥ ४४ ॥

शङ्कते—

पूर्वविकल्पः प्रकरणात्स्यात्क्रिया मानसवत् ॥ ४५ ॥ इति ।

स्तुत्यर्थतयाऽप्युपपन्नं लिङ्गं न बलीयोऽतः प्रकरणात्पूर्वस्यासंपादिताग्नेः संपादिताग्निना विकल्पः । यथा दशरात्रस्य दशमेऽहन्यविवाक्ये पृथिव्या पात्रेण समुद्रस्य सोमस्य प्रजापतये देवतायै गृह्यमाणस्य ग्रहणासादनहवनाहरणोपह्वानभक्षणानां मानसानामेवाऽऽम्नानान्मानस एव ग्रहकल्पः क्रियाप्रकरणात्क्रियाशेष एवमयमप्यग्निकल्प इति । ग्रहणं सोमरसस्य पात्र उपादानमासादनं स्थापनं हवनानन्तरं हुतशेषस्योपादानमाहरणं भक्षणार्थमृत्विजां परस्परमनुज्ञाग्रहणमुपह्वानम् ॥ ४५ ॥

अतिदेशाच्च ॥ ४६ ॥ इति ।

' षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान्यावानसौ पूर्वः ' इत्यनेन पूर्वशब्दितबाह्याग्निसाम्यनिर्देशादपि संपादिताग्नेः कर्माङ्गत्वम् ॥ ४६ ॥

प्रत्याह—

विद्यैव तु निर्धारणात् ॥ ४७ ॥ इति ।

प्रकृताग्निसंपादनं विद्या । तुशब्दात्कर्मानङ्गम् । लिङ्गबलीयस्त्वाभावेऽपि ' ते हैते विद्याचित एव ' इत्येवकारश्रुत्या निर्धारणात्कर्माङ्गत्वव्यवच्छेदबोधनात् । न च बाह्यसाधनस्य व्यवच्छेदस्तदर्थो न तु कर्माङ्गत्वस्येति वाच्यम् । विद्यात्वादेव बाह्यसाधनस्य व्यवच्छिन्नत्वेन

१ ग. भं कु ।

कर्माङ्गत्वव्यवच्छेदस्यैव शब्दार्थत्वात् ॥ ४७ ॥

दर्शनाच्च ॥ ४८ ॥ इति ।

'विद्यया हैवैत एवंविदश्चिता भवन्ति' इति पुरुषसंबन्धेन पुरुषार्थ-त्वप्रतिपादकवाक्यस्य दर्शनादपि स्वातन्त्र्यम् ॥ ४८ ॥

ननूक्तश्रुतिवाक्ययोरर्थवादस्थत्वेन प्रमाणान्तरसिद्धानुवादकत्वमात्र-मन्यथा लिङ्गमेव साधकं कुतो नोक्तं तत्राऽऽह—

श्रुत्यादिवलीयस्त्वाच्च न बाधः ॥ ४९ ॥ इति ।

प्रकृते श्रुतिलिङ्गवाक्यसंबन्ध्यर्थवादानामपूर्वार्थगोचरतया विधि-कल्पकत्वाद्यथोपलभ्यमानार्थमादायैव विधिः कल्प्यतेऽनुवादकत्वं तु श्रुतविध्येकवाक्यतापन्नार्थवादानाम् । अतः श्रुत्यादीनां बलीयस्त्वात्प्र-करणकृतः स्वातन्त्र्यबाधो नास्त्येवेत्यर्थः ॥ ४९ ॥

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्व-
वद्दृष्टश्च तदुक्तम् ॥ ५० ॥ इति ।

यत्किंच यज्ञीयं कर्म मनसैव तेषु तन्मनोमयेषु मनश्चित्सु' इत्यन्ते-नानुबन्धेन प्रबन्धेन मनोमात्रव्यापाररूपाधानाद्यङ्गकलापबोधकेनाऽऽ-दिना विकल्पप्रयुक्ताष्टदोषेभ्यश्च स्वातन्त्र्यम् । प्रज्ञान्तरस्य शाण्डिल्या-दिविद्यायाः पृथक्त्वं स्वातन्त्र्यमिव दृष्टश्च प्रकरणबाधः स्थानान्तरेण । तदुक्तं प्रथमे काण्डे 'क्रत्वर्थायामिति चेन्न वर्णसंयोगात्' जै० सू० ११ । ४ । ३ । ११ ] इति राजसूयस्य क्रतोः प्रकरणे 'आग्नेयोऽष्टाक-पालो' 'हिरण्यं दक्षिणा' इत्यादिनोक्ताविष्टिस्तदर्थेति चेन्न 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा तमभि-घारयेत् । यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रम्' इति त्रिभिर्वर्णैः संबन्धाद्राजसूयस्य तु 'राजा स्वाराज्यकामो राजसूयेन यजेत' इत्य-नेन राजन्येनैव संबन्धादिति तदर्थः ॥ ५० ॥

नन्वेवमेकप्रकरणत्वं तेषामेकैक एव तावानित्यतिदेशश्चानर्थकः स्यात्1ानर्थक्ये च विपरीते बलाबले तत्राऽऽह—

न सामान्यादप्युपलब्धेर्मृत्युवन्न हि
लोकापत्तिः ॥ ५१ ॥ इति ।

प्रकरणातिदेशकृतसामान्यमादाय नैवं वाच्यं मुख्याग्निसंनिधिद्वारा तयोः संपादनसौकर्यरूपप्रयोजनवत्त्वोपलब्धेः । न चातिदेशेन कथंचि-

१ क. °पाध्याना°।

त्साद्दश्यमात्रमुद्देश्यसाधकं यथा 'एष एव मृत्युर्य एष एतस्मिन्मण्डले' इति सूर्ये 'अग्निर्वै मृत्युः' [ बृ० ३ । २ । १० ] इत्यग्नौ च मृत्युशब्द ऐक्यं न साधयति यथा वा 'असौ वै लोकोऽग्निः' [ छा० ५।४।१ ] इत्यनेन लोकस्य नाग्नित्वापत्तिः ॥ ५१ ॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्व-
नुबन्धः ॥ ५२ ॥ ( २९ ) इति ।

'विद्यया तदारोहन्ति यत्र कामाः परागताः' इत्यादिना परेणोत्तरेण संदर्भेणोपकृतशब्दस्य ताद्विध्यं स्वतन्त्रविद्याविधायकत्वं तत्सहपाठान्मानसचयनमपि स्वतन्त्रम् । तदेवं साधकभूयस्त्वात्पुरुषेणैव प्रकृतविद्याया अनुबन्धः संबन्धो न तु कर्माङ्गत्वमिति ॥ ५२ ॥ ( २९ )

विद्यायाः पुरुषार्थत्वमुक्तं तच्चाऽऽत्मनो देहान्यत्व एवेति प्रसङ्गात्तत्साधयितुं लोकायतिकमतमाशङ्कते—

एक आत्मनः शरीरे भावात् ॥ ५३ ॥ इति ।

एके लोकायतिका आत्मनो देहान्यस्यासत्त्वमाहुः । अहं स्थूलः कृशो मनुष्य इत्यादिप्रत्ययैः शरीर एवाऽऽत्मभावसंभवाद्भूतानां प्रत्येकं चैतन्याभावेऽपि देहाकारपरिणतानां तत्संभवान्मदिराकारपरिणतानामन्नभागानां मादकशक्तिसंभववत् ॥ ५३ ॥

प्रत्याह—

व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ५४ ॥ (३०) इति ।

न तु नैवेवं वाच्यं यतो मृतदेहस्योपलब्धिरूपो धर्मस्त्वयाऽपि नाङ्गीक्रियत इति तत्र तस्याव्यतिरेकोऽभावः सिद्धस्तथा जीवत्यपि देह आत्मत्वस्य व्यतिरेकः स्वप्नसुषुप्त्योरात्मनो भावे भासमानत्वेऽपि देहस्याभावित्वादभासमानत्वात् । एवं चाहं मनुष्य इत्यादेर्भ्रमत्वमगत्येति भावः ॥ ५४ ॥ ( ३० )

प्रासङ्गिकाधिकरणपूर्वं प्रकरणबाधकत्वं श्रुत्यादीनामुक्तं प्रतिशाखं स्वरादिभेदभिन्नेषूद्गीथादिरूपेषु कर्माङ्गेषु प्राणाद्युपासनानि यान्युक्तानि 'ओमित्येतदक्षरमुद्गीथमुपासीत' [ छा० १ । १ । १ ] इत्यादिभिस्त-

त्रैकशाखाविहितोपासनाया न शाखान्तरोद्गीथादिषु प्राप्तिरुद्गीथादि-सामान्यश्रुतेराकाङ्क्षितविशेषसमर्पकप्रकरणाबाधकत्वादिति प्रत्याह—

अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५५ ॥ इति ।

प्रतिवेदमङ्गावबद्धा या उक्तोपासनास्ता न स्वस्वशाखास्वेव किंतु सर्वशाखासु । अन्यथोद्गीथादिसामान्यश्रुतेर्विशेषपरतया पीडापत्तेरिति भावः ॥ ५५ ॥

मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥ ( ३१ ) इति ।

एवमपि प्रकरणानियमकृतविरोधो नास्त्येव यथा कुडरुरसीति मन्त्रो येषां न पठितस्तेषामपि तेनैवाश्माद्दानम् । आदिना यथा येषां समिदादयः प्रयाजा नाऽऽम्नातास्तेषामपि तेषु गुणविधिराम्नातः 'ऋतवो वै प्रयाजाः समानत्र होतव्याः' इति । समानत्रैकस्मिन्देशे ॥५६॥ (३१)

यथा श्रुतिबलात्सर्वसाधारण्यमुक्तं तथा '*औपमन्यव कं त्वमात्मान-मुपास्स इति दिवमेव भगवो राजन्निति होवाच एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से*' [ *छा० ५ । १२ । १* ] इत्यादि । '*तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ*' [ छा० ५ । १८ । २ ] इत्यादिसंदर्भेण च्छान्दोग्ये द्युलोकादिप्रत्येकरू-पव्यस्तस्य द्युलोकसूर्यादिसमुदायस्य समस्तस्य चोपास्यत्वं श्रुतिबला-दिति प्रत्याह—

भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ (३२) इति ।

भूम्नः समस्तस्यैवोपासनं विधीयते तस्य ज्यायस्त्वमुत्कर्ष एव व्यस्तोपासनस्य तत्फलस्य चोक्त्या लभ्यते न तु व्यस्तोपासने विधि-वाक्यभेदापत्तेः । यथा '*वैश्वानरं द्वादशकपालं निर्वपेत्*' इत्युक्तवैश्वा-नरेष्टिरूपक्रतोरुत्कर्षोऽष्टाकपालाद्येकादशकपालान्तयागानां तत्फलानां चोक्त्या लभ्यते न तु तेषां विधिर्व्यस्तोपासननिन्दयोपक्रमे कैकेयराजं प्रति समस्तोपासनजिज्ञासया गमनोक्त्या समस्तोपास्त्युपसंहारेण च तथैव प्रकृतसंदर्भो दर्शयति हि ॥ ५७ ॥ ( ३२ )

गायत्रीशाण्डिल्यषोडशकलोपकोसलवैश्वानरदहरसत्यब्रह्मादिवि-

द्यानां भेदं सिद्धं मत्वा गुणोपसंहारादि चिन्तितमिदानीं तु तं साधयितुमर्चिरादिमार्गाप्तिफलस्योपास्यरूपस्य ब्रह्मण उपासनावच्छिन्नप्रयत्नचोदनाया ब्रह्मविद्यासमाख्यायाश्चैक्यात्तासामेकत्वात्समुच्चित्यैकप्रयोगत्वमिति प्रत्याह—

नाना शब्दादिभेदात् ॥ ५८ ॥ ( ३३ ) इति ।

उक्तविद्या नाना पृथक्प्रयोगा एव । 'पूर्णामप्रवर्तिनीं श्रियं लभेत' [ छा० ३ । १२ । ९ ] 'एतमितः प्रेत्याभिसंभविताऽस्मि' [ छा० ३। १४ । ४ ] 'ज्योतिष्मतो ह लोकाञ्जयति' [ छा० ४ । ७ । ४ ] 'एवंविदि पापं कर्म न श्लिष्यते' [ छा० ४ । १४ । ३ ] 'सर्वेष्वन्नमत्ति' सर्वेषु लोकेषु कामचारो भवति' [ छा० ७ । २५ । २ ] 'जयतीमाँल्लोकान्' [ बृ० ५ । ४ । १ ] इत्यवान्तरफलस्य तत्तद्गुणकलापविशिष्टोपास्यरूपस्य तद्भेदभिन्नोपासनानुबन्धभेदेन प्रयत्नचोदनाया गायत्रीविद्याशाण्डिल्यविद्यादिनाम्नां कौण्डपाय्ययनगताग्निहोत्रादिवत्प्रकरणानां च भेदात्समुच्चयस्याशक्यत्वाच्च भेदादिति । प्रवर्तितुं चलितुं शीलं यस्याः सा प्रवर्तिनी तदन्यामचलाम् । एतं मनोमयत्वादिविशिष्टमुपास्यमितो लोकाल्लोकान्तरे प्रेत्याभिसंभविता गन्ताऽस्मि । फलभेदश्रुतावपि यथा पूर्वं तथाऽत्राप्युपासनमेकं स्यादिति संगतिः ॥ ५८ ॥ ( ३३ )

उपासनानां भेदे मानमुक्तं विकल्पसमुच्चयनियमयोस्तु न मानमतः फलभूमार्थं कदाचित्समुच्चयोऽपि स्यादिति प्रत्याह—

विकल्पोऽविशिष्टफलत्वात् ॥ ५९ ॥ (३४) इति ।

विकल्पनियम एव 'यस्य स्यादद्धा न विचिकित्साऽस्ति' [ छा० ३ । १४ । ४ ] देवो भूत्वा देवानप्येति' [ बृ० ४ । १ । २ ] इत्यादिना । अद्धा साक्षात्कृतं यस्योपास्यं स्यात् । उपासनाफले विचिकित्सा संदेहश्च यस्य नास्ति तस्योपास्यप्राप्तिर्भवति । देव उपास्यदेवः सोऽहमित्युपासनाधीनसाक्षात्कारेण भूत्वा देवानुपास्यदेवानप्येति प्राप्नोतीत्यर्थकेनोक्तस्य विद्याफलस्य साक्षात्कारस्य सर्व विद्यास्वविशिष्टत्वात्समुच्चये च चित्तैकाग्र्याभावेन फलस्यैवालाभेन तद्भूम्नो दूरनिरस्तत्वादेकोपासनायामेव चित्तैकाग्र्यम् । अत एव 'सदा तद्भावभावितः' [ भ० गी० ८ । ६ ] इति स्मृतिरपीति भावः ॥ ५९ ॥ ( ३४ )

अहंग्रहोपासनासु विकल्पनियम उक्तस्तद्वत्प्रतीकोपासनास्वपि स्यादुपासनात्वेन तथाऽनुमानसंभवादिति प्रत्याह—

काम्यास्तु यथाकामं समुच्चीयेरन्न वा
पूर्वहेत्वभावात् ॥ ६० ॥(३५) इति ।

'मनो ब्रह्म' [छा० ३ । १८ । १] इत्याद्यभ्युदयार्थाः प्रतीकोपसनाः समुच्चीयेरन्न वेति यथाकाममेव न तु नियमेन विकल्पेरंस्तासु साक्षात्कारूपैकफलवत्त्वाभावेन पूर्वोक्तहेतोर्युक्तेरभावात् ॥ ६० ॥ ( ३५ )

प्रतीकोपास्तीनां भिन्नफलत्वाद्याथाकाम्यमुक्तं तत्र कर्माङ्गोद्गीथाद्याश्रितोपास्तीनां समुच्चयनियमेन भिन्नफलत्वस्य याथाकाम्यव्यभिचारित्वात्तासु समुच्चयानियमेऽङ्गाश्रितत्वनियमो न स्यात्तस्मादङ्गाश्रितत्वनियमायाङ्गग्राहिणा प्रयोगवचनेन तासामपि समुच्चितानां ग्रहणमिति शङ्कते—

अङ्गेषु यथाश्रयभावः ॥ ६१ ॥ इति ।

उद्गीथाद्यङ्गाश्रितोपासनेषु यथाऽऽश्रयाः स्तोत्रादयः संभूय भवन्त्येवं भावः ॥ ६१ ॥

नन्वाश्रितत्वमेवासिद्धं तत्राऽऽह—

शिष्टेश्च ॥ ६२ ॥ इति ।

आश्रित्यैव तेषामुपासनानां शासनात् ॥ ६२ ॥

तावताऽपि कथं समुच्चयनियमस्तत्राऽऽह—

समाहारात् ॥ ६३ ॥ इति ।

उक्तरीत्या प्रयोगवचनेन समाहारात्सर्वेषामाश्रितोपासनानां ग्रहणात् ॥ ६३ ॥

गुणसाधारण्यश्रुतेश्च ॥ ६४ ॥ इति ।

गुणानामङ्गीभूतानामाश्रयाणां सर्वप्रयोगसाधारण्यश्रुतेश्च ॥ ६४ ॥

प्रत्याह—

न वा तत्सहभावाश्रुतेः ॥ ६५ ॥ इति ।

एवं नैव वाच्यं तेषामुपासनानां सहभावस्य समुच्चयस्याश्रुतेः । तदाश्रितत्वं ह्येकप्रयोगतत्त्वसंबन्धेन तद्व्याप्यत्वं न तु तद्व्यापकत्वमतः प्रयोगवचनेनाप्यग्रहणान्न समुच्चय इति भावः ॥ ६५ ॥

---

१ ख. 'हेतौ युक्ते°' ।

दर्शनाच्च ॥ ६६ ॥ (३६) इति ।

काम्यानां स्वप्रयोजककामनाया अनित्यत्वेनानित्यत्वदर्शनाच्च नाङ्गाश्रितोपासनानां समुच्चयः किंतु याथाकाम्यमिति ॥ ६६ ॥ ( ३६ )

इति तृतीयाध्यायस्य तृतीयपादः ॥ ३ ॥

---

अथ तृतीयाध्यायस्य चतुर्थः पादः ।

---

चतुर्थेन सगुणनिर्गुणविद्यानां क्रतूपकाराद्भिन्ने फले साधनत्वनिर्णयात्फलभेदे साधित एव तृतीये तासां भेदाभेदौ सिध्यत इति हेतुहेतुमद्भावः पादयोः संगतिः ।

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥१॥ इति ।

अतो निर्गुणविद्यातः पुरुषार्थो मोक्षो जायते 'तरति शोकमात्मवित्' [ छा० ७ । १ । ३ ] 'तमेव विदित्वाऽति मृत्युमेति' श्वे० ३। ८ ] 'ब्रह्म वेद ब्रह्मैव भवति' [ मु० ३ । २ । ९ ] इत्यादिशब्दादिति बादरायणो वक्ति ॥ १ ॥

शेषत्वात्पुरुषार्थवादो यथाऽन्ये-
ष्विति जैमिनिः॥ २ ॥ इति ।

देहातिरिक्तात्मज्ञानस्य लौकिककर्मानुपयोगित्वादव्यभिचरितक्रतुसंबन्धत्वेनोपस्थापितक्रतुभिः स्वविषयकर्तृद्वारा संबन्धित्वमतः क्रतुशेषत्वादुक्तशब्दः पुरुषार्थमादाय वादः कर्तुः स्तुतिमात्रं यथाऽन्येषु पर्णमयीत्वादिषु यस्य पर्णेत्यादिरिति जैमिनिर्वक्ति ॥ २ ॥

ननु वेदान्तवेद्यमशनायाद्यतीतस्वरूपं कर्मानुपयोगीत्यत्राऽऽह—

आचारदर्शनात् ॥ ३ ॥ इति ।

तादृशस्वरूपविदामपि जनकादीनां कर्माऽऽचारदर्शनात् ॥ ३ ॥

तच्छ्रुतेः ॥ ४ ॥ इति ।

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' [ बृ० ३ । १ । १ ] इत्यादिना तथा श्रवणात् । तथा चाशनायाद्यतीतत्वेन कर्तैव स्तूयत इति भावः । तथा तस्य विद्यायाः कर्माङ्गत्वस्य 'यदेव विद्यया करोति' [ छा० १ । १ । १० ] इत्यादिना श्रवणात् ॥ ४ ॥

---

१ क. कामना । २ ख. 'भिन्नारि । ३ ख. 'ति तु जै । ४ ख. 'थाऽपित' ।

समन्वारम्भणात् ॥ ५ ॥ इति ।

विद्याकर्मणोः फलारम्भे साहित्यस्य 'तं विद्याकर्मणी समन्वारभेते' [ बृ० ४ । ४ । २ ] इत्यादिना दर्शनात् ॥ ५ ॥

तद्वतो विधानात् ॥ ६ ॥ इति ।

'आचार्यकुले वेदमधीत्य यथाविधानं गुरोः कर्मातिशेते [ छा० ८ । १५ । १ ] इत्यादिनाऽध्ययनगृहीतसर्ववेदार्थज्ञानवत एव कर्मणां विधानाज्ज्ञापकात् ॥ ६ ॥

नियमाच्च ॥ ७ ॥ इति ।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ' [ ईशा० २ ] इत्याद्युक्तात् ॥ ७ ॥

सुबोधार्थं पक्षद्वयं प्रदर्श्य सिद्धान्तं निश्चिनोति—

अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ इति ।

तुशब्दाज्जैमिनीयमतव्यवच्छेदः । वेदान्तेषु कर्तुः संसारिरूपादाधिक्यस्य विलक्षणस्योपक्रमोपसंहारादिषूपदेशादेवं संसार्यनुवादेनासंसारिस्वरूपतात्पर्यवत्त्वेन तेषामुपदेशानां दर्शनादतो बादरायणस्यैवमतमुपादेयमित्यर्थः ॥ ८ ॥

'आचारदर्शनात् ' [ ब्र० सू० ३ । ४ । ३ ] इत्यादिसूत्रैरुक्तं क्रमेण सूत्रैः प्रत्याह—

तुल्यं तु दर्शनम् ॥ ९ ॥ इति ।

यथा तत्त्वविदां कर्मणामनुष्ठानं तथाऽननुष्ठानमपि दृश्यते ' एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे ' [ कौषी० २ । ५ ] इति ' एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ' [ बृ० ३ । ५ । १ ] इत्यादौ । तत्र विद्यायाः स्वातन्त्र्येऽनुष्ठानं लोकशिक्षार्थतयोपपद्यते कर्मार्थत्वे तु विद्यामादाय कर्मत्यागोऽनुपपन्न इति भावः ॥ ९ ॥

---

१ ख. ॰पनात् ।

असार्वत्रिकी ॥ १० ॥ इति ।

या तु श्रुतिरुक्ता सोद्गीथविद्यामात्रविषया न सर्वविद्याविषया॥१०॥

विभागः शतवत् ॥ ११ ॥ इति ।

समारम्भणं यदुक्तं तत्रापि विद्ययैकस्य फलस्य कर्मणाऽन्यस्येति विभागो यथा शतमाभ्यां देयमित्युक्ते विभागेन दानम् । वस्तुतः समारम्भणवचनं न निर्गुणविद्याविषयम् । ' अथाकामयमानः ' [ बृ० ४ । ४ । ६ ] इत्यादिना पश्चादेव तस्या उपक्रमात् ॥ ११ ॥

अध्ययनमात्रवतः ॥ १२ ॥ इति ।

अध्ययनगृहीतवेदार्थज्ञानस्यापेक्षितत्वेऽपि यथैकक्रतुविषयवेदार्थज्ञानं क्रत्वन्तरे नापेक्षितं तथा कर्ममात्रे वेदान्तार्थज्ञानमपीति तद्वतो विधानादिति व्याहतम् ॥ १२ ॥

नाविशेषात् ॥ १३ ॥ इति ।

कुर्वन्नेवेत्यादौ विद्वानितिविशेषानुक्तेर्नियमाच्चेति न साधकम्॥१३॥

स्तुतयेऽनुमतिर्वा ॥ १४ ॥ इति ।

यदि प्रकरणाद्विद्वान्संबध्येत तथाऽपि विद्यास्तुतय कर्मानुज्ञामात्रं तदत एव ' न कर्म लिप्यते नरे ' [ ईशा०२ ] इति तत्र शेषः ॥ १४ ॥

कामकारेण चैके ॥ १५ ॥ इति ।

एके तत्त्वं साक्षात्कृतवन्तः परमानन्दं लब्ध्वा कामकारेण प्रजादिषु फलान्तरसाधनेषु वैयर्थ्यमनुभवन्ति ' किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः , [ बृ० ४ । ४ । २२ ] इति श्रुतेः । तथा च विद्योदये फलेष्वनभिलाषस्य विद्वदानुभविकत्वेन न तस्याः कर्माङ्गत्वमिति भावः ॥ १५ ॥

उपमर्दं च ॥ १६ ॥ इति ।

तत्त्वसाक्षात्कारं प्रकृत्य ' यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् , [ बृ० २ । ४ । १४ ] इत्यादिकं द्वैतमात्रस्य बाधितानुवृत्त्या प्रतिभासमात्रेऽप्युपमर्दं प्रारब्धमात्राधीनभिक्षाटनाद्यन्यक्रियाकारकघटितव्यवहारविषयत्वाभावं बोधयति । तथा च द्वैतमात्रे बाधितत्वश्रवणात्तत्त्वज्ञस्य कर्मानुष्ठानस्यैवासंभवान्न विद्यायाः कर्मफलोपकारित्वमिति भावः ॥ १६ ॥

१ ख. 'द्वदनुभावि'।

ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥ ( १ ) इति ।

ऊर्ध्वरेतःस्वप्याश्रमेषु दृष्टाया विद्याया न कर्माङ्गत्वसंभवः । ते चाऽऽश्रमाः शब्दे श्रुतौ 'त्रयो धर्मस्कन्धाः, [ छा० २ । २३ । १ ] इत्यादिना प्रतिपाद्यन्ते । चकारादत एव मोक्षं प्रति ज्ञानकर्मणोः समुच्चयोऽपि न मानाभावात् । 'नान्यः पन्था' [ श्वे० ३ । ८ ] इत्यादिना मोक्षस्य हेत्वन्तरनिरासादज्ञानस्य ज्ञानैकनिवर्त्यत्वाच्चेति ॥ १७ ॥ ( १ )

'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसꣳस्थोऽमृतत्वमेति ' [ छा० २ । २३ । १ ] इत्यत्र चतुर्थाश्रमे निष्कर्मविद्याया उक्तत्वेन कर्मनैरपेक्ष्येण पुरुषार्थसाधनत्वमुक्तं तन्नेत्याक्षिपति—

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥ इति ।

यज्ञाध्ययनदानावच्छिन्नत्वेन गृहाश्रमस्य तपःशब्देन वानप्रस्थभिक्षुरूपाश्रमद्वयस्य ब्रह्मचारिणश्च पूर्वमुक्तत्वात्तेषामेवैतत्पदेन परामृश्य पुण्यलोकत्वमुक्त्वा तेषां मध्ये ब्रह्मणि संस्था निष्ठा यस्य सोऽमृतत्वमागिति ब्रह्मसंस्थशब्देनाऽऽश्रममात्रस्यैव परामर्शं जैमिनिराह । तथा च गृहस्थादीनां कर्मिणामपि मोक्षप्रतिपादनाद्विद्यायाः कर्मसहकारित्वमिति भावः । ननु श्रुतिप्रसिद्धं गार्हस्थ्यं स्मृतिप्रसिद्धे च ब्रह्मचर्यवानप्रस्थत्वे तानि निन्दयाऽनूद्य ब्रह्मसंस्थत्वरूपं पारिव्राज्यं स्तूयते स्तुत्या च तद्विधिः कल्प्यते स्तुतेर्विध्यविनाभावात्तत्राऽऽह—अचोदनेति कर्ममात्रत्यागावच्छिन्ने पारिव्राज्ये चोदनाया विधेरसंभवः । हि यस्मात् 'वीरहा वा एष देवानां योऽग्निमुद्वासयते ' [ तै० १ । ११ । १ ] इत्यादिश्रुतिः कर्मत्यागमपवदति निषेधति । वीरोऽधीतवेदार्थस्य ज्ञानपूर्वकमनुष्ठानात्तदीयहत्यया समानपापो वीरहा । 'ब्रह्मर्यादेव प्रव्रजेत् ' इतिस्पष्टप्रत्यक्षजाबालादिश्रुतिं त्वनपेक्ष्यायं विचारः ॥ १८ ॥

प्रत्याह—

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥ इति ।

परिव्राड्भिरेवानुष्ठेयं यत्कर्ममात्रत्यागपूर्वकब्रह्मनिष्ठत्वं तदेव ब्रह्मसंस्थाशब्देनोच्यते द्वितीयतृतीयेतेत्यादिनैकवाक्यताप्रतीतेरेकवाक्ये चोप-

क्रमस्य बलवत्त्वादुपक्रमे च गृहस्थाश्रमस्यासाधारणधर्मेणैवोक्तत्वात्तद्‌नुरोधेन भिक्ष्वाश्रमस्याप्यसाधारणधर्मेणैव वक्तुमुचितत्वात्तपः पदेनाऽऽश्रमद्वयोक्तेरयुक्तत्वमतः साम्यश्रुतेर्ब्रह्मसंस्थ इतिश्रुतेरसाधारणधर्मेणाऽऽश्रमबोधकत्वरूपसाम्यानुरोधात् । तथा चाऽऽश्रमत्रयस्यैवोक्तत्वेन त्रय इत्यादिना तन्निन्द्याऽनूद्य ब्रह्मसंस्थ इत्यादिना भिक्षुत्वमेव स्तूयत इति भावः ॥ १९ ॥

एवं च ‘ उपरि हि देवेभ्यो धारयति ’ इत्यत्र धारणवदपूर्वत्वात्पारिव्राज्ये विधिरेवेत्याह—

विधिर्वा धारणवत् ॥ २० ॥ ( २ ) इति ।

वीरहेत्यादि त्वविरक्तविषयमिति भावः ॥ २० ॥ ( २ )

यथा श्रुतिसाम्याद्ब्रह्मसंस्थशब्दस्य भिक्षुमात्रपरत्वं निर्णीतं तथा ‘ जुहूरादित्यः कूर्मः स्वर्गो लोक आहवनीयः ’ इत्यादिजुहूस्तावकश्रुतिसाम्यात् ‘ एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधय ओषधीनां पुरुषः पुरुषस्य वाग्वाच ऋग्रुचः साम साम्न उद्गीथः ’ [ छा० १ । १ । २ ] ‘ स एष रसानाꣳ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः [ छा० १ । १ । ३ ] इत्यादिश्रुतेरपि ‘ ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति तस्योपव्याख्यानम् ’ [ छा० १ । १ । १ ] इति पूर्ववाक्यविहितोपासनस्तावकत्वमस्त्वित्याशङ्कते—

स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ इति ।

मात्रपदेनोपास्यसमर्पकत्वव्यवच्छेदः। कथं तर्हि उपास्यलाभस्तत्राऽऽह—उपादानात् । ‘ ओमित्येतदक्षरमुद्गीथम् ’ इत्यनेनैवोपास्यग्रहणात् । यद्यपि तत्र विशेषणपरतयोद्गीथावयवप्रणवोपास्यत्वपरत्वं स्थापितं तथाऽप्युद्‌गीथत्वेन प्रणवमुपासीतेत्यध्यासे सामानाधिकरण्यपरं तदितिकृत्वा चिन्त्यत उद्‌गीथावयवप्रणवस्यैव वा प्रकृते स्तुतिः । प्रत्याह नेति । प्रकृतवाक्यप्रतिपाद्यस्य रसतमत्वादेरपूर्वत्वादन्यतोऽप्राप्तत्वादुपास्योद्‌गीथविशेषपरत्वे संभवति स्तुतिपरत्वायोगात् ॥ २१ ॥

ननु कर्मप्रकरणे कर्माङ्गतया विहितोद्गीथादिस्तावकत्वं स एष रसानाम् ’ [ छा० १ । १ । ३ ] इत्यादिवाक्येषूच्यतां तावतैवोपपत्तौ विधिकल्पने गौरवात्कर्माङ्गानां दूरस्थत्वेऽप्युद्‌गीथादिशब्दैः संनिधापितत्वात्तत्राऽऽह—

भावशब्दाच्च ॥ २२ ॥ ( ३ ) इति ।

उपासीतेतिविधिशब्दात् । तथा च प्रकृतवाक्य एव विधिसत्त्वात्तेनैयान्वयसंभवाद्दूरस्थविधिना पदैकवाक्यतयाऽन्वयासंभवाच्च न प्रकृतवाक्यानां कर्माङ्गस्तावकत्वं किंतूपासनाविधिपरत्वमितिभावः । ओमित्येतदक्षरमुद्गीथस्यावयवमुपासीत ब्रह्माभेदेन भावयेत् । अवयवत्वं प्रकटयति—ओमितीति । आरभ्येति शेषः । हि यस्मादोमित्यक्षरमारभ्योद्गायत्युद्गीथं करोति तस्मात्तदक्षरमुद्गीथस्यावयव इत्यर्थः । रसः सारः परमः परात्मप्रतीकः परार्ध्यः परस्य ब्रह्मणोऽर्धं स्थानं सदर्हति ब्रह्माभेदेनोपास्य इति यावत् । अष्टमः पृथिव्याद्यपेक्षयोद्गीथस्तदवयव इति श्रुत्यर्थः । यदा चैतादृशवाक्यमपि न स्तुतिस्तदा तत्त्वज्ञानफलवाक्यं सुतरां न स्तुतिरिति पादसंगतिः । चकारात् 'आपयिता ह वै कामानां भवति ' [ छा० १ । १ । ७ ] इत्यादिफलश्रवणात्प्रकृते विध्यावश्यकत्वम् ॥ २२ ॥ ( ३ )

पारिप्लवार्था इति चेन्न विशे-
षितत्वात् ॥ २३ ॥ इति ।

'अथ ह याज्ञवल्क्यस्य द्वे भार्ये ' [ बृ० ४ । ५ । १ ] इत्यादयो वेदान्तोक्ताख्यायिकाः पूर्ववदेव संनिहितविद्यास्तुतिपरा न सन्तु किंतु पारिप्लवार्थाः सर्वाण्याख्यानानि पारिप्लवा इत्यनेनाऽऽख्यानमात्रस्य पारिप्लवत्वोक्तेः ' पारिप्लवमाचक्षीत ' इति वाचस्तोमक्रत्वङ्गताबोधकवाक्यापेक्षया संनिधेर्विद्याङ्गताबोधकस्य दुर्बलत्वादिति चेन्न । वाक्यशेषे ' मनुर्वैवस्वतो राजा बभूव ' इत्यादिनाऽऽख्यानानां विशेषितत्वात् । तेषामेव तत्र विधानात् ' सर्वाण्याख्यानानि पारिप्लवे शंसति ' इत्यनेनैव विधिसिद्धौ ' पारिप्लवमाचक्षीत ' इत्यस्य वाक्यशेषगताख्याननियममात्रार्थत्वाच्च सर्वपदसंकोचस्याऽऽवश्यकत्वात् ॥ २३ ॥

तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥ (४) इति ।

तथा च सति विद्यावाक्यैरेकवाक्यतोपबन्धाद्विद्यास्तुतिपरत्वमेव वेदान्ताख्यानानाम् ॥ २४ ॥ (४)

अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ (५) इति ।

पूर्वाधिकरणस्थविशेषितत्वं सर्वनाम्ना परामृश्यते । ब्रह्मविद्या मोक्षे

जननीयेऽग्नीन्धनादिसाध्यकर्ममात्रानपेक्षा 'न कर्मणा न प्रजया' [महानारा० १०।५] इत्यादिना मोक्षस्य कर्माद्यजन्यत्वेन विशेषितत्वात्। चकारान्मोक्षस्याविद्यानिवृत्तिरूपत्वेन विद्यामात्रसाध्यत्वसंभवः ॥ २५ ॥ ( ५ )

सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ इति ।

यथाऽश्वस्य लाङ्गलादावयोग्यत्वेऽपि रथादौ विनियोगो योग्यत्वात्तथा ब्रह्मविद्याऽप्ययोग्यत्वात्स्वजन्यफले कर्मानपेक्षाऽपि स्वोत्पत्तौ तदपेक्षैव पापक्षयादिद्वारा तदपेक्षाया योग्यत्वात्। 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' [बृ० ४।४।२२] इति श्रुत्या विविदिषां विद्यां वोद्दिश्य यज्ञाद्याश्रमधर्ममात्रविधानाच्च यज्ञादिनिष्ठविविदिषादिसाधनत्वस्यापूर्वत्वाद्विविदिषन्तीत्यस्य लेडन्तत्वाच्च। वेदस्यानुवचनमध्ययनं ब्रह्मचारिणो धर्मः, यज्ञदाने गृहस्थस्य, तपो वानप्रस्थयतिनोः। अनाशकेन कर्तव्यतयान्तराविरोधिना। अथ वाऽऽशकमशनमीषदर्थको नञ्, हितमितमेध्याशनेनेति यावत्। तथा च भिक्षुधर्मोऽयं तपस्तु वानप्रस्थस्यैव। अत्र यज्ञादिनानापदार्था विविदिषायां साधनत्वेन न विधीयन्ते वाक्यभेदापत्तेर्नापि यज्ञादिविशिष्टैकभावना यज्ञादिसकलसाधनविशिष्टप्रयोगान्तरविध्यापत्तेः किंतु यज्ञादिप्रत्येकान्वितनानाभावनास्तन्त्रेणैकाख्यातोपात्ताः। तथा चैकपदोपात्तत्वादाग्नेयादिषण्णां स्वर्गाद्युद्देशेनेव बहूनां विधेयत्वेऽपि न वाक्यभेदः ॥ २६ ॥

शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ ( ६ ) इति ।

ब्रह्मविद्यार्थी यथा यज्ञादिभिस्तथा शमादिभिरप्युपेतः स्यात् तुशब्दोऽप्यर्थः। तेषामप्यवश्यानुष्ठेयत्वात्। 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येत्' [बृ० ४।४।२३] इत्यनेन विद्याङ्गतया तेषां विधानात् ॥ २७ ॥ ( ६ )

प्राणसंवादे 'न ह वा एवंविदि किंचनानन्नं भवति' [छा० ५।२।१] इत्यादौ पूर्वबलेद्रत्वसंभवात्पश्वाद्यन्नतृणादे रागप्राप्त्यभावाच्च संनिहितप्राणविद्याङ्गतया सर्वान्नभक्षणं विधीयते न च निषेधशास्त्र-

---

१ ख. °न यद्यपि न। २ ख. °शेन च व°।

बाध्यमिदम् । अगम्यागमननिषेधेन वामदेवविद्याङ्गस्य 'न कांचन स्त्रियं परिहरेत्' [ छा० २ । १३ २ ] इति स्त्रीमात्रापरिहारस्येव पुरुषार्थेन भक्षणनिषेधेन विद्याङ्गस्य सर्वभक्षणस्याबाध्यत्वादिति प्रत्याह—

सर्वान्नानुमतिश्च प्राणात्यये
तद्दर्शनात् ॥ २८ ॥ इति ।

चोऽवधारणे । प्राणात्यय एव सर्वस्यान्नस्याभ्यनुज्ञा । छान्दोग्य उपस्त्युपाख्याने प्राणधारणार्थमिभ्योच्छिष्टं खादताऽप्युपस्तिना 'न वा अजीविष्यमिमानखादन्' [ छा० १ । १० । ४ ] 'कामो म उदपानम्' [ छा० १ । १० । ४ ] इत्यनेन प्राणधारणार्थस्यैव सर्वभक्षणस्यानुमतिप्रदर्शनात् ॥ २८ ॥

अबाधाच्च ॥ २९ ॥ इति ।

एवंरीत्यैवाऽऽहारशुद्धौ सत्त्वशुद्धिरित्यादिशास्त्रस्याबाधसंभवात्॥२९॥

अपि च स्मर्यते ॥ ३० ॥ इति ।

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

इत्यादिना प्राणात्यय एव ॥ ३० ॥

शब्दश्चातोऽकामकारे ॥ ३१ ॥ ( ७ ) इति ।

अत एवान्नमात्रस्य कामकारनिवृत्तये 'तस्माद्ब्राह्मणः सुरां न पिबेत्' इत्यादिशब्दः । उष्ट्राद्यन्नभक्षणस्याशक्यतया संकोचावश्यकत्वे शक्यस्य च रागमातत्वाच्छ्वादिपर्यन्तस्यान्नं प्राणस्येत्यनन्तरपूर्वोक्तत्वेन प्रकृतवाक्यस्य सर्वं प्राणान्नमितिचिन्तनस्तुत्यर्थस्यैव संभवान्न विधायकत्वमिति भावः ॥ ३१ ॥ ( ७ )

ननु यज्ञादेर्विविदिषाद्यर्थत्वे तत्कामनाराहितकर्तव्यता न स्यात्तत्राऽऽह—

विहितत्वाच्चाऽऽश्रमकर्मापि ॥ ३२ ॥ इति ।

विविदिषाद्यर्थिभिन्नस्यापि तत्तदाश्रमस्थस्य कर्तव्यं तत्तत्कर्म 'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिना विहितत्वात् ॥ ३२ ॥

---

१ ख. 'देवर्षि'।

नन्वेवं नित्यत्वं काम्यत्वं च विरुद्धं तत्राऽऽह—

सहकारित्वेन च ॥ ३३ ॥ इति।

विविदिषावाक्येन श्रवणादिसहकारित्वलाभेनेत्यर्थः। तथा च वचनबलादुभयात्मकत्वात्काम्यप्रयोगेणैव प्रसङ्गान्नित्यप्रयोगस्यापि सिद्धेः प्रयोगानावृत्तेर्न विरोधः ॥ ३३ ॥

ननु कथं काम्यप्रयोगान्नित्यप्रयोगसिद्धिः कौण्डपायिनां मासाग्निहोत्रवत्प्रकरणान्तरेण विविदिषार्थस्य कर्मान्तरत्वात्तत्राऽऽह—

सर्वथाऽपि त एवोभयलिङ्गात् ॥ ३४ ॥ इति।

सर्वथा विद्यार्थितदन्यकर्तव्या यज्ञादयस्ते 'अग्निहोत्रं जुहोति' इत्यादौ कर्मकाण्ड एवोत्पन्ना विविदिषावाक्यस्योत्पत्तौ व्यापारकल्पने गौरवाद्यज्ञेनेत्यादिसिद्धार्थकश्रौतनामरूपात्।

'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः'

[ भ० गी० ६। १ ] इतिविज्ञातकर्तव्यताककर्मणां विद्यार्थत्वबोधकस्मृतिरूपाच्च लिङ्गात्। अपिशब्दात् 'यस्यैतेऽष्टाचत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छति' इतिस्मृत्या कर्मकाण्डोक्तकर्मणां विद्योपयोगित्वेनैव संस्कारत्वोक्तेश्च ॥ ३४ ॥

कर्मणां रागादिक्लेशोत्पादनद्वारा विद्याप्रतिबन्धकपापस्य निवर्तकत्वेन विद्यायामुपयोग इत्याह—

अनभिभवं च दर्शयति ॥ ३५ ॥ (८) इति।

'एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते' [ छा० ८। ५। ३ ] इत्यादिश्रुतिः 'कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते' इति स्मृतिश्च ब्रह्मचर्यादिकर्मणां रागादिकषायकृताभिभवनाशकत्वं दर्शयति। न नश्यति न पापाधीनरागादिना दर्शनाविषयः। पक्के नष्टे ॥ ३५ ॥ (८)

ननु यज्ञादिसमभिव्याहारादाश्रमिकर्मणामेव विनियोगादनाश्रमिकृतानां दानजपादीनां विद्याहेतुत्वं न स्यात्तत्राऽऽह—

अन्तरा चापि तु तद्दृष्टेः ॥ ३६ ॥ इति।

अन्तराऽऽश्रमराहित्येऽपि कर्मणां विद्योपयोगो रैक्वप्रभृतीनामनाश्रमिणामपि श्रुत्युक्तकर्माधीनविद्याप्राप्तिदर्शनात् ॥ ३६ ॥

---

१ क. 'ति ण°'। २ क. 'र्शनावि°'। ३ ख. 'त्यधर्मा°'।

अपि च स्मर्यते ॥ ३७ ॥ इति ।

' जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ '

इत्यनेनाऽऽश्रमकर्मनिरपेक्षजपमात्रस्यैव मोक्षरूपसिद्धिप्रयोजकत्वं स्मर्यतेऽपि ॥ ३७ ॥

विशेषानुग्रहश्च ॥ ३८ ॥ इति ।

दानेन तपसा चेत्यादितृतीयाश्रुत्या विशेषेण दानादिप्रत्येकनिष्ठतयाऽनुग्रहो विद्यासाधनत्वं बोध्यते । चो हेतौ ॥ ३८ ॥

नन्वेवं दानादिमात्रेणैव विद्यासंभव आश्रमकर्मसु बह्वायासानर्थक्यं तत्राऽऽह—

अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३९ (९) इति ।

तुशब्दान्नाऽऽनर्थक्यम् । चो हेतौ । यत आश्रमिकर्मातोऽनाश्रमकर्मणो ज्यायः शीघ्रं विद्यादायकं बहुत्वात् । ' अनाश्रमी न तिष्ठेत क्षणमात्रमपि द्विजः ' इति सामर्थ्ये सत्याश्रमात्यागबोधकस्मृतिलिङ्गादपि नाऽऽनर्थक्यम् ॥ ३९ ॥ (९)

अनाश्रमिण इवाऽऽश्रमभ्रष्टस्यापि कर्म विद्यां साधयतु, अनाश्रमिणो रैक्वादेरिव नैष्ठिकत्वादिच्युतस्य वेदव्यासादेरपि ब्रह्मवित्त्वदृष्टेः । न चाऽऽश्रमभ्रष्टः पतित इति वाच्यम् । ' संवत्सरमनाश्रमी स्थित्वा कृच्छ्रं द्वादशरात्रं चरेत् ' इत्यनाश्रमस्थितिप्रायश्चित्तस्यैव

ये प्रत्यवसिता विप्राः प्रव्रज्याग्निजलादिभिः ।
आर्द्रांशुकादि संत्यज्य गृहस्थत्वं चिकीर्षवः ॥
तांश्चारयित्वा त्रीन्कृच्छ्रांस्त्रीणि चान्द्रायणानि च ।
जातकर्मादयः कार्या मतेनाऽऽनाङ्गिरसेन च ॥

इत्याश्रमभ्रष्टप्रायश्चित्तस्यापि सत्त्वात् । अग्निजलादीनि वानप्रस्थत्वोपलक्षणम् । इति प्रत्याह—

तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमात-
द्रूपाभावेभ्यः ॥ ४० ॥ ( १० ) इति ।

तुशब्दान्नैवम् । आश्रमभ्रष्टत्वं हि स्वेच्छयाऽऽश्रममात्रत्यागादुत्तराश्रमगतस्य पूर्वाश्रमग्रहणाद्वा । तत्र नाऽऽद्यम् ।

---

१ क. दीति चा' ।

'आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽनुतिष्ठेद्यथाविधि ॥'

इत्यादिनियमात् । नाप्यन्त्यम् 'अरण्यमियादिति पदं ततो न पुनरेयात्' इत्यादिनियमात् । अतद्रूपाणामुत्तराश्रमस्थस्य पूर्वाश्रमग्रहणनिरूपकशास्त्राणामभावाच्च । 'ब्रह्मचर्यं समाप्य गृही भवेद्गृहाद्वनी भूत्वा प्रव्रजेत्' [ जा० ४ ] इत्यस्यैव शास्त्रस्य सत्त्वात् । ये प्रत्यवसिता इत्यादिप्रायश्चित्तं तु पूर्वाश्रमधर्मसम्यक्चिकीर्षया भ्रष्टस्योत्तराश्रम एव स्थापनार्थं राज्ञा कारणीयं गृहस्थत्वं चिकीर्षव इति विशेषणाच्चारयित्वेति णिच्छ्रुतेः । अत एव 'प्रव्रज्यावसितो राज्ञो दासं आमरणान्तिकम्' इति रागप्रच्युतविषयम् । अत एव च ।

'चाण्डालाः प्रत्यवसिताः परिव्राजकतापसाः ।
तेषां जातान्यपत्यानि चण्डालैः सह वासयेत् ।

इति पातित्यपरम् । वेदव्यासादेस्त्वाधिकारिकस्य साक्षात्कृततत्त्वतादृशायां नैष्ठिकत्वाद्विच्युतिर्न क्षतिकरी । तस्मादाश्रमभ्रष्टानां कर्माधेयत्वान्न विद्यार्थमिति भावः । इदं च जैमिनेरपि मतमिति द्रढयति ॥ ४० ॥ ( १० ॥ )

आक्षिपति—

न चाऽऽधिकारिकमपि पतनानुमा-
नात्तदयोगात् ॥ ४१ ॥ इति ।

नैष्ठिकब्रह्मचारिभिक्षुवानप्रस्थानां योनौ रेतःसेके मीमांसायामधिकारलक्षणोक्तं प्रायश्चित्तं नास्ति ।

'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ।
प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा'

इत्यादिना । तादृशानां पतनानुमानेन प्रायश्चित्तयोगासंभवात्तत्प्रायश्चित्तस्योपकुर्वाणमात्रविषयत्वात्पूर्वाधिकरण आश्रमभ्रंश इव शास्त्राभावात् ॥ ४१ ॥

प्रत्याह—

उपपूर्वमपि त्वेके भावमशनवत्तदु-
क्तम् ॥ ४२ ॥ ( ११ ) इति ।

तुशब्दाच्चैवम् । अपिर्हेतौ । यतस्तेषां तदुपपूर्वमुपपातकमेके मुख्या

१ ख. 'के इततां भी' ।

वदन्ति प्रायश्चित्तस्य च भावं विद्यमानत्वं तत्र वदन्ति । मनुना हि गोवधप्रायश्चित्तमभिधाय ।

एतदेव व्रतं कुर्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ' ॥

इत्यत्रावकीर्णिन उपपातकित्वमभिप्रेत्य तं वर्जयित्वा ।

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे
पाकयज्ञविधानेन यजेत निर्ऋतिं निशि ' इत्यनेन
' अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।
गर्दभं पशुमालभ्य नैर्ऋतं स विशुद्ध्यति ' ॥

इति याज्ञवल्क्येन च प्रायश्चित्तमुक्तम् । नन्वारूढ इत्यादिविशेषविषयकं बाधकमस्तु तत्राऽऽह—तदुक्तमिति । ' ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेत ' इति श्रुत्याऽवकीर्णिमात्रस्य तत्प्रायश्चित्तमुक्तम् । तथा च न पश्यामीत्यनेन दर्शनाभावद्वारा श्रुतिकल्पनात्पूर्वमेवावकीर्णित्वसामान्येन प्रवृत्तश्रुत्या प्रायश्चित्तसिद्धिं न पश्यामीति त्वेकगुणपरम् । 'उपकुर्वाणो यत्कुर्याद्ब्रह्मचारी तु नैष्ठिकः । तदेव द्विगुणं कुर्यात् ' इति हारीतेन द्विगुणप्रायश्चित्ताभिधानात् । यथा मधुमांसादीनामशने व्रतलोपेऽपि पुनः प्रायश्चित्तं तथा प्रकृते । एवं ' वानप्रस्थो दीक्षाभेदे कृच्छ्रं द्वादशरात्रं चरित्वा महाकक्षं वर्धयेद्भिक्षुर्वानप्रस्थवत्सोमवृद्धिवर्जं स्वशास्त्रसंस्कारश्च ' इत्यादिना वानप्रस्थभिक्ष्वोरपि प्रायश्चित्तं बोध्यम् । कक्षं वनं सोमः सोमलता । स्वशास्त्रसंस्कारश्च ।

' सर्वपापप्रयु[स]क्तोऽपि ध्यायन्निमिषमच्युतम् ।
भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥
उपपातकसंयुक्तः पातकेषु महत्सु च ।
प्रविश्य रजनीपादं ब्रह्मध्यानं समाचरेत् ॥

इत्यादिकः ।

उपेत्य तु स्त्रियं कामात्प्रायश्चित्तं विधीयते ।
प्राणायामसमायुक्तः कृच्छ्रं मन्दं समाचरेत् ॥
तत्रैव च यतिः शान्तः कुर्यात्सांतपनं व्रतम्
ततश्चरति निर्दोषः कृच्छ्रस्यान्ते समाहितः
पुनश्चाऽऽश्रममागत्य चरेद्भिक्षुरतन्द्रितः

इत्यादिः प्रणवजपादिश्च बोध्यः । कृतप्रायश्चित्तैरपि कृतं प्राणायामादि विद्यार्थमिति प्रयोजनसंगतौ ( तिः ) ॥ ४२ ॥ ( ११ )

बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥ ४३ ॥ ( १२ ) इति ।

उक्तानां प्रायश्चित्तमस्तु न वोभयथाऽपि ते बहिर्भाव्याः शिष्टैरसंस्पृक्तव्याः ।

'आरूढपतितं विप्रं मण्डलाच्च विनिःसृतम् ।
उद्बद्धं कृमिदष्टं च स्पृष्ट्वा चान्द्रायणं चरेत् ।
नैष्ठिकानां वनस्थानां यतीनां चावकीर्णिनाम्
शुद्धानामपि लोकेऽस्मिन्प्रत्यासत्तिर्न विद्यते '
इतिस्मृतेराचाराच्च ॥ ४३ ॥ ( १२ )

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥ इति ।

अङ्गाश्रितोपासनानि स्वामिनो यजमानस्यैव कर्तव्यानि न ऋत्विजां " पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ' [ छा० २ । ३ । १ ] उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधꣳ सामोपास्ते ' [ छा० २ । ३ । २ ] इत्यादिना कर्तुः फलश्रुतेः । फलभाजो यजमानस्यैवोपासनाकर्तृत्वौचित्यात् । साङ्गप्रधानायैवार्त्विक्परिक्रयेणोपासनानां चानङ्गत्वात्प्रणयनस्य चाङ्गस्यावश्यमृत्विक्कर्मत्वेन तदाश्रितस्य गोदोहनादेरव्यापारत्वेन पृथक्प्रयोगस्य वक्तुमशक्यत्वात् । विद्योतते विद्युता संयुज्यते । उद्गृह्णाति मुच्यमानं जलं धारयति मेघः सर्वक्रियासु कर्ता वर्षयत्यप्रस्तुतमेघानयनादिना स य एवमुपास्त इति ॥ ४४ ॥

प्रत्याह—

आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते॥ ४५ ॥ इति ।

अङ्गाश्रितोपासनमृत्विजैव कार्यं यतस्तस्मा उपासनायाप्यृत्विक्परिक्रीयत इति ॥ ४५ ॥

श्रुतेश्च ॥ ४६ ॥ ( १३ ) इति ।

तं ह बको दाल्भ्यो विदांचकार स ह नैमिषीयाणामुद्गाता बभूव ' [ छा० १ । २ । १३ ] इत्यादिवाक्यशेषश्रुतेः । ' यां वै कांचन यज्ञ ऋत्विज आशिषमाशासते यजमानायैव ताम् ' इत्यादिश्रुतेः । चकारा-

दौह्रान्नसमाख्यायाश्च । तथा कांस्यभोजिन्यायेन वाक्यशेषादिसमाख्यया चानुगृहीतं फलश्रुतिः परिक्रीतद्वारकं कर्तृत्वमाश्रयतीत्युपासनस्यर्त्विक्कर्मत्वे सिद्धे तदर्थमपि तत्परिक्रमणमिति भावः ॥ ४६ ॥ (१३)

वाक्यशेषान्निर्णीतं 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' [बृ०३।५।१ ] इत्यत्राप्यथ ब्राह्मण इत्यस्य विधेयासमर्पकस्य समभिव्याहारादथ मुनिरित्यत्र मौनस्याविधेयत्वमस्तु, अन्यथा तिष्ठासेदित्यस्यानुषङ्गापत्तेर्वाक्यभेदापत्तेश्च । किंच मुनिशब्दार्थो न ज्ञातृत्वं पाण्डित्यशब्देन प्राप्तत्वात्, मौनं वानप्रस्थम्' इति स्मृतेः । संन्यासोऽपि नार्थः 'व्युत्थायाथ भिक्षाचर्यं चरन्ति [ बृ० ३ । ५ । १ ] इत्यनेन प्राप्तत्वादिति प्रत्याह—

सहकार्यन्तरविधिः पक्षेण तृतीयं
तद्वतो विध्यादिवत् ॥ ४७ ॥ इति ।

पाण्डित्यशब्दितस्य श्रवणस्य बाल्यशब्दिते मननरूपे सहकारिणीव सहकार्यन्तरे मौनशब्दिते निदिध्यासनेऽपि विधिः । तद्वतो विद्यावतः संन्यासिनः । तस्यैव 'आत्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' [ बृ० ३ । ५ । १ ] इत्यादिना प्रैकान्तत्वात् । ननु मौनस्य विपरीतभावनानिवृत्तिरूपं फलं मरयन्वयव्यतिरेकाभ्यामेव प्राप्तत्वात्कथं विधेयत्वं तत्राऽऽह—पक्षेणेत्यादि । तृतीयं मौनं पक्षेणैव प्राप्नुयान्न तु नियमेन । अतो विध्यादिवत् । लौकिकप्रमाणप्रवृत्तेरादौ प्रवृत्तावघातादिविधिवन्मौनस्य विधिरित्यर्थः । तथा च यथाऽवघातप्रापकलौकिकप्रमाणप्रवृत्तेऽपूर्वं दृष्टहेतुप्याद्युद्दिश्य विधिः प्रवर्तते नियमश्च तत्र फलति लौकिकप्रमाणप्रतिबन्धात्स च न व्यर्थो दृष्टसमवेतादृष्टफलाङ्गीकारात्तथा प्रकृतेऽपि विपरीतभावनानिवृत्तिमुद्दिश्य लौकिकप्रमाणप्रवृत्तेः पूर्वं मौनं विधीयते ततश्च पक्षतः प्रापकप्रतिबन्धेन फलीभूतस्य नियमस्य विपरीतभावनाहेतुनाश एव तत्र फलम् । विषयाविष्टचित्तत्वेनाप्राप्तिसंभवमात्रेण नियमसंभवात्साधनान्तराप्राप्तिर्न दोषः ॥ ४७ ॥

---

१ ख. 'मास्या चा' । २ स. 'नुगृहीतु फ' । ३ प्रवृत्तत्वात् । ४ क. माणात्पूर्वं ।

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥ इति।

यद्यपि मौनादिसहकृतसंन्यासस्य विद्यार्थं विहितत्वेन प्राधान्यं तथाऽपि बह्वायाससाध्यकृत्स्नकर्मणामितरेषां कृत्स्नाश्रमाणां चोपजीव्यतया गार्हस्थ्याश्रमे भावात्सत्त्वाच्छान्दोग्ये गृहिणोपसंहारः कृतः ॥४८॥

ननु तथाऽपि मौनादीनामनेकेषां विधाने वाक्यभेदस्तत्राऽऽह—

मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥ ( १४ ) इति।

इतरेषां बाल्यादीनामपिशब्दात्पाक्षिकाप्राप्तेः। तथा च सर्वेषां पाक्षिकाप्राप्तेरुपदेशस्य चाविशेषादेकं विद्याफलमुद्दिश्यानेकेषां विधानेन तिष्ठासेदित्यस्य क्वचिदृष्टं सत्त्वस्याऽऽवश्यकत्वेनानुषङ्गादेरदोषत्वमिति भावः। यद्वा 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' [ बृ० २ । ४ । ५] इत्यादौ पृथग्विधिसमभिव्याहृतशब्देन सर्वेषामेवोपदेशाविशेषात्प्रकृतवाक्येऽनुषङ्गः प्रामाणिक इत्यर्थः ॥ ४९ ॥ ( १४ )

बाल्येन तिष्ठासेत्' [ छा० ३ । ५ । १ ] इत्यत्र बाल्यं बालकर्म बालभावस्य कर्तुमशक्यत्वाद्यथेष्टाचरणं च बालकर्म तन्निषेधशास्त्रं चाकृतश्रवणपरमिति प्रत्याह—

अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥ ( १५ ) इति।

यथेष्टाचरणोद्देश्यीभूतविद्याया एवानुत्पत्तिदर्शनाद्बाह्याङ्गनिरोधरूपमौनशब्दार्थस्येव यथेष्टाचरणस्य विद्यासाधनत्वेनाप्राप्तत्वान्नियमविध्यसंभवादृष्टार्थकापूर्वविधौ गौरवादाप्तवाक्येन श्रुतार्थेष्वसंभावनाहेतुनिवर्तकमनोवृत्तिमत्त्वेनासंभावनामनाविष्कुर्वन्नजनयन्बाल्यशब्दार्थः। तथा सत्येव यथेष्टाचरणनिषेधशास्त्रस्याप्यन्वयादबाधात्। असंभावनाहेतुश्च कृतश्रवणसंस्कारविशेषादिरिव बाले श्रुतार्थस्मरणस्य प्रागभावादिः। तन्निवर्तके वृत्तिश्च बाले श्रुतस्मरणं कृतश्रवणे च मननम्। अतोऽसंभावनाहेतुनिवर्तकवृत्तिरेव बाल्यमिति भावः ॥ ५० ॥ ( १५ )

विद्यायाः साधनं विविच्योत्पत्तिकालं विवेचयति—

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्श-
नात् ॥ ५१ ॥ ( १६ ) इति।

यज्ञादौ श्रवणादौ चानुष्ठितेऽपि यदि चित्तशुद्ध्यादिविरोधिविषयप्रावण्येन भोगजनकप्रारब्धकर्मविशेषेण प्रतिबन्धस्तदा भोगेन तस्य

---

१ स. 'व सर्व'। २ स. 'न्वाल्पत्व'। ३ स. प्राबल्येन।

कर्मणः क्षये सति तत्त्वज्ञानमुत्पद्यते । तादृशप्रतिबन्धस्याप्रस्तुतत्वेऽविद्यमानत्वे त्वैहिकं यज्ञाद्यनुष्ठानाव्यवहितोत्तरोत्पत्तिकं तद्दर्शनाप्रारब्धफलकस्य कर्मणस्तथाबलवत्त्वस्य दर्शनात् । गर्भस्थवामदेवविद्योत्पत्तिबोधके '*श्रुत्वाऽप्येनं वेद न चैव कश्चित्' इत्यादौ च वेदे ।

'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' [ भ० गी० ६ । ४५ ] इत्यादि

अनेकजन्मसंसिद्धस्ततो याति परां गतिम्'

[ भ० गी० ६ । ४५ ] इति स्मृतौ च तथा दर्शनात् ॥ ५१ ॥ (१६)

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥( १७ ) इति ।

यथा विद्यायां नियम उक्तस्तथा मुक्तौ तत्फले न नियमः । विद्योदये सत्यविद्यानिवृत्तिपरमानन्दरूपमुक्तेरवस्थाया अवस्थानस्यावधृतेर्विदुषामानुभविकत्वात् । तथा च प्रारब्धकर्मभुञ्जानेनैव मुक्तेरनुभूयमानत्वान्न तत्र तस्य प्रतिबन्धकत्वं कल्प्यते, अपि त्वनुभूयमानभोगसाधनस्याविद्याकार्यस्य निवृत्तिं प्रति तादृशप्रारब्धकर्मणः प्रतिबन्धकत्वमिति वक्ष्यते ॥ ५२ ॥ ( १७ )

इति तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

इति श्रीपरमहंसपरिव्राजकपरमानन्दसरस्वतीपूज्यपादशिष्यब्रह्मानन्दसरस्वतीरचितवेदान्तसूत्रमुक्तावल्यां तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थाध्यायस्य प्रथमः पादः ।

---

श्रवणादीनां विद्यासाधनतया विधिरुक्तः । तत्र प्रत्यगभिन्ने ब्रह्मणि वेदान्तानां तात्पर्यनिर्णयानुकूलोपक्रमोपसंहारादिविषयकतर्करूपस्य श्रवणस्य तत्र तेषां तात्पर्यसंशयरूपप्रतिबन्धनिवर्तकतया साधनत्वं तत्त्वंपदार्थयोः श्रुतयोरसंभावनाविपरीतभावनानिवर्तकतर्करूपतया तु

* [ भ० गी० २ । २९ ] एतादृशी श्रुतिस्तु नोपलभ्यतेऽस्माभिः ।

१ क. °न तस्य । २ ख. °न्धकानि° ।

मननिदिध्यासनयोर्निदिध्यासनस्याप्येकाग्रश्रवणमननरूपत्वात् । यदि तु तादृशतात्पर्यनिश्चयः श्रवणं तर्कसहितप्रमाणजन्यं मिथ्यात्वानुमित्यादिकं मननं ब्रह्माहमिति धीप्रवाहो निदिध्यासनमित्युपेयते तथाऽपि तदनुकूलव्यापारस्य पुरुषयत्नसाध्यतया ज्यावेक्षणादेरिव विधेयत्वसंभवः परं तु साधनत्वं तेषामदृष्टद्वारैव वाच्यम् । अन्यथा तत्सहकृतवाक्यादितो ब्रह्मात्मसाक्षात्कारस्यानुपपत्तेर्वाक्यस्य तत्रासामर्थ्यात्सुखदुःखादेः साक्षिभास्यत्वेन मनःसामर्थ्यस्याप्यक्लृप्तत्वात् । न चात्रैव शब्दस्य मनसो वा तत्कल्पतेऽन्यथोनुपपत्त्येति वाच्यम् । वाङ्मनसातीतत्वश्रुतिविरोधेनादृष्टार्थत्वस्यैवोचितत्वात् । तथा च सकृदेव श्रवणाद्यनुष्ठेयमिति प्रत्याह—

आवृत्तिरसकृदुपदेशात् ॥ १ ॥ इति ।

श्रवणादीनामावृत्तिरेव 'वेदान्तविज्ञानसुनिश्चितार्थाः' [ मु० ३ २ । ६ ] 'तं त्वौपनिषदं पुरुषं पृच्छामि' [ बृ० ३ । ९ । २६ 'आचार्यवान्पुरुषो वेद' [ छा० ६ । १४ । २ ] इत्यादिश्रुतिभिरात्मन शब्दसाक्षात्कार्यत्वस्यासकृदुपदेशात् । वागाद्यतीतत्वश्रुतेश्च शक्त्या तद् गम्यत्वपरत्वाद्वाह्यमनोजन्यवृत्त्यवच्छिन्नचैतन्याविषयत्वपरत्वाद्वा शाब्द वृत्तेरेवापरोक्षात्मविषयकत्वेन साक्षात्काररूपतया शब्दस्य क्लृप्तसाम र्थ्यालङ्घनाच्चक्षुरादेश्चाक्षुषादौ हेतुत्वावश्यकत्वेनेन्द्रियत्वेन साक्षात्कारकरणत्वे मानाभावात्सांकर्यस्यादोषत्वेनाविद्यानिवृत्तिप्रयोजकसाक्षात्कारत्वंजातेः शाब्दवृत्तावभ्युपगमे बाधकाभावाद्दृष्टार्थताया एव श्रवणादौ संभवेनादृष्टार्थत्वस्यान्याय्यत्वात् । यत्र तु पुरुषे भगवदनुग्रहमाहात्म्यान्न तात्पर्यसंशयादिस्तत्र फलाभावात्कृष्णलेऽवघातस्येव श्रवणादेरभावेऽपि न क्षतिः ॥ १ ॥

लिङ्गाच्च ॥ २ ॥ (१) इति ।

सति च दृष्टार्थत्वे सकृदनुष्ठाने दृष्टफलादर्शनेन लिङ्गात्सामर्थ्याद्प्यावृत्तिगुणकस्यैव श्रवणादेः साधनतया प्राप्तस्य नियमविधिर्लभ्यते । न च श्रवणादेरिव तदन्यस्य तत्कार्ये साधनत्वेनाप्राप्त्या नियमविध्यसंभव इति वाच्यम् । न्यायादिशास्त्ररीत्या गुर्वनधीनस्य वा विचारस्य प्राप्तत्वेन शारीरकरूपस्य गुर्वधीनस्य वा तस्य नियमविधिसंभवात् 'आचा-

---

१ क °त्सकलाते: ।

यवान्पुरुषो वेद ' [ छा० ६।१४।२ ] ' तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् ' । [ मु०१ । २ १२ ] ' ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ' इत्यादिश्रुतिस्मृतिषु तादृशविचारस्य लाभात् । न च तद्विज्ञानार्थमित्यादिनैव श्रवणविधानात्तदन्यश्रवणविधिर्व्यर्थ इति वाच्यम् । तद्वाक्यवति संदर्भे मुण्डकोपनिषदि श्रवणविध्यन्तराश्रवणाच्छाखान्तर एव तत्सत्त्वात् । एवमहंग्रहोपासनानामप्युपास्यसाक्षात्काररूपदृष्टार्थत्वादावृत्तिरिति ॥ २ ॥ ( १ )

ननु जीवपरयोरभेदसिद्ध्यर्थं श्रवणाद्यावृत्तिर्न संभवति ' तत्त्वमसि ' [ छा० ६ । ८ । ७ ] ' अहं ब्रह्मास्मि ' [ बृ० १ । ४ । १० ] इत्यादीनां प्रतीकोपासनापरत्वाद्विरुद्धधर्माध्यस्तयोरभेदस्य बाधितत्वात् । नचाध्यस्तत्वाद्धर्माणामविरुद्धमिति वाच्यम् । त्वमन्ते निःसामान्यत्वाद्द्वारमन्यध्यासासंभवादिति प्रत्याह—

आत्मेति तूपगच्छन्ति ग्राहयन्ति

च ॥ ३ ॥ ( २ ) इति ।

तु शब्दान्नैवम् । यतः ' त्वं वाऽहमस्मि भगवो देवतेऽहं वै त्वमसि ' इत्यनेन जाबाला आत्मेति ब्रह्मोपगच्छन्ति । न चात्र प्रतीकोपासनं व्यत्ययपयोगेन मनो ब्रह्मेत्यादिप्रतीकोपासनापरवैलक्षण्यात् । ग्राहयन्ति च वाक्यान्यभेदं पूर्वपूर्वाध्यस्तसामान्येन गृहीत उत्तरोत्तराध्याससंभवाद्भेदपरतया मुख्यार्थत्वे संभवति प्रतीकोपासनापरतया गौणत्वकल्पनायोगात् ॥ ३ ॥ ( २ )

ननु जीवब्रह्मणोरभेदस्य प्रामाणिकत्वात्तत्त्वमसीत्यादेर्न प्रतीकोपासनापरत्वमिति पूर्वाधिकरण उक्तं तर्हि कुत्राऽपि ब्रह्मणः प्रतीकोपासना माऽस्तु मनो ब्रह्मेत्यादौ मनआदीनां ब्रह्मत्वोक्तिद्वारा तेषु ब्रह्माभिन्नस्य जीवस्याहमितिदृष्टिविधानेनाहंग्रहोपासनापरत्वसंभवात्तत्राऽऽह—

न प्रतीके न हि सः ॥ ४ ॥ (३) इति ।

नैवं हि यस्माद्ब्रह्मप्रतीकोपासनेन विशिष्टः स निर्देशः । तथा च श्रुतहान्यश्रुतकल्पनापत्तेर्नैवंविध आर्थिकार्थः कल्पनार्ह इति भावः ॥ ४ ॥ ( ३ )

---

१ क. 'वणादिवि' । २ ख. 'ध्यासस' । ३ ख. 'ं वाच्या न्य' । ४ ख. 'न्ति न च वाक्यभेदा' ।

ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥ ( ४ ) इति ।

प्रतीकोपासनापरेषु 'मनो ब्रह्मेत्युपासीत' [ छा० ३ । १८ । १ ] 'आदित्यं ब्रह्मेति' इत्यादिषु मनआदिषु ब्रह्मदृष्टिरेव विधीयते न तु ब्रह्मणि मनआदिदृष्टिर्ब्रह्मण उत्कर्षादपकृष्ट उत्कृष्टदृष्टेर्लौकिकोपासनासु दृष्टत्वाद्ब्रह्मशब्दस्य चरमोच्चरितत्वादितिशब्दान्तत्वाच्च ब्रह्मदृष्टिलाक्षणिकताया युक्तत्वाच्च ॥ ५ ॥ ( ४ )

'य एवासौ तपति तमुद्गीथमुपासीत' [ छा० १ । ३ । १ ] इत्यङ्गावबद्धोपासनासूत्कर्षादेर्नियामकस्याभावादादित्यादिशब्दानां प्रथमोच्चरितत्वेन तद्दृष्टिलाक्षणिकत्वायोगात् 'एतस्यामृच्यध्यूढं साम' [ छा० १ । ६ । १ ] इत्यत्र पृथिव्यग्न्योर्ऋक्सामशब्दयोस्तद्दृष्टिविषयत्वगुणयोगेन प्रयुक्तत्वात् 'लोकेषु पञ्चविधं सामोपासीत' [ छा० २ । २ । १ ] इत्यत्र लोकानामधिष्ठानत्वस्य स्फुटत्वादनङ्गेष्वादित्यादिषूद्गीथाद्यङ्गदृष्टिविधानं युक्तमिति प्रत्याह—

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ ( ५ ) इति ।

अङ्गेष्वादित्यादिदृष्टिविधानम् । चोवधारणे । उपपत्तेः, उद्गीथादेर्द्वितीयया संस्कार्यत्वप्रतीतेः । आदित्यादिदृष्टिसंस्कृतस्य तस्य क्रतूपयोगस्य क्लृप्तत्वादादित्यादेश्च क्रतूपयोगस्याक्लृप्तत्वेन कल्प्यत्वेन च गौरवेण संस्कार्यत्वस्य वक्तुमशक्यत्वात् । 'यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति' [ छा० १ । १ । १० ] इति श्रूयमाणस्वाभाविकक्रतुफलगतातिशयरूपफलं प्रत्यादित्यादावङ्गदृष्टेरदृष्टद्वारकाराद्युपकारकत्वकल्पनेऽपि गौरवात् । 'लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिंकारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु' [छा०२ । २ । १] 'अथाऽऽवृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम्' [छा०२ । २ । २ ] 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते' [ छा० २ । २ । ३ ] इत्यादिस्वतन्त्रफलकोपासनेष्वप्यङ्गमाश्रित्य फलोद्देशेन लोकादिदृष्टिमात्रविधाने लाघवात्सप्तम्याविषयत्वार्थकत्वात् । ननु 'ऋच्यध्यूढं साम' इत्यत्र पृथिव्यग्न्योश्च ऋक्सामपदप्रयोगात्तयोरेवर्क्सामदृष्टिर्न लभ्यतेऽमात्ये राजपदप्रयोगेण राजदृ-

---

१ ख. °दु म° ।

ष्टिलामवत्तथा च कथमङ्गेऽनङ्गदृष्टिरिति चेन्न । ऋगादिपदस्यर्गा-दावारोप्यमाणपृथिव्याद्यर्थकत्वेनोपपत्तेः । तस्मात् 'इयमेवर्गग्निः साम' [छा० १ । ६ । १ ] इत्यादौ वाक्य ऋक्सामादौ पृथिव्यग्न्यादि-दृष्टिर्विधीयते, ऋच्यध्यूढमित्यादिवाक्यस्य तदनुकूलत्वात् । 'पृथिवी हिंकारः' इत्यादिवाक्यानां हिंकारः पृथिवीदृष्टिसंस्कार्य इत्याद्य-र्थकत्वसंभवेनाऽऽश्रयगुणसंबन्धबोधकत्वात् । लोकादीनां तु नाऽऽश्र-यत्वमव्यापारत्वात्, भूतमाव्युपयोगाभावेन तेषामसंस्कार्यत्वात् । दध्यादिना होमादेरिव हिंकारादिदृष्टयोत्पाद्यत्वाद्यभावाच्च । हिंका-रादीनां तु पृथिव्यादिदृष्टिसंस्कृतानां सामनिष्पत्तावुपयोगात्क्रतुगत-सामाव्यभिचरितसंबन्धेन तादृशसामसाधनत्वरूपेणाऽऽश्रयत्वबोधात्क्र-तुपयोगमध्य एव लोकादिदृष्टेरनुष्ठानम् । यदि तु तेषु हिंकारादि-दृष्टिर्विधीयते तदा यागे देवतोद्देशस्येव दृष्टौ पृथिव्यादिविशेष्यकत्व-स्याऽऽरादुपकारकाङ्गत्वे गौरवमिति ध्येयम् । उर्ध्वाश्चाऽऽवृत्ताश्च लोका गत्यागतिभ्यां कल्पन्ते भोग्या भवन्ति ॥ ६ ॥ (५)

आसीनः संभवात् ॥ ७ ॥ इति ।

कर्माङ्गावबद्धोपासनानां कर्माङ्गवत्कर्तव्यत्वेऽपीतरोपासनस्य ब्रह्म-ध्यानादेश्चाऽऽसीन एव कर्ता तस्यैव तत्र संभवाद्योग्यत्वाद्[१]च्छैतस्ति-ष्ठतो वा विक्षिप्तचित्तत्वात् ॥ ७ ॥

ध्यानाच्च ॥ ८ ॥ इति ।

आसीन एव ध्यानव्यवहारात् । अत एव चिरमुपरतबहिरन्तरिन्द्रि-यस्वरूपमासीनगुणमादाय ध्यायति बको ध्यायति प्रोषितबन्धुरित्यादि-प्रयोगः ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥ इति ।

अत एव चिरं निश्चेष्टत्वमासीनगुणमपेक्ष्य 'ध्यायतीव पृथिवी' [ छा० ७ । ६ । १ ] इत्यादिश्रौतप्रयोगः ॥ ९ ॥

[२]स्मरन्ति च ॥ १० ॥ ( ६ ) इति ।

स्मरन्ति च

---

१ क. 'दिर्वि' । २ ख. 'रुकते ।'

'आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेन न तिष्ठता ' ॥

इत्यादि ॥ १० ॥ (६)

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥ ( ७ )इति ।

तेष्वेवोदाहरणेषु यत्र दिग्देशकालेषु चित्तैकाग्रतारूपमन्तरङ्गसाधनं संभवति तत्रैव कर्तव्यताऽन्यथा नियतदिगाद्यपेक्षणीये तत्र चित्तैकाग्र्यस्य पाक्षिकत्वेन शेषिणो ध्यानस्य बाधापत्तेः । अत एव जातकर्मणः पश्चादाशौचप्रवृत्तेः पूर्वं च स्तनपाने निषेधात्स्तनपानाभावे मरणापत्त्या पुत्रपूतत्वादिफलस्य बाधापत्तेर्जातेष्टेः पुत्रजन्मानव्यवहितोत्तरत्वबाधावश्यकत्वे जातकर्मपूर्वकं स्तनपानं कारयित्वेष्टिसामान्यप्राप्तपर्वण्येव जातेष्ट्यनुष्ठानम् । ' समे शुचौ शर्करावह्निवालुके ।

विवर्जिते शब्दजलाश्रयादिभिः मनोनुकूले न तु चक्षुःपीडने ।

गुहानिवाताश्रयणेन योजयेत् '[श्वे० २ । १० ] इति श्रुतिस्त्वैकाग्र्यमात्रपरा ॥ ११ ॥ [ ७ ]

आप्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥ (८) इति ।

पारलौकिकफलेष्वहंग्रहोपासनेष्वाप्रायणान्मरणपर्यन्तमावृत्तिः कार्या हि यस्मात्तत्र मरणसमयेऽप्युपासनानुवृत्तेः पारलौकिकफलातिहेतुत्वं श्रुतिस्मृत्योर्दृष्टं ' सविज्ञानो भवति स विज्ञानमेवान्ववक्रामति ' [बृ० ४ । ४ । २ ] ' यच्चित्तस्तेनैष प्राणमायाति स यावत्क्रतुरयमास्माल्लोकात्प्रैति ' इतिश्रुतेः ।

' यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवेति ' [ भ० गी० ८ । ६ ]

इत्यादि ' तस्मात्सर्वेषु कालेषु मामनुस्मर ' [ भ० गी० ८ । ७] इति स्मृतेश्च । अत एवोपास्ये साक्षात्कृतेऽपि मरणकालोपासनानुवृत्तयेऽन्तराऽप्यावृत्तेरावश्यकत्वम् । न चाऽऽवृत्तिं विनाऽपि साक्षात्कारस्यैवादृष्टद्वारा मरणकालिकानुवृत्तिहेतुत्वमस्त्विति वाच्यम् । दृष्टेनैवोपपत्तावदृष्टकल्पने गौरवाद्दृष्टस्यादृष्टान्तरेण प्रतिबन्धसंभवाद्दृष्टसामग्र्या बलवत्त्वेन प्रतिबद्धुमशक्यत्वात् ॥ १२ ॥ ( ८ )

---

१ क. 'पते. पु' । २ ख. स्माल्लोकान्प्रयाति ।

तदधिगम उत्तरपूर्वाघयोरश्लेशविनाशौ तद्व्यपदेशात् ॥ १३ ॥ ( ९ ) इति ।

तस्य सगुणस्य निर्गुणस्य वा ब्रह्मणोऽधिगमे साक्षात्कारे सत्युत्तरस्याघस्य पापस्याश्लेषो निषिद्धेऽनुष्ठितेऽपि पापं न जायत इत्यर्थः । पूर्वस्योत्पन्नस्य पापस्य विनाशः स्वसमानाधिकरणफलाजनकत्वं न तु फलं विनैव ध्वंसः 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इतिश्रुत्या सगुणनिर्गुणज्ञकर्मणां तत्सुहृद्द्विषत्सु भोगजनकत्वबोधनात् । हेतुमाह । तद्व्यपदेशादिति । 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' [ छा० ४ । १४ । ३ ] 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' [ छा० ५ । २४ । ३ ] 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे' [ मु० २ । २ । ८ ] इत्यादिश्रुतेः । न चोक्तश्रुतीनामर्थवादत्वेनाविवक्षितार्थत्वमिति वाच्यम् । सगुणविद्यायां सर्वपापप्रहाणपूर्वकैश्वर्याप्तेर्विद्याफलत्वनिश्चयान्निर्गुणं साक्षात्कृतवतस्तु निरभिमानत्वात्पापानुपपत्तेः । अन्यथेश्वरस्यापि निषिद्धानुष्ठानात्पापापत्तेः । अत एव

'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते' [म०गी०१८।१७]

इति स्मृतिः । पूर्वकर्मणां तु व्यधिकरणफलेनैव क्षयात्समानाधिकरणफलाजनकत्वात् । अन्यथाऽनादिभवसंचितकर्मणामनन्तानां समानाधिकरणफलेन क्षयाङ्गीकारे तत्त्वज्ञस्याप्यनिर्मोक्षप्रसङ्गात् । न च कायव्यूहमधिष्ठाय युगपदेव यावत्कर्मणां फलाप्तिरिति वाच्यम् ।

कल्पमेकं सूर्यलोके चन्द्रलोके द्विकल्पकम् ।
ततश्च विविधान्भोगानाप्नोति ब्रह्मणः पदे ॥

इति । प्रतिनियतपौर्वापर्याणां कल्पाद्यवच्छिन्नानां कर्मविशेषजन्यभोगविशेषाणां युगपदसंभवाद्विद्यायाः कायव्यूहहेतुत्वे मानाभावाच्च । व्यधिकरणानां तु तादृशभोगानां व्यधिकरणं स्वनाशकं स्वजन्यमदृष्टं द्वारीकृत्य विज्ञकर्मभिर्जननान्न दोषः । तस्मान्मानान्तरेणाप्राप्ताबाधितत्वादुक्तश्रुतीनामर्थो देवताधिकरणन्यायेन विवक्षित एव । तस्याविव-

१ ख. 'र्गुणेः क' । २ क. 'ना सप' । ३ क. स्तानां' ।

क्षितत्वेऽप्यविद्यामिव तत्कार्यमदृष्टं प्रति विद्याया नाशकत्वं लोकसिद्धं समानाधिकरणफलाजनकत्वं तु निर्बाधम् । एवं च तत्त्वज्ञस्य कर्मान्तरं निष्फलं चेत्तत्त्वज्ञानसाधनानां सुतरामनावृत्तिस्तत्फलस्य सिद्धत्वाद्दृष्टरूपत्वाच्चेति पूर्वाधिकरणेनापवादिकी संगतिः ॥ १३ ॥ (९)

' सर्वे पाप्मानः ' [ छा० ५ । २४ । ३ ] इति पाप्मपदोपादानाच्छास्त्रीयस्य ज्ञानस्य शास्त्रीयपुण्याभिभावकत्वासंभवाच्च पुण्यस्य नाश्लेष विनाशावित्यधिकमाशङ्क्य ' न दुष्कृतं न सुकृतम् ' इत्युपक्रम्य ' सर्वे पाप्मानः ' इत्युक्तेः कर्ममात्रपरत्वात् ' उभे उ हैवैष एते तरति ' [ बृ० ४ । ४ । २२ ] इत्यनेन विदुषः सुकृतदुष्कृतोभयतरणस्योक्तत्वाच्छास्त्रीयत्वेऽपि विद्याभिभाव्यत्वे बाधकाभावाच्चोक्तमेवातिदिशति—

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥ (१०) इति ।

तदधिगम इत्यनुषज्यते । इतरस्य पुण्यस्यासंश्लेषः पूर्वस्य समानाधिकरणफलानुपधायकत्वं परस्य साधनेऽनुष्ठितेऽप्यनुत्पत्तिः । पाते त्विति । पातः शरीरपातो मरणम् । तुशब्दोऽवधारणे । तथा च मरणाव्यवहितोत्तरमेव विद्याफलातिर्न तु कर्मभोगार्थं विलम्ब इत्यर्थः । एवं च तत्त्वज्ञस्य नित्यकर्मणोऽप्यनुष्ठानं नाऽऽवश्यकं किंतु लोकसंग्रहार्थम् ॥ १४ ॥ ( १० )

अनारब्धकार्ये एव तु पूर्वे तद-
वधेः ॥ १५ ॥ ( ११ ) इति ।

अनारब्धफले एव पूर्वपापपुण्ये उक्तविनाशप्रतियोगिनी न तु पाप्यां विद्याकाल एव फलं दातुमारब्धं ते । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये ' [ छा० ६ । १४ । २ ] इति श्रुत्या विद्याकाले प्रारब्धफलककर्मफलीभूतचरमदेहपातस्य विद्याफलाप्त्यवधित्वश्रवणात्प्रारब्धफलकर्मणा समानाधिकरणानां केषां चित्फलानां जनितत्वात्तत्कर्मातिरिक्तकर्मणामेव व्यधिकरणफलजनकत्वकल्पनात् । अत एव श्रुतिस्मृतिषु स्थितप्रज्ञादिसंज्ञया जीवन्मुक्तो निर्दिष्टः ॥ १५ ॥ (११)

ननु नित्यकर्मणां निर्गुणविद्यया स्वजन्यया विनाशो न स्यात्तथा पाऽऽनुपङ्क्तिकपितृलोकादिरूपतत्फलभोगावश्यकत्वे कथं पाते त्विरयुक्तं

---

१ ग. 'व द' । २ ख. 'प्यस्य सं' । ३ क. 'ते पू' । ४ ख. 'र्मणां व' ।

स्यातां च सगुणविद्यया तेषामश्लेषविनाशावविशेषेण सुकृतश्रवणात्तत्राऽऽह—

अग्निहोत्रादि तु तत्कार्यायैव
तद्दर्शनात् ॥ १६ ॥ इति ।

तु शब्दान्नैवं यतोऽग्निहोत्रादि नित्यकर्म तस्मै विद्यारूपाय कार्यायोपयुज्यते । एवकारोऽप्यर्थः । तेन च व्यधिकरणानुषङ्गिकफलजनकत्वसमुच्चयः । तद्दर्शनात् 'विविदिषन्ति यज्ञेन' [ बृ० ४।४।२२ ] इत्यादौ 'तस्य पुत्राः' इत्यादौ चोभयोपयोगदर्शनात् । सगुणविद्यापक्षे तु तस्या विद्यायाः कार्याय साक्षात्काररूपाय तत्पूर्ववर्त्युपयुज्यते तदुत्तरवर्ति तु पारलौकिकाय विद्याफलाय द्वारं तु सत्त्वशुद्ध्यतिशयः । तद्दर्शनात् 'धर्मेण पापमपनुदति' इत्यादिना नित्यानां सत्त्वशोधकतया पापनाशहेतुत्वदर्शनात् 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' [ छा० ५ । ११ । ५ ] इत्यस्य सगुणविदोऽपि नित्यानुष्ठानलिङ्गस्य दर्शनाच्च । तथा च पापनाशरूपस्य फलस्य सामानाधिकरण्येनैवोपकारत्वसंभवात्साक्षात्कारोत्तरमेव कर्मणां व्यधिकरणफलोपधायकत्वस्योक्तवाक्यबोधितत्वात्साक्षात्कारपूर्वकमेव नित्यकर्मभिः समानाधिकरणस्य पापनाशस्य जनितत्वात्तद्द्वारकसत्त्वशुद्ध्यतिशयरूपफलातिरिक्तफलं प्रत्येव वैयधिकरण्येन तेषां जनकत्वम् । तादृश एव च नाशः सगुणविद्यास्थलेऽप्यग्निहोत्रादीनामिष्ट एव परं तु सगुणसाक्षात्कारात्पूर्वेषु तेषु समानाधिकरणसत्त्वशुद्धिहेतुत्वस्य वक्तृत्वेनोत्तरेषामपि पारलौकिकफलोपकारसंभवात्तदित्यश्लेषोऽपि समानाधिककरणसत्त्वशुद्ध्यन्यफलाजनकत्वरूपः । सर्वथा सगुणनिर्गुणे साक्षात्कृतवत आनुषङ्गिकपितृलोकादिफलासंबन्धः ॥ १६ ॥

अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥ ( १२ ) इति ।

अपिरवधारणे । एवं चातोऽग्निहोत्रादेरन्या या साधुकृत्या काम्यकर्मरूपा सैवैकेषां शाखिनां 'तस्य पुत्राः' इत्यादिवाक्य उक्तेत्युभयोर्बादरायणजैमिन्योः संमतम् ॥ १७ ॥ ( १२ ) ।

---

१ "वाक्ये वो" ।

यदेव विद्ययेति हि ॥ १८ ॥ ( १३ ) इति ।

नित्यानां काम्यानां च व्यवस्थोक्ता तत्राग्निहोत्राद्यङ्गावबद्धोपास्तीनां काम्यवद्व्यवस्था न तु नित्यवत् । हि यस्मात् ' यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति ' [ छा० १ । १ । १० ] इति वाक्यं सविद्यस्य कर्मणः स्वाभाविकफलातिशयफलकत्वरूपवीर्यवत्तरत्वकथनेनाविद्यस्यापि तस्य सफलत्वरूपवीर्यवत्त्वद्योतनेन विद्यायाः स्वाभाविकफलककर्मानङ्गत्वं द्योतयति । तथा च नित्यकर्मानङ्गत्वान्न नित्यवद्व्यवस्थेति भावः ॥ १८ ॥ ( १३ )

प्रारब्धफलकंकर्मफलीभूतचरमदेहान्ते विद्याफलाप्तिरिति पाते त्वित्यनेनोक्तं तथायुक्तं यत्र प्रारब्धफलककर्मण एव नानादेहप्राप्तिः फल तत्र जन्ममरणाभ्यां विद्याप्रमोषाद्भूयोऽपि संसारप्रवाहसंभवात्तत्राऽऽह—

भोगेन त्वितरे क्षपयित्वा संपद्यते ॥ १९ ॥ (१४) इति ।

इतरे विद्यानभिमाध्ये पापपुण्ये भोगेन क्षपयित्वा संपद्यते सगुणविद्लोकान्तरं निर्गुणविद्य विदेहकैवल्यं भजते । तुरवधारणे । तथा चाविद्यायाः पूर्वमेव निवृत्तत्वात्प्रतिबन्धकीभूतस्य प्रारब्धफलकर्मणः क्षयेऽन्तःकरणादिरूपस्याविद्याकार्यस्य निवृत्त्यावश्यकत्वेन निर्गुणविद्रो न भूयः संसारप्रसक्तिः । ' सविज्ञानो भवति स विज्ञानमेवान्ववक्रामति ' [ बृ० ४ । ४ । २ ] इति श्रुत्योपासनाभ्यासाधीनमरणकालीनोपास्यस्मृतेः ।

' यं यं भावं स्मरन्देही त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ' ॥

[ भ० गी० ८ । ६ ] इति स्मृत्या सगुणाप्तिस्मृतेश्च न सगुणविद्रोऽपि सेति भावः ॥ १९ ॥ ( १४ )

इति चतुर्थाध्यायस्य प्रथम पादः ॥ १ ॥

---

अथ चतुर्थाध्यायस्य द्वितीयः पादः ।

---

विद्याया जीवन्मुक्तिरूपं फलं सविशेषं निरूपितं प्रारब्धक्षयान्तरभाविनि फले तु सामान्यतो निर्णीते । उत्क्रान्त्यपेक्षानपेक्षारूपो विशेषो

---

१ क. कर्म' । २ ख °त्वकर्मणां क्ष° ।

द्वितीये निरूपयिष्यते तदर्थं पञ्चाग्निविद्यावौ चिन्तनार्थं च वगादिवृत्ति-लयो विचार्यते । तत्रोत्क्रान्तिर्न संभवति तस्या वागादीन्द्रियोपहितजीव-कर्तृकत्वात् 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ' [ छा० ६ । ८ । ६ ] इत्यत्र वागिन्द्रियस्य च लयोक्तेस्तत्राऽऽह—

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ इति ।

उत्क्रान्तिसमये वागिन्द्रियं मनसि वर्तते न तु लीयते स्वप्रकृतावेव वस्तुनो लयदर्शनात् । संपद्यत इति शब्दाद्व्ययमेवार्थः । लयस्य दर्श-नबाधितत्वेन वृत्तिरहितसंसर्गस्यैव संपद्यर्थत्वात् ॥ १ ॥

अत एव च सर्वाण्यनु ॥ २ ॥ ( १ ) इति ।

प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ' [ बृ० ४ । ४ । २ ] इत्यत्र सर्वाणीन्द्रियाणि प्राणमनूत्क्रामन्तीति श्रूयते तद्व्यत एव संग-च्छते न तु तेषां लये ॥ २ ॥ ( १ )

मनसोऽन्नमयत्वेनान्नप्रकृतिजलमये प्राणे लयः संभवतीत्यधिकमाश-ङ्क्यातिदिशति—

तन्मनः प्राण उत्तरात् ॥ ३ ॥ (२) इति ।

तद्वाग्विशिष्टं मनोऽप्युत्क्रान्तिकाले प्राणवृत्ति यतः प्राणप्रकृतिजल-स्योत्तरं कार्यं यदन्नं तस्माज्जातम् । तथा च प्रकृतावेव लयो न तु प्रकृ-तिप्रकृतौ विकारान्तरेऽतिप्रसङ्गादिति भावः ॥ ३ ॥ ( २ )

*नन्वेवमपि प्राणस्य तेजसि तेजसश्च परदेवतायामात्मनि लये लयस्य च* वृत्तिरहितसंसर्गरूपत्वेनोपाधीनां निर्व्यापारत्वादात्मनः कथमुत्क्रान्ति-स्तत्राऽऽह—

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥ इति ।

स प्राणोऽध्यक्षे विद्याकर्मपूर्वप्रज्ञोपाधिक आत्मनि तिष्ठति विद्या-कर्माद्यनुसाराद्गुत्क्रान्त्यनुकूलवृत्तिमानित्यर्थः । इममात्मानमन्तकाले ' सर्वे प्राणा अभिसमायन्ति ' [ बृ० ४ । ४ । १ ] ' तमुत्क्रामन्तं प्राणोऽनूत्क्रामति ' [ बृ० ४ । ४ । २ ] इत्यादिश्रुतिभिः प्राणस्य निरु-क्तवृत्तिरूपात्मोपगमबोधनात् । आदिना प्राणस्योक्तवृत्तिमनङ्गीकृत्य

१ ख. 'कृतेर्विका' । २ क. 'र्गराहितत्वे' ।

तेजसि लयाभ्युपगमे तेजसः स्वतः क्रियाशक्त्यभावात्तत्क्रियाद्वारा प्राणक्रियाया वक्तुमशक्यत्वेनोक्तश्रुतीनां विरोधात् ॥ ४ ॥

कथं तर्हि 'प्राणस्तेजसि' इति तेजःशब्दितेषु भूतेषु लयः श्रूयते तत्राऽऽह—

भूतेष्वतःश्रुतेः ॥ ५ ॥ इति ।

उक्तश्रुतेः प्राणस्य भूतेषु संपत्तिर्या प्रतीयते साऽतो निरुक्तात्मोपगमोत्तरं साऽपि प्राणस्य स्ववृत्त्यभिमान्यात्माभिमानविषयत्वं स्ववृत्त्यधीनव्यापारकत्वं चेत्युभयरूपेति भावः ॥ ५ ॥

नैकस्मिन्दर्शयतो हि ॥ ६ ॥ ( ३ ) इति ।

यद्यपि तेजसीति श्रुतं तथाऽपि तस्य पञ्चभूतसूक्ष्माणामुपलक्षकत्वात्तेष्वेव साध्यक्षः प्राणस्तिष्ठति न त्वेकस्मिंस्तेजसि । हि यस्मात् '*पृथिवीमय आपोमयस्तेजोमयो वायुमय आकाशमयः*' [ बृ० ४ । ४ । ५ ] इति श्रुतिः ।

'अण्व्यो मात्राऽविनाशिन्यो दशार्धानां तु याः स्मृताः ।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः'

इत्यादिस्मृतिश्चामुमर्थं दर्शयतः ॥ ६ ॥ ( ३ )

समाना चाऽऽसृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ ( ४ ) इति ।

सेयमुत्क्रान्तिर्निर्गुणविदि निषिद्धाऽपि सगुणविदः समाना निर्विद्यसाधारणी । चो हेतौ । सृतिर्दक्षिणोत्तरमार्गस्तदुपक्रममभिव्याप्य यतः सा वर्तते । ननु 'विद्ययाऽमृतमश्नुते' [ ईशावा० ११ ] इति श्रुतेः सगुणविदो न सृत्युपक्रमस्तच्छ्रुतिरप्यत एव स्तुतिपरेत्यत्राऽऽह अमृतत्वमिति । 'स एकधा भवति द्विधा भवति' [ छा० ७ । २६ । २ ] इत्यादिनानाविधसगुणविद्याफलश्रुतेस्तद्भोगानुरोधेन सृतेरावश्यकत्वात्तदुपक्रमात्पूर्वमविद्यामनुपोष्यादग्ध्वैव भोगानन्तरमेव सगुणविदोऽमृतत्वमित्यर्थः ॥ ७ ॥ ( ४ )

ननूक्ता फलश्रुतिर्भोगश्रुतिश्चाविद्वद्विषयैव भविष्यति 'तेजः परस्याम्' [ छा० ६ । ८ । ६ ] इत्यनेन विदुषः प्राणादिसहितस्य तेजस

आत्यन्तिकलयोक्तेः परदेवताया ब्रह्मणः सर्वप्रकृतित्वेन तत्संपत्तेस्तथात्वस्य स्वरसतः प्रतीयमानस्य त्यागे मानाभावात्तत्राऽऽह—

तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥ इति ।

तत्तेजःशब्दितं प्राणादिविशिष्टं भूतसूक्ष्मजातमाऽपीतेर्मोक्षपर्यन्तमवतिष्ठते ।

' योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् '

[ कठ० २।२।७ ] इत्यादिना विद्वदविद्वत्साधारण्येन संसारव्यपदेशात्, निर्गुणविद्यां विनाऽविद्याया अनिवृत्तत्वेन तत्कार्यस्य तेजआदेरात्यन्तिकलयासंभवाच्च ॥ ८ ॥

ननु तेजआदिकमुत्क्रामत्तत्कुतो नोपलभ्यते कुतो वा पिहितद्वारगृहाद्गच्छेत्तत्राऽऽह—

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥ इति ।

भूतसूक्ष्मजातं सूक्ष्ममतीन्द्रियं चकाराद्गृहादिभिरप्रतिहतं प्रमाणत उत्क्रान्त्यादिश्रुत्यन्यथानुपपत्त्यादिरूपादविदुषामुत्क्रान्तिस्थले सूक्ष्मताया अप्रतीघातस्य च लौकैरप्युपलब्धेर्निर्णयात् ॥ ९ ॥

नोपमर्देनातः ॥ १० ॥ इति ।

अतः स्थूलदेहात्तस्य वैलक्षण्यादेव स्थूलदेहस्योपमर्देन दाहादिना नास्य सः ॥ १० ॥

अविद्वदुत्क्रान्तिस्थले भूतसूक्ष्माणामुत्क्रान्तिं निश्चित्य तदनुपलम्भादिना तदीयसूक्ष्मत्वाप्रतिघातानुमानमुत्क्रान्तिलिङ्गं च संभवतीत्याह—

अस्यैव चोपप*त्तेरूष्मा ॥ ११ ॥ ( ५ ) इति ।

अस्य भूतसूक्ष्मजातस्यैवोष्मा यो जीवच्छरीर उपलभ्यते न स्थूलशरीरस्य मृतशरीरेऽपि तदुपलम्भापत्तिरूपाया उपपत्तेः । अत एव श्रुतिः—'उष्ण एव जीविष्यञ्शीतो मरिष्यन् ' इति । इत्यासिद्धा विद्वदविद्वत्साधारण्युत्क्रान्तिः ॥ ११ ॥ ( ५ )

---

* मुद्रितब्रह्मसूत्रभाष्ये त्तेरेष ऊष्मा इति पाठः ।

---

१ क. 'दभीपा' । २ ग. च लौकिकै । ३ ख. 'ना ५।१ ।

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥ इति ।

नन्वेवं निर्गुणविदोऽप्युत्क्रान्तिः स्यात् 'न तस्य प्राणा उत्क्रामन्ति' [ बृ० ४ । ४ । ६ ] इति कण्वश्रुत्या प्रतिषेधान्न तस्य सेति चेन्न । यतो 'न तस्मात्प्राणा उत्क्रामन्ति' इतिमाध्यंदिनश्रुत्या प्रधानीभूताच्छारीराज्जीवादेवोत्क्रान्तिर्निषिध्यते तदनुसारेण कण्वश्रुतावपि तथैवार्थः । तथा च विदुषो जीवात्प्राणा नोत्क्रामन्ति किंतु सहैव जीवेन देहादुत्क्रम्य ब्रह्मलोके गत्वा जीर्णं त्यजन्तीति भावः ॥ १२ ॥

स्पष्टो ह्येकेषाम् ॥ १३ ॥ इति ।

नेत्यनुषङ्गः । नैवं वाच्यम् । हि यस्मादेकेषां माध्यंदिनानां 'न तस्मात्प्राणा उत्क्रामन्ति' 'स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते' । [ बृ० ३ । २ । ११ ] इतिवाक्य निषिध्यमानोत्क्रान्त्यपादानस्योच्छ्वयनाद्यसाधारणदेहधर्मोक्तेर्देहत्वनिश्चयाज्जीवस्य प्राधान्येऽपि तद्भेदमुपचर्योक्तवाक्यस्थतत्पदयोर्देहपरत्वादन्यथा न तस्येत्यादिश्रुतौ तस्येतिषष्ठ्या अपादानत्वलक्षणापत्तेः । प्राप्तदेहापादानकोत्क्रान्तिनिषेधतत्त्वेनोपचारस्यादोषत्वाच्च । देहापादानकोत्क्रान्तिनिषेधः स्पष्ट एव ॥ १३ ॥

स्मर्यते च ॥ १४ ॥ (६) इति ।

'नोत्क्रामन्ति मुनेः प्राणा व्यापी सर्वगतो हि सः ।
तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति' ॥

इति स्मर्यतेऽपि । चकारात्प्रारब्धस्य प्रतिबन्धकस्य क्षयेऽन्तःकरणादेरात्यन्तिकलयस्याऽऽवश्यकत्वेन न निर्गुणज्ञस्योत्क्रान्तिसंभवः । शुकादीनां तु योगमाहात्म्यदर्शनायाऽऽदित्यमण्डलगमनं नोत्क्रान्त्या । अत एव—

'दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवत्'

इत्युक्तं शुकनिर्याणे ॥ १४ ॥ ( ६ )

ननु 'न तस्य प्राणा उत्क्रामन्ति' [ बृ० ४ । ४ । ६ ] 'अत्रैव समवनीयन्ते' [ बृ० ३ । २ । ११ ] इत्यत्र प्राणानां लय उक्तः स च तदुपादानभूतसूक्ष्मेषु 'गताः कलाः पञ्चदश प्रतिष्ठाः' [ मु० ३।२।७ ] इति श्रुतौ तेषामेव प्रकृत्यर्थकप्रतिष्ठाशब्दितत्वात्स्वप्रकृतावेव लय इति

न्यायाच्च । तथा चाऽऽत्यन्तिकलयाभावात्पुनरपि संसारापत्त्या कथं ब्रह्मज्ञस्यानुत्क्रान्तिरुक्ता तत्राऽऽह—

तानि परे तथा ह्याह ॥ १५ ॥ (७) इति ।

तानि ब्रह्मज्ञस्य वागादीनि परे ब्रह्मणि लीयन्ते । हि यस्मात् 'इमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति ' [ प्र० ६ । ५ ] इति श्रुतिस्तथाऽऽह । तथा चोभयश्रुत्यनुरोधेन भूतसूक्ष्मेषु लीनानां ब्रह्मणि लयः कल्प्यत इति भावः । [ *ज्ञानक्रियाशक्तिमात्रभेदेन मनःप्राणयोर्भेदेऽपि पूर्वश्रुतौ मनःप्राणपञ्चकयोरेव भेदविवक्षया कलानां पञ्चदशत्वमुक्तम् ] ॥ १५ ॥ (७)

ननु ब्रह्मणि तज्ज्ञस्य कलानां लयोऽप्यस्तु सावशेष उत्क्रान्तिवत्तत्राऽऽह—

अविभागो वचनात् ॥ १६ ॥ ( ८ ) इति ।

अविभागो निःशेषः स लयोऽप्रतिबद्धविद्यामाहात्म्यानुगृहीतात्कलाप्रलयोक्त्यनन्तरात् ' भिद्येते चाऽऽसां नामरूपे ' [ प्र० ६ । ५ ] इति वचनात् । तस्य च नामरूपनाशोक्तिद्वारा पूर्वोक्तकलाप्रलये निरवशेषत्वतात्पर्यकत्वात् ॥ १६ ॥ ( ८ )

निर्गुणविषयामपवादचिन्तां समाप्य सगुणविषयं सूत्रमुपक्रमं प्रागुपन्यस्तं विवेचयति—

तदोकोग्रज्वलनं तत्प्रकाशितद्वारो
विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति-
योगाच्च हार्दानुगृहीतः शताधिक-
या ॥ १७ ॥ ( ९ ) इति ।

तस्योपसंहृतवागादेर्जीवस्योच्चिक्रमिषत ओक आयतनं ' स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ' इतिश्रुतेर्हृदयस्वरूपमग्रज्वलनमग्रे द्योतमानं भवति तत्प्रकाशितचक्षुरादिद्वारः सन्स जीवो निष्क्रामति ' तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः ' [ बृ० ४ । ४ । २ ] इति श्रुतेः । अग्रे प्रद्योतनं चाग्रावच्छेदेन

---

* एतच्चिह्नान्तर्गतोऽयं ग्रन्थः ख. पुस्तकस्थः ।

तत्तद्द्वारकरणकोत्क्रान्त्यनुकूलप्राणादिवृत्तिः । हार्देन मानसेन सगुणोपासनेनानुगृहीतो युक्तस्तु जीवः शतनाडीभ्योऽधिकया मूर्धन्यनाड्या निष्क्रामति न त्वन्यया विद्यासामर्थ्यानुरोधात् । अन्यथा नाड्यन्तरेणोत्क्रान्तौ ब्रह्मलोकादिभिन्नलोकस्यैव प्राप्यत्वेन ब्रह्मलोकादिप्रापकस्य विद्यासामर्थ्यस्य हान्यापत्तेः । सा विद्या शेषो हेतुर्यस्य फलस्य तद्गतिस्तत्प्रकरणं तत्संबन्धात् । 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति ' [ छा० ८ । ६ । ६ ] इतिश्रुत्या विद्याफलप्रकरणे तन्नाड्या उक्तत्वादनुस्मर्यतेऽनेनेत्यनुस्मृतिरुक्तवाक्यं तस्मात् । योगो ब्रह्मनाडीतियौगिकशब्दरूपसमाख्या तस्मात् । तथा च प्रकरणवाक्यसमाख्याभिर्विद्याफलाप्त्यर्थं मूर्धन्यनाडी नियम्यते तत्फलस्य च नाड्यन्तरपरिसंख्याया आर्थिकत्वाददोषत्वमिति भावः ॥ १७ ॥ (९)

रश्म्यनुसारी ॥ १८ ॥ इति ।

मूर्धन्यनाड्योत्क्रामन्रविरश्मिमालम्ब्य गच्छति । 'अथ या एता हृदयस्य नाड्यः ' [ छा० ८ । ६ । १ ] इत्युपक्रम्य नाडीरश्मिसंबन्धमुक्त्वा 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते ' [ छा० ८ । ६ । ५ ] इत्युक्त्वा 'तयोर्ध्वमायन्नमृतत्वमेति ' [ छा० ८ । ६ । ६ ] इत्यस्योक्तत्वात् ॥ १८ ॥

निशि नेति चेन्न संबन्धस्य यावद्देहभा-
वित्वाद्दर्शयति च ॥१९॥ (१०) इति ।

ननु निशि न नाडीरश्मिसंबन्धस्तथा च निशि प्रेतानां दिवापेक्षणे देहस्य रात्रौ दाहादिना नाडीरश्मिसंबन्धस्यासंभवाद्रश्मिद्वाराऽऽदित्यमार्गेण विद्याफलाप्त्यसंभव इति चेन्न । नाडीरश्मिसंबन्धस्य यावद्देहभावित्वात् । चो हेतौ । 'अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः [ छा० ८ । ६ । २ ] इति श्रुतिर्यस्मात्तथा दर्शयति । तथा चोक्तश्रुतेः कालाविशेषेण रश्मिसंबन्धबोधकत्वादन्यथा विद्यायाः पाक्षिक-

फलत्वापाताद्नुपलभ्यमानसूक्ष्मरश्मिसंबन्धसत्त्वे बाधकाभावाच्च न दोष इति भावः ॥ १९ ॥ (१०)

अतश्चायनेऽपि दक्षिणे ॥ २० ॥ इति ।

अतः फलमुद्दिश्य विद्याविधायकशास्त्रान्यथानुपपत्तेरेव दक्षिणेऽयने प्रेतोऽपि विद्वानुत्तरायणाद्यभिमानिदेवताघटितमार्गेण गच्छत्येव । उत्तरायणस्य प्राशस्त्यप्रसिद्धिस्त्वविद्वद्विषया । भीष्मस्योत्तरायणापेक्षाऽपि पितृप्रसादलब्धस्वच्छन्दमृत्युताख्यापनाय ॥ २० ॥

ननु—

'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥
धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' [ भ॰ गी॰ ८।२४।२५ ]

इति रात्रिदक्षिणायनप्रेतानां पुनरावृत्तिः स्मर्यते तत्राऽऽह—

योगिनः प्रति च स्मर्यते स्मार्ते चैते ॥ २१ ॥ (११) इति ।

एते आवृत्त्यनावृत्ती स्मार्ते योगस्मृत्युक्तानुष्ठानफले न तु श्रुत्युक्तविद्याफले । यतः—

'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ' [ भ॰ गी॰ ८।२३ ]

इत्युपक्रम्य योगानुष्ठानवतः प्रति तदुभयं स्मर्यते । तथा च विषयभेदादविरोधः । चकारात्स्मृतेरप्यहराद्यभिमानिदेवतापरत्वे सुतरामविरोधः । तस्माद्रात्राविव दक्षिणायनेऽपि प्रेतेन विदुषा विद्याफलं लभ्यत एव ॥ २१ ॥ ( ११ )

इति चतुर्थाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## अथ चतुर्थाध्यायस्य तृतीयः पादः ।

---

उत्क्रान्तस्य विदुषो देवयानपथनिरूपणं तृतीयार्थः । तत्र 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमते' [ छा॰ ८ । ६ । ५ ] इत्येवकारेणान्यव्यव-

च्छेदात् ‘ स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छति ’ [ छा० ८ । ६ । ५ ) इति क्षिप्रतानिर्देशस्य विलम्बितमार्गान्तरसूचकत्वाद्भिन्नोपासनशेषत्वाद्भिन्नप्रकरणस्थत्वाच्च नानाविधमार्गा इति प्रत्याह—

अर्चिरादिना तत्प्रथितेः ॥ १ ॥ ( १ ) इति ।

सर्वोऽपि विद्वानर्चिरादिघटितेनैकेनैव मार्गेण गच्छति । पञ्चाग्निविद्याप्रकरणे ‘ये चेमेऽरण्ये श्रद्धा᳚सत्यमित्युपासते तेऽर्चिषमेवाभिसंभवन्त्यर्चिषोऽहः’ [छा०५।१०।१] इत्यादिश्रुत्या विद्यान्तरवतामपि तस्य मार्गस्य प्रथितेरुक्तत्वात् । तथा च रश्म्यहर्वायुसूर्यादयो यद्यपि सर्वे तत्तद्विद्याप्रकरणेषु नोक्तास्तथाऽपि घटकत्वेन गुणीभूतस्य रश्म्यादेर्भेदेन प्रधानस्य मार्गस्य भेदायोगात्कल्पनालाघवाद्बहुल्पघटितमार्गाणामसमानबलत्वेन विकल्पासंभवात् ‘ एतैरेव ’ [ छा० ८ । ६ । ५ ] इत्यादे रश्मिप्रापकत्वबोधकस्यान्यव्यवच्छेदकत्वे वाक्यभेदापत्त्या रश्मिशब्दप्राप्तस्य रश्म्ययोगव्यवच्छेदस्यानुवादकत्वात्क्षिप्रनोक्तेश्च पितृयाणावच्छिन्नचन्द्रगमनापेक्षिकत्वाद्भिन्नोपासनाशेषत्वेऽपि भिन्नकर्मशेषाहवनीयादिवद्भूमेदे बाधकाभावाद्घटकैकदेशप्रत्यभिज्ञानादेक एव देवयानमार्ग इति भावः ॥ १ ॥ ( १ )

वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥ ( २ ) इति ।

‘ अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासा᳚स्तान्’। [छा०५।१०।१] ‘मासेभ्यः संवत्सर᳚ संवत्सरादादित्यमादित्याच्चन्द्रमसम् ’ [छा० ५ । १० । २] इत्यर्चिरादिपरम्परया गच्छ संवत्सरशब्दिताब्दादनन्तरं वायुं गच्छति । ‘ स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वमाक्रमते स आदित्यमागच्छति ’ [ बृ० ५ । १० । १ ] इति विशेषलाभात् । ‘ अग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् ’ [ कौषी० १ । ३ ] इति कौषीतकिश्रुतेरग्निलोकशब्दितादर्चिषोऽनन्तरं तु न वायुं गच्छत्यानन्तर्यबोधकशब्दादिविशेषाभावात्पाठक्रमस्य पूर्वोक्तश्रौतक्रमादौर्बल्यात् । ‘ मासेभ्यो देवलोकं देवलोकादादित्यम् ’ [ बृ० ६ । २ । १५ ] इति वाजसनेयश्रुत्युक्तं देवलोकानन्तर्यमपि वायुव्यवहितं छिद्र-

१ ख. ‘द्भन्यप’ । २ ख. ‘द्भितदेशादन’ । ३ ख. ‘रं न तु वा’ । ४ ख. ‘कादान’ ।

दानरूपोपपादकसहितस्य मास्यानन्तर्यस्याव्यवहितत्वौचित्यात् । एवं मासानन्तर्यमपि संवत्सरेण व्यवहितमुक्तश्रुत्यनुरोधात् । न च देवलोकानन्तरमेव संवत्सरः कुतो न स्यादिति वाच्यम् । छान्दोग्ये देवयाने 'मासेभ्यः संवत्सरम्' इत्युक्त्वा पितृयाणेऽपि संवत्सरस्य मासानन्तर्यप्रसक्तौ 'यान्षड्दक्षिणैति मासाꣳस्तान्नैते संवत्सरमभिप्राप्नुवन्ति' [ छा० ५ । १० । ३ ] इत्यनेन तन्निषिध्य 'मासेभ्यः पितृलोकम्' [ छा० ५ । १० । ४ ] इत्यनेन संवत्सरानन्तरत्वेन श्रुत्यन्तरप्राप्ते देवलोकस्थाने पितृलोकस्योक्तत्वात् ॥ २ ॥ ( २ )

तडितोऽधि वरुणः संबन्धात् ॥ ३ ॥ ( ३ ) इति ।

'आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम्' [ छा० ४ । १५ । ५ ] इत्यत्रोक्तायास्तडितोऽप्युपरि वरुणोपलक्षिता वरुणेन्द्रप्रजापतयो गच्छता क्रमेण लभ्यन्ते । वरुणस्य विद्युत्संबन्धिजलाधिष्ठातृत्वेनाऽऽगन्तुकानामन्ते निवेश इतिन्यायेन च वरुणादीनां विद्युत आनन्तर्यरूपसंबन्धलाभात् ॥ ३ ॥ ( ३ )

आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥ इति ।

'तेऽर्चिषम्' [छा०५ १०।१] इत्यादिश्रुतावर्चिरादिशब्दिता अर्चिराद्यभिमानिन्य उत्क्रान्तस्य पुरुषस्याऽऽतिवाहिका उत्तरोत्तरस्थानप्रापिका देवताः । 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति' [ छा० ४।१५।५ ] इत्यस्मिन्नुक्तश्रुतिशेषे विद्युल्लोकाद्वाहकपुरुषस्यामानवत्वविशेषणस्यार्चिरादिस्थानाद्वाहकस्य मानवत्वसूचकतया तल्लिङ्गत्वाद्वाक्यशेषोक्तवाहकचेतनत्वदर्शनेन पूर्वत्र सामान्यवाक्येऽपि तथा कल्पनाच्च ॥ ४ ॥

उभयव्यामोहात्तत्सिद्धेः ॥ ५ ॥ इति ।

अर्चिरादिपदार्था न निश्चेतना उभयोरुत्क्रान्तजीवस्य स्थूलदेहशून्यस्यार्चिरादिस्थानस्य चाचेतनस्य व्यामोहादप्रयत्नत्वात्तस्याभिमानिदेवतात्वस्य सिद्धेः । चेतनमन्तरेणाप्रयत्नस्य गमनासंभवादहःशुक्लपक्षोत्तरायणानां कालान्तरमेतं प्रति मार्गघटकत्वानुपपत्तेश्चेति भावः॥५॥

---

१ ख. 'त्तरूपक' । २ ख. 'शेषे वा' ।

नन्वेवं वरुणादीनामप्यातिवाहिकदेवतात्वे विद्युल्लोकादमानवपुरुषेण नयनं श्रौतं विरुद्धं तत्राऽऽह—

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ६ ॥ ( ४ ) इति ।

ततो विद्युतोऽमानवपुरुषेण नीयत एव तद्बोधकश्रुतेः । वरुणादीनां तु तत्प्रतिबन्धाकरणादिद्वाराऽऽतिवाहिकदेवतात्वमित्युभयाविरोधः । तस्मादेतादृशो मार्गो विदुषां चिन्त्यो गतिहेतुश्चेति सिद्धम् ॥ ६ ॥

मार्गं निरूप्य तेन प्राप्तव्यं निरूपयति—

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ७ ॥ इति ।

कार्यमुपासनाविषयतत्तद्गुणविशिष्टं ब्रह्म प्राप्यमस्यैव गम्यत्वोपपत्तेः । निरु( रु )पाधिकस्य नित्यप्राप्तत्वात् ' न तस्य प्राणा उत्क्रामन्ति ' [ बृ० ४ । ४ । ६ ] इत्यादिना गतिं विनैव तदाप्त्युक्तेः । तदाप्तेरेकरसत्वेनोपासनातारतम्याधीनतारतम्यानुपपत्तेः । जीवे ब्रह्मणो विकारत्वमवयवत्वं वा प्रकल्प्य गतिकल्पने ' निष्कलं निष्क्रियम् ' [ श्वे० ६ । १९ ] इत्यादिश्रुतिविरोधाद्विकारिण्यवयविनि च नित्याप्त्यावश्यकत्वान्मोक्षे स्वरूपनाशप्रसङ्गात् ' नात्र काचन भिदाऽस्ति ' [ नृसिंह० ता० ८ ] इत्याद्यत्यन्ताभेदबोधकश्रुतिजातविरोधाच्च । तत्त्वसाक्षात्कारं विना प्रथमत एव कैवल्यानुपपत्तेश्च ॥ ७ ॥

विशेषितत्वाच्च ॥ ८ ॥ इति ।

' ब्रह्मलोकान्गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति ' [ बृ० ६ । २ । १५ ] इत्यत्र ब्रह्मलोकशब्देन सत्यलोकरूढेन यौगिकत्वेऽपि प्रयोगप्राचुर्यात्प्रथमतस्तस्यैवोपस्थापकेन गम्यस्य विशेषितत्वाद्ब्रह्मैव लोक इत्यर्थं आधारसप्तम्यनुपपत्तेः । ' तृतीयस्यामितो दिवि ' [ छा० ८ । ५ । ३ ] इत्यनेन भूलोकात्तृतीयलोकस्य भोगाधिकरणत्वोक्तेः । ' प्रजापतेः सभां वेश्म प्रपद्ये ' [ छा० ८ । १४ । १ ] ' तदैरंमदीयꣳ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितꣳ हिरण्मयम् ' [ छा० ८ । ५ । ३ ] इत्यादिना पञ्चाग्निविद्यायां ' शुद्धः पूतः पुण्यलोको भवति ' [ छा० ५ । १० । १० ] इत्यादिना च विशेषितत्वात् । परावतः पराङ्श्रेष्ठान्स्वोपासकानवतीति

१ ग. °पत्तेन ।

परावन्ब्रह्मा तस्य लोकेषु। अथ वा परावतः परवन्तः पराधीना ब्रह्मानुगता इत्यर्थः॥ ८॥

सामीप्यात्तु तद्व्यपदेशः॥ ९॥ इति।

यद्यपि ब्रह्मशब्दोऽनवच्छिन्ने ब्रह्मणि मुख्यस्तथाऽपि वास्तवतदभेदरूपात्सामीप्यादन्यथोक्तानुपपत्तेश्च 'स एतान्ब्रह्म गमयति' [ छा० ४।१५।५ ] इत्यत्र तस्य सोपाधिकस्यैव व्यपदेशः। यद्वा सोपाधिकस्य पश्चान्निरुपाधिप्रापकत्वेन तत्सामीप्यात्तत्र तद्व्यपदेशस्तदभेदोपचारः॥ ९॥

नन्वेवम् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते' [ छा० ४।१५।५ ] 'तेषामिह न पुनरावृत्तिः' [ बृ० ६।२।१५ ] 'तयोर्ध्वमायन्नमृतत्वमेति' [ छा० ८।६।६ ] इत्यादावनावृत्तिर्वर्तमानामृतत्वाप्तिश्च विरुध्येत कार्यब्रह्मप्राप्तावावृत्तेर्वर्तमानामृतत्वाभावस्य चाऽऽवश्यकत्वात्। न चेममितीहेतिपदस्वारस्यात्कल्पान्तर आवृत्तिर्लभ्यत इति वाच्यम्। इदमो वर्तमानैकल्पजातीयार्थकत्वेन कल्पान्तरेष्वप्यनावृत्तिलब्धेः। अन्यथा पुरोवर्तिनोऽस्थिरत्वेन तदर्थकत्व एतत्कल्पेऽप्यनावृत्त्यलाभापत्तेरत आह—

कार्यात्यये तदध्यक्षेण सहातः पर-<br>मभिधानात्॥ १०॥ इति।

अभिधानाद्रुक्तश्रुतेरतः कार्यब्रह्मणः परं ब्रह्म प्राप्यमिति यल्लभ्यते तत्कार्यस्य ब्रह्मलोकस्यात्यये प्रलये तदध्यक्षेण हिरण्यगर्भेण सह न तु द्रागेव तत्र तेषां भोगश्रुतेरमृतत्वाप्तिहेतुतत्त्वज्ञानार्थं तल्लोके वेदान्तश्रवणाद्यपेक्षणाच्च। अत एव 'आयन्नमृतत्वमेति' इत्यत्र वर्तमानत्वमविवक्षितमायनामृतत्वाप्त्योरेककर्तृकत्वमात्रस्य विवक्षितत्वात्। तस्मात्कार्यब्रह्मणो गम्यत्वेऽप्यनावृत्त्यमृतत्वाप्तिश्रुतीनामविरोधः॥ १०॥

स्मृतेश्च॥ ११॥ इति।

'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।<br>परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्'

इति स्मृतेरप्येतदर्थनिश्चयः। प्रतिसंचरे प्रलये॥ ११॥

१ ख 'त्र ब्रह्म'। २ ख 'मभा'। ३ ख 'तत्मा'।

दूषयितुं जैमिनेः पूर्वपक्षं सूचयति—

परं जैमिनिर्मुख्यत्वात् ॥ १२ ॥ इति ।

'ब्रह्म गमयति' [ छा० ४ । १५ । ५ ] इत्यत्र गम्यं परं निरुपाधिकमेव तत्रैवानवच्छिन्नबोधकब्रह्मशब्दस्य मुख्यत्वादिति जैमिनिर्वक्ति ॥ १२ ॥

दर्शनाच्च ॥ १३ ॥ इति ।

'नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' [ छा० ८ । १४ । १ ] इत्यादिना शुद्धब्रह्म प्रकृत्य 'प्रजापतेः सभां वेश्म प्रपद्ये' [ छा० ८ । १४ । १ ] इत्यादिनोक्ताया वेश्मप्रतिपत्तेर्हार्दविद्यायां गतिमत्त्वां 'तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम्' [ छा० ८ । ५ । ३ ] इत्यादिनाऽपि निर्देशदर्शनात्कठवल्लीषु परविद्याप्रकरणेऽपि गतिनिर्देशदर्शनाच्च ॥ १३ ॥

बादरिमते स्वसंमतिपर्यवसानाय जैमिनिमतं दूषयति—

न च कार्ये प्रतिपत्त्यभिसंधिः ॥ १४ ॥ ( ५ ) इति ।

नैवम् । चो हेतौ । यतः कार्ये सोपाधिके ब्रह्मणि गम्येऽपि वेश्मप्रतिपत्त्यभिसंधानं संभवति । पूर्ववाक्यस्य शुद्धब्रह्मविषयस्य विच्छेदस्वीकारात्कठवल्लीषु च परविद्यास्तुत्यर्थमपरविद्यागतगत्युक्तेः 'विष्वङ्ङन्या उत्क्रमणे भवन्ति' [ छा० ८ । ६ । ६ ] इतिवत् । न च कार्ये प्रतिपत्त्यभिसंधिरित्यन्यथानुपपत्तेरुक्तत्वाच्च ॥ १४ ॥ ( ५ )

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाऽदोषात्तत्क्रतुश्च ॥ १५ ॥ इति ।

'ये चामी अरण्ये श्रद्धां सत्यमुपासते' [ बृ० ६ । २ । १५] इत्युपक्रम्य विद्युदन्तमर्चिरादिमार्गमुक्त्वा 'ब्रह्मलोकान्गमयति' [ बृ० ६ । २ । १५ ] इत्युक्ते सत्यशब्दितब्रह्मोपासकस्य कार्यब्रह्मप्राप्तिलाभाद्ब्रह्मत्वेन मनआदिप्रतीकोपासकान्विद्युल्लोकागतपुरुषो न ब्रह्मलोकं प्रति नयति किंतु तदन्यान् । एवमपि 'अनियमः सर्वासाम्' [ ब्र० सू० ३ । ३ । ३१ ] इत्यादिसूत्रमप्यप्रतीकालम्बनानामेव ब्रह्मलोकगतिव्यवस्थापकमिति प्रतीकोपासकानां ब्रह्मोपासकानां चोभयथा द्विधा व्यवस्थाङ्गीकारे दोषाभावात् । ननु च्छान्दोग्ये 'ये चेमेऽरण्ये श्रद्धा

तप इत्युपासते ' [ छा० ५ । १० । १ ] इत्युपक्रम्य ' एतान्ब्रह्म गमयति ' [ छा० ५ । १० । २ ] इत्युक्तेः ' न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ' इति श्रुत्यन्तरमनुरुध्य श्रद्धातपःशब्दयोर्विद्यावन्मात्रपरत्वनिर्णयात्प्रतीकोपासकानामपि ब्रह्मलोकाप्तिरावश्यकी, अन्यथा तेषां विद्युल्लोकपर्यन्तगमनसिद्धान्तस्यापि दुर्लभत्वात्तत्राऽऽह– तत्क्रतुश्चेति । ' तं यथा यथोपासते तदेव भवन्ति ' इतिश्रुतेस्तस्मिन्कार्यब्रह्मणि क्रतुरुपासनं यस्य स एव तत्प्राप्तुमर्हति न तु तत्त्वेन मनआदेरुपासकः । चो हेतौ । तथा चोक्तश्रुतावेतानित्यस्य प्राधान्येन प्रक्रान्तपञ्चाग्निविदामेव परामर्शकत्वात् ' तदारोहन्ति यत्र कामाः परागताः ' ' न तत्र दक्षिणा यन्ति ' इत्यादिसामान्यश्रुतेरपि तत्क्रतुन्यायमनुरुध्य देवयानारोहमात्रपरत्वेन प्रतीकोपासकानां न ब्रह्मलोकाप्तिरपि तु सामान्यश्रुत्यनुरुद्धविद्युल्लोकान्तर्गतमार्गाभिधायिच्छान्दोग्यश्रुतिबलाद्विद्युल्लोकपर्यन्तदेवयानारोहणम् । पञ्चाग्निविदां तु ब्रह्मलोकाप्तेर्वाचनिकत्वेन न तत्क्रतुन्यायबाध्यता । दक्षिणा दक्षिणायुक्तकर्मानुष्ठायिनः ॥ १५ ॥

विशेषं च दर्शयति ॥ १६ ॥ ( ६ ) इति ।

प्रतीकोपासनेषु ' यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति ' [ छा० ७ । १ । ५ ] ' यावद्वाचो गतं तत्रास्य यथाकामचारः ' [ छा० । ७ । २ । २ ] इत्यादिना फलविशेषं दर्शयति । ' नामोपास्स्व ' [ छा०७ । १ । ४ ] इत्यादिना च नामादीनामेवोपास्यत्वोक्त्या तदुपासनस्य ब्रह्मोपासनाद्विशेषं दर्शयति । ततश्च न तेषां ब्रह्मलोकाप्तिः फलं न वा ब्रह्मोपासकत्वमिति भावः ॥ १६ ॥ ( ६ )

इति चतुर्थाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

## अथ चतुर्थाध्यायस्य चतुर्थः पादः ।

---

निर्गुणज्ञस्य प्राप्यं विवेचयति–

संपद्याऽऽविर्भावः स्वेन शब्दात् ॥ १ ॥ इति ।

' अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ' ( छा० ८ । ३ । ४ ) इति मोक्षप्रतिपादकश्रुत्या परं

---

१ ख. 'नावरो' । २ ख. 'नावरो' ।

ज्योतिरुपसंपद्याभेदेन साक्षात्कृत्य स्थितस्य पुरुषस्य पूर्वस्थितेन स्वरूपेणाऽऽविर्भावो भवतीत्युच्यते न त्वभिनिष्पद्यत इत्यस्योक्तार्थकत्वात्स्वरूपस्य च सहजसिद्धत्वात्स्वशब्दस्यापि स्वीयार्थत्वादागन्तुकेन केनचिद्धर्मेण स्वकीयेन निष्पद्यत इत्यर्थः। स्वेनेतिशब्दात्तस्याऽऽगन्तुकधर्मस्य स्वीयत्वस्यार्थादेव लब्धत्वात्तदुक्तिवैयर्थ्येन स्वेनेतिशब्दस्य वैयर्थ्यात्। सिद्धान्ते तु सगुणविद्यावन्निर्गुणविद्यायाः फलस्याप्यागन्तुकत्वप्रसक्तौ तद्व्यवच्छेदपरत्वात्स्वेनेत्यस्य सार्थक्यम्। अभिनिष्पद्यत इति तु विद्याया असत्त्वे स्वरूपस्याप्यविद्यारूपोऽभावः, विद्यायाः सत्त्वे स्वरूपसत्त्वमिति क्षैमिकजन्यतारूपाविर्भावबोधकत्वादविरुद्धम्। तादृशीमेव जन्यतां प्रतिसंधाय प्रवर्तन्ते मुमुक्षवः। तिरोधायकाज्ञानतत्कार्यनिवृत्तिरूप आविर्भाव एव वा स्वरूपमात्रपर्यवसन्नोऽभिनिष्पद्यर्थः। स्वरूपस्य च सहजसिद्धत्वेऽपि विस्मृतकण्ठचामीकरवत्साध्यत्वमज्ञानेन प्रतिसंधते प्रवर्तमानाः। तत्त्वसाक्षात्कारपर्यन्तमज्ञानकृतस्याहं संसारी शुद्धब्रह्मस्वरूपत्वं ममासिद्धमित्यपरोक्षभ्रमस्य शास्त्रयुक्त्यधीनपरोक्षज्ञानानिवर्त्यस्य जागरूकत्वात्। तथा च तत्त्वज्ञः स्वरूपेणैव जायते न त्वागन्तुकफलवत्तयेति स्वरूपात्मकाज्ञानतत्कार्यनिवृत्तिमात्रत्वागन्तुकफलवानिति वा श्रुत्यर्थ इति भावः ॥ १ ॥

पूर्ववाक्यपर्यालोचनादप्युक्तश्रुतेरविद्यातत्कार्यनिवृत्तिमानेव प्रतिपिपादयिषितो न त्वागन्तुकधर्मान्तरवानित्याह—

मुक्तः प्रतिज्ञानात् ॥ २ ॥ इति।

अविद्यातत्कार्याभ्यां मुक्तस्त्यक्त एव तत्त्वज्ञ उक्तश्रुतेः प्रतिपिपादयिषितः। 'अन्धो भवत्यपि रोदितीव' [ छा० ८। १०। २ ] 'विनाशमेवापीतो भवति' [ छा० ८। ११। १ ] इत्यादिनेन्द्रेणावस्थात्रयकलुषितस्य कथमपहतपाप्मादिलक्षणात्मत्वमित्याक्षेपे कृते 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' [ छा० ८। ११। ३ ] इत्यनेनावस्थात्रयहेत्वविद्यादिरहितस्यैव प्रजापतिना व्याख्येयत्वेन प्रतिज्ञानात्पश्चादपि 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' [छा० ८।१२।१] इत्युपन्यस्य 'स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' [छा०८।१२।३] इत्युपसंहारात्। वस्तुतस्तु स्वेन रूपेणाभिनिष्पत्तिः स्वरूपाज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वानधिकरणकालोपहितत्वम्। शुक्तिः पूर्वं रजतत्वेन ज्ञाता संप्रति स्वेन रूपेणाभिनिष्पन्नेत्यादिलौकिकप्रयोगे तथा प्रत्ययात्।

---

१ ख. 'रूपमात्रेणाऽऽ। २ ख. 'स्योत्पत्त्यर्थ'।

विवेचितं चेदं 'ज्योतिर्दर्शनात्' [ ब्र० सू० १।३।४० ] इतिसूत्रे प्रथमाध्याये । तादृशकालश्च स्वरूपस्याज्ञानतत्कार्यविरोधिज्ञानोत्पत्तिक्षण एव ॥ २ ॥

आत्मा प्रकरणात् ॥ ३ ॥ ( १ ) इति ।

ज्योतिःशब्दितस्तु ब्रह्मरूप आत्मैव 'य आत्माऽपहतपाप्मा विजरो विमृत्युः' [ छा० ८।७।१ ] इत्यादिना तस्यैव प्रकृतत्वात् 'तद्देवा ज्योतिषां ज्योतिः' [ बृ० ४।४।१६ ] इत्यादौ तत्रापि भासकत्वोपाधिना ज्योतिःशब्दप्रयोगात्परमित्यस्य च भासकान्तरस्य सूर्यादेर्भासकत्वमर्थः ॥ ३ ॥ ( १ )

अभेदेन ब्रह्मस्वरूपं परं ज्योतिः साक्षात्कुर्वन्नपि तद्भिन्नेन स्वस्वरूपेणाभिनिष्पद्यते 'ज्योतिरुपसंपद्य' [ छा० ८।३।४ ] इत्यादिना कर्मकर्तृभावादिरूपभेदनिर्देशात् । तत्त्वमस्यादिश्रुतीरभेदप्रतिपादिकाः साधनीभूतज्ञानसंबन्धिनीरपेक्ष्य प्रधानीभूतफलप्रतिपादकश्रुतीनां भेदद्योतिकानां बलवत्त्वादत एव पातञ्जलादिभिरपि मोक्षेऽपि परज्योतिर्भेदोऽङ्गी क्रियत इति प्रत्याह—

अविभागेन दृष्टत्वात् ॥ ४ ॥ ( २ ) इति ।

परज्योतिर्विभागशून्येनैव स्वरूपेणाभिनिष्पद्यते स्वरूपेणाभिनिष्पन्नस्य 'स उत्तमः पुरुषः' [ छा० ८।१२।३ ] इत्यनेन फलवाक्य एव परज्योतिरभेदनिर्देशस्य दृष्टत्वात्तत्त्वमस्यादिश्रुतीनामपि तदानुगुण्येनाभेदप्रमापकत्वाद्भेदकाज्ञाननिवृत्तावभिन्नेनैव स्वरूपेणाभिनिष्पत्तेरभ्यूहत्वात् ॥ ४ ॥ ( २ )

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ इति ।

स्वरूपेणाभिनिष्पद्यत इत्युक्तं तत्स्वरूपं ब्राह्ममैश्वरमपहतपाप्मत्वादिसत्यसंकल्पत्वान्तं सर्वज्ञत्वं सर्वेश्वरत्वं च 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः' [ छा० ८।७।१ ] इति प्रत्यगात्मस्वरूपोपन्यासात् । 'तस्य सर्वेषु लोकेषु कामचारो भवति' [ छा० ७।२५।२ ] इति 'स तत्र पर्येति जक्षत्क्रीडन्रममाणः' [ छा० ८।१२।३ ] इत्यादिनैश्वर्यावेदनात् 'यः सर्वज्ञः सर्वेश्वरः' इत्यादिव्यपदेशाच्चेति । न

चास्थूलादिवाक्यैर्नेति नेतीत्यादिवाक्यैश्च तत्त्वंपदार्थयोर्निर्विशेषत्वप्रमापनात्सत्यसंकल्पत्वादीनामस्वाभाविकत्वनिर्णयात्तैरभिनिष्पत्त्यसंभव इति वाच्यम्। उक्तवाक्यानां साधनकोटित्वेन प्राप्तिसापेक्षत्वेन च तदपेक्षया फलप्रत्यासन्नस्योक्तोपन्यासादेर्बलवत्त्वेन तत्स्वाभाविकत्वनिश्चायकत्वात्तदन्यविषये एव तत्प्रवृत्तेरिति जैमिनिर्वक्ति ॥ ५ ॥

चितितन्मात्रेण तदात्मकत्वा-
दित्यौडुलोमिः ॥ ६ ॥ इति ।

चितिरूपं यत्तन्मात्रं निर्विशेषं तेनैवाभिनिष्पद्यते निर्विशेषसाक्षात्कारफलस्य तदात्मकत्वान्निवृत्ताज्ञानपूर्णानन्दैकरसचिन्मात्रात्मकत्वात्। तथा च स्वरूपप्रमापकवाक्यानामेव फलसमर्पकत्वात्। 'सत्यं ज्ञानमनन्तं ब्रह्म' [तै०२।१।१] 'आनन्दो ब्रह्म' [तै०३।६।१] 'अस्थूलमनणु' [बृ० ३।८।८] इत्यादि 'अयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः' [बृ० ४।५।१३] 'नेति नेति' [बृ० २।३।६] इति 'नात्र काचन भिदाऽस्ति'. ['नृसिंहोत्त० ८] 'अतोऽन्यदार्तम्' [बृ० ३।४।२] इत्यादिवाक्यानां च तत्त्वंपदार्थस्वरूपसमर्पकत्वात्सत्यसंकल्पत्वादीनां संबन्धनिर्वचनासंभवेनानिर्वचनीयानामाविद्यकत्वेनाविद्यानाशनाश्यत्वावश्यकत्वेन स्वाभाविकत्वायोगाच्चित्स्वरूपातिरिक्तं न स्वाभाविकं चिन्मात्रत्वमेव मुक्तिः 'स तत्र पर्येति जक्षत्' [छा० ८।१२।३] इत्यादिकं तु स्तुतिपरतयैवाविरुद्धमित्यौडुलोमिर्वक्ति ॥ ६ ॥

एवमप्युपन्यासात्पूर्वभावादविरोधं
बादरायणः ॥ ७ ॥ (३) इति ।

एवं तत्त्वविदश्चिन्मात्ररूपेणाभिनिष्पत्तावपि बद्धपुरुषदृष्ट्या सत्यसंकल्पत्वादीनामीश्वरे सत्त्वादीश्वरस्य च वस्तुतश्चिन्मात्रत्वाद्बुद्धदृष्ट्यभिप्रायेणैवोपन्यासाद्यवगतस्य पूर्वस्य सत्यसंकल्पत्वादेर्भावादुभयोर्मतयोरविरोधं बादरायणोऽहं वदामि ॥ ७ ॥ (३)

---

१ ख 'पत्व ए'। २ क. रूपेण प्र'।

संकल्पादेव च तच्छ्रुतेः ॥ ८ ॥ इति ।

ब्रह्मलोकगतस्य सगुणज्ञस्य स्रक्चन्दनादेर्भोगसाधनस्य प्राप्तिः संकल्पादेव भवति नत्वस्मदादेरिव पुष्पाहरणादिसापेक्षा 'अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते ' [ छा० ८ । २ । ६ ] इत्यादितद्बोधकश्रुतेः सामान्यतो दृष्टस्य विशेषविषयकश्रुत्या बाधात् ॥ ८ ॥

अत एव चानन्याधिपतिः ॥ ९ ॥ ( ४ ) इति ।

अतोऽवन्ध्यसंकल्पत्वादेव ' य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारः ] [ छा० ८ । १ । ६ ] इति श्रुत्या सगुणोपासकोऽनन्याधिपतिस्तत्तद्भोगस्थानं गच्छन्केनाप्यनिवार्य इति बोध्यते ॥ ९ ॥ ( ४ )

अभावं बादरिराह ह्येवम् ॥ १० ॥ इति ।

संकल्पस्याऽऽवश्यकत्वात्तत्साधनस्य मनसो भावेऽपि तदन्येन्द्रियाणां देहस्य चाभावं ब्रह्मलोके भोक्तुर्बादरिर्वक्ति । हि यस्मात् ' मनसैतान्कामान्पश्यन्रमते ' [ छा० ८ । १२ । ५ ] ' य एते ब्रह्मलोके ' [छा० ८ । १३ । १ ] इति श्रुतिरेवमाह । काम्यमानेषु रमणे मनोयोगस्य नित्यप्राप्तत्वेन मनसेत्यस्य देहादिव्यवच्छेदपरत्वावश्यकत्वादिति भावः ॥ १० ॥

भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥ इति ।

जैमिनिस्तु सेन्द्रियस्य देहस्य भावं वक्ति । ' स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा ' [ छा० ७ । २६ । २ ] इत्यादिश्रुत्या सेन्द्रियदेहनानात्वरूपस्य विकल्पस्यावगमात्तस्या निर्गुणभूमविद्यास्थत्वेऽपि सगुणविद्याफलोक्तिद्वारा निर्गुणस्तुतिपरत्वात् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥ इति ।

यथा ' द्वादशाहमृद्धिकामा उपेयुः ' इत्युपायिचोदनाबोधितत्वेन सत्रत्वं ' द्वादशाहेन प्रजाकामं याजयेत् ' इति यजतिचोदनाबोधितत्वेन चाहीनत्वं द्वादशाहस्य तथैवात उक्तोभयश्रुतिलिङ्गाद्ब्रह्मलोके

---

१ ख. 'कल्पादे' ।

मोक्तुर्मनस्तदन्येन्द्रियदेहैः सहितं रहितं चेत्युभयविधं सत्यसंकल्पत्वात्सं-
कल्पवैचित्र्याच्च ॥ १२ ॥

तन्वभावे संध्यवदुपपत्तेः ॥ १३ ॥ इति ।

तनोर्देहस्याभावे संध्यवन्मनःकल्पितविषयाणां साक्षिमात्रभास्यत्वेन
भोगोपपत्तेः ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥ (५) इति ।

देहस्य भावे त्विन्द्रियसंनिकर्षाधीनमनोवृत्तिद्वारा जाग्रद्दशायामिव
साक्षिसंबन्धेन भोगोपपत्तेः ॥ १४ ॥ ( ५ )

'स एकधा भवति' [ छा० ७ । २६ । २ ] इत्यादिना बोधितेषु
नानाशरीरेषु युगपद्भोगासंभव एकस्यैव शरीरस्य समनस्कत्वेन
शरीरान्तरेष्वात्मचैतन्यानभिव्यक्तेः । प्रतिशरीरं मनोन्तराणां सृष्टयङ्गी-
कारेऽप्यौत्पत्तिकपरिच्छिन्नमनोवच्छिन्नस्याऽऽत्मनो न तैरवच्छेदसंभवः।
तैतश्चोक्तश्रुतेर्भोगानुपयुक्तशरीरप्रतिपादने प्रयोजनाभावात्स्तुतिमात्रपर-
त्वेनाभावं बादरिरित्येव युक्तं तत्राऽऽह—

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥ इति ।

यथा प्रदीप एक एव स्वसामर्थ्यादनेकदीपभावं प्राप्य नानावर्तिष्वा-
विशति तथा विदुषोऽपि विद्यामाहात्म्येनावन्ध्यसंकल्पत्वादनेकधापन्न-
मनःशरीरादिष्वावेशः । हि यस्मात् 'एकधा भवति त्रिधा भवति'
[ छा० ७ । २६ । २ ] इत्यादिस्तथा दर्शयति, अनेकदेहेन्द्रियादिषु
स्वात्मचैतन्याभिव्यक्तेरेव विदुषस्त्रिधाभावादिरूपत्वात् । तथा च
श्रुतिबलादेव पूर्वस्थितमनस एव नानादेहेन्द्रियादिरूपेण परिणामाः
कल्प्यन्ते । स्वपरिणामवृत्तिज्ञानाद्यवच्छिन्नचैतन्यस्य स्वीयतादृशनाना-
देहेन्द्रियरूपपरिणामावच्छिन्नचैतन्यस्य च तादृशमनोवच्छिन्नचैतन्या-
भेदः संभवत्येव । नानादेशस्थनानादेहरूपेण पूर्वस्थितमनसा नानादे-
शस्थबहुशाखारूपेण महावृक्षस्येव परिणामः संभवत्येवेति भावः । न च
स्थूलदेहानां नानात्वे प्रत्यक्षसिद्धेऽपि तेषु मनश्चक्षुरादिकमेकैकमिन्द्रि-
यमेवास्तु तावताऽपि श्रुत्युपपत्तेरिति वाच्यम् । एकदेहावच्छेदेन
तत्तदिन्द्रियजन्यज्ञानोत्पत्तिकालेऽन्यदेहावच्छेदेनापि तदापत्तेः, मन-
आदीनामेकत्वनानात्वयोरपि संकल्पानुरुद्धत्वाच्च ॥ १५ ॥

१ ख तच्चोक्त° । २ ख 'न्यत्वेन स्वी° । ३ ख 'नसो ना° ।

ननु 'तत्केन कं विजानीयात्' (बृ० ४ । ५ । १५) 'न तु तद्द्वितीयमस्ति' (बृ० ४ । ३ । ३० इत्यादिश्रुत्या विदुषो द्वैतादृष्टिबोधनात्कथमैश्वर्यभोगस्तत्राऽऽह—

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥(६) इति ।

उक्तवाक्यं स्वाप्ययस्य सुषुप्तेः संपत्तेः कैवल्यस्य चान्यतरदपेक्ष्य द्वैतादृष्टिबोधकं हि यस्मात् 'यत्र त्वस्य सर्वमात्मैवाभूत्' (बृ० २ । ४ । १४) इत्यनेन 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' (बृ० ४ । ३ । १९) इत्यनेन च समभिव्याहृतवाक्येन तथाऽऽविष्कृतं व्यक्तीकृतम् ॥ १६ ॥ (६)

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥ इति ।

सगुणविद ऐश्वर्यं जगत्सृष्ट्यादिव्यापारवर्जं तदन्यविषयकजगत्सृष्ट्यादिबोधकश्रुतिष्वीश्वरस्य नित्यसिद्धस्यैव प्रकृतत्वात्प्रलयानन्तरं सृष्टुरेव स्थित्यादिकर्तृत्वनिर्देशात्सृष्ट्यारम्भकाले चाऽऽधुनिकानामुपासकानामसंनिधानात्कल्पान्तरोपासकानां च प्रलय एव सह ब्रह्मणा मुक्तत्वात् ॥ १७ ॥

प्रत्यक्षोपदेशादिति चेन्नाऽऽधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥ इति ।

'आप्नोति स्वाराज्यम्' [तै० १ । ६ । २] 'सर्वेऽस्मै देवा बलिमावहन्ति' [तै० १ । ५ । ३] इत्यादिप्रत्यक्षोपदेशाज्जगत्सृष्ट्यादावपि विदुष ऐश्वर्यमिति चेन्न । 'आप्नोति मनसस्पतिं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति' [तै० १ । ६ । २] इत्यनन्तरवाक्येनाऽऽधिकारिकस्य सवितृमण्डलादिस्थस्य पूर्वसिद्धेश्वरस्य मनस्पतिशब्दितस्य वाक्पतित्वाद्यैश्वर्यमात्रलाभार्थं विद्वत्प्राप्यत्वेनोक्तेः । आप्नोति स्वाराज्यमित्यादेश्च सर्वदेवतापूज्यत्वादिबोधकत्वेऽपि जगत्सृष्ट्यादिसामर्थ्ये मानाभावात् ॥ १८ ॥

विकारावर्ति च तथा हि स्थितिमाह ॥१९॥ इति ।

विकारावर्ति निर्गुणं ब्रह्म सगुणोपासकेनाप्राप्यं सत्तथा तादृशीमेव स्थितिं मर्यादामाह द्योतयति । यथा सगुणस्यैव वस्तुतो निर्गुणस्योपा-

१ क. 'षेः कें' । २ ख. 'सुप्तो नि' । ३ क. 'णत्वेऽ' ।

सनाविध्यगोचरत्वेनोपास्यत्वेऽपि सगुणविदो न नैर्गुण्याप्तिरतत्क्रतुत्वा-त्तथा सगुणे जगत्कर्तृत्वादिगुणस्य सत्त्वेऽपि नोपासकस्य तत्प्राप्तिस्तादृ-शगुणस्योपासनाविध्यगोचरत्वेनोपासकक्रत्वविषयत्वात् ॥ १९ ॥

दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥ इति ।

प्रत्यक्षं 'तं यथायथोपासते तदेव भवन्ति' इतिश्रुतिः । अनु-मानं ।

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।

तं तमेवैति कौन्तेय सदा तद्भावभावितः [ भ० गी० ८ । ६ ] इति स्मृतिश्चैवमुपासनाविषयगुणस्यैवाऽऽप्तिं दर्शयतः ॥ २० ॥

भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥ इति ।

'यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं सर्वाणि भूतान्य-वन्ति' 'तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' [ बृ० १ । ५ । २३ ] इत्यादिलिङ्गादपि सगुणविदो भोगमात्रेण सगुणसाम्यं लभ्यते न तु जगत्कर्तृत्वादिकं सायुज्यशब्देन तादात्म्यमात्रस्य सलोक-ताशब्देन तत्समानभोगमात्रस्य लाभात् । अन्यथा सर्वलोकाभिमानि-देवतातादात्म्यापन्नस्य तत्समानलोकत्वोक्तिवैयर्थ्यादिति भावः ॥ २१ ॥

ननु ब्रह्मलोकादावेवोपासनाफलस्य भुक्तत्वादन्यकर्ममात्रस्य च विद्ययैव पूर्वं दग्धत्वाद्विदुषः पुनरस्मिँल्लोके परावृत्त्यनुपपत्तिः । न च श्रुत्यैवाऽऽवृत्तिं निषिध्यामृतत्वमुक्तमतोऽनावृत्तिरेव तस्येति वाच्यम् । 'इमं मानवमावर्तं नाऽऽवर्तन्ते' 'तेषामिह न पुनरावृत्तिः' इत्यादि-श्रुतिष्विममितीहेतिशब्दाभ्यां कल्पान्तर आवृत्तिलाभात् । अत एवामृ-तत्वमपि श्रौतं गौणमेवेत्यत आह—

अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥ (७) इति ।

विदुषः कल्पान्तरेऽप्यनावृत्तिरेव 'न स पुनरावर्तते' [ छा० ८ । १५ । १ ] इतिसामान्यमुखाच्छब्दाच्छ्रुतेः । इहेत्यस्य संसारमात्रार्थत्वे बाधकाभावादत एवेममित्यस्यापीदंजातीयार्थत्वाद्वर्तमानकल्पार्थक-त्वेऽपि प्रतिकल्पवर्तिपुरुषान्प्रति वर्तमानकल्पबोधकत्वेन कल्पमात्रेऽ-नावृत्तिलाभात् ।

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इत्यादिस्मृत्या वर्तमानकल्पान्ते विदुषां कैवल्यबोधनेन तेषामनावृत्त्यावश्यकत्वाच्च । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' [ भ० गी० ८ । १६ ] इत्यादेरप्यश्वमेधादिना प्राप्ततल्लोकाविद्वत्परत्वाच्चेति शिवम् ॥ २२ ॥ ( ७ )

इति चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

---

इति श्रीपरमहंसपरिव्राजकपरमानन्दसरस्वतीपूज्यपादशिष्य-
ब्रह्मानन्दसरस्वतीविरचितवेदान्तसूत्रमुक्तावल्यां
चतुर्थोऽध्यायः समाप्तः ।

---

समाप्तेयं ब्रह्मानन्दसरस्वतीविरचिता
वेदान्तसूत्रमुक्तावलिः

| ग्रन्थनाम । | मूल्यम् । रु० | आ० |
|---|---|---|
| ८६ विधानमाला—श्रीनृसिंहभट्टविरचिता ।... ... ... | ४ | ४ |
| ८७ अग्निहोत्रचन्द्रिका—किंजवडेकरोपाह्ववामनशास्त्रिकृता । | २ | १४ |
| ८८ निरुक्तम्—दुर्गाचार्यकृतवृत्तिसमेतम् । भागद्वयात्मकम् । ... | १६ | ४ |
| ८९ काव्यप्रकाशः—संकेताख्यटीकासमेतः । ... ... | ३ | ४ |
| ९० शाङ्खायनारण्यकम्—ऋग्वेदान्तर्गतबाष्कलशाखीयम्। ... | ० | ९ |
| ९१ गौतमप्रणीतन्यायसूत्राणि—भाष्यवृत्तिभ्यां समेतानि ।... | ४ | ८ |
| ९२ श्रीमद्भगवद्गीता—सटीकरामानुजभाष्ययुता । ... ... | ७ | ८ |
| ९३ दर्शपूर्णमासप्रकाशः—किंजवडेकरोपाह्ववामनशास्त्रिकृतः। | ६ | १२ |
| ९४ संस्कारपद्धतिः—अभ्यंकरोपाह्वभास्करशास्त्रिविरचिता । | २ | ८ |
| ९५ काश्यपशिल्पम्—महेश्वरोपदिष्टम् । ... ... ... | ३ | १ |
| ९६ करणकौस्तुभः—कृष्णदैवज्ञविरचितः ।... ... ... | ० | ९ |
| ९७ मीमांसादर्शनम्—सतन्त्रवार्तिकशाबरभा० भागषट्कात्मकम्। | २५ | ९ |
| ९८ धर्मतत्त्वनिर्णयः—म. म. अभ्यंकरोपाह्ववासुदेवशास्त्रिप्रणीतः। | ० | ९ |
| ९८ धर्मतत्त्वनिर्णयपरिशिष्टम्— ” ” | ० | १३ |
| ९९ भास्करीयबीजगणितम्—नवाङ्कुराटीकासहितम् । ... | २ | ० |
| १०० प्रायश्चित्तेन्दुशेखरः—नागेशभट्टविरचितः । कुण्डार्कयुतः । | १ | १० |
| १०१ शांकरपादभूषणम्—पर्वतेइत्युपाह्वरघुनाथशास्त्रिकृतं द्विभा० | ८ | ५ |
| १०२ ब्रह्मवैवर्तपुराणम्—भागद्वयात्मकम् ।... ... ... | ९ | ४ |
| १०३ श्रुतिसारसमुद्धरणम्—गिर्यपरनामकतोटकाचार्यप्रणीतम् । | ० | १३ |
| १०४ त्रिंशच्छ्लोकी—टिप्पणीविवृतिभ्यां समेता। धर्मशास्त्रग्रन्थः। | २ | १५ |
| १०५ आश्वलायनगृह्यसूत्रम्—आश्वलायनाचार्यप्रणीतम् ।... | २ | १२ |
| १०६ दशोपनिषदः—मूलमात्रम् । ... ... ... ... | २ | ० |
| १०७ लीलावती—श्रीमद्भास्कराचार्यप्रणीता। टीकाद्वयोपेता द्विभागा। | ३ | ० |
| १०८ व्याकरणमहाभाष्यम्—प्रदीपोद्द्योतयुतं (अङ्ग०)प. भा.। | २ | १२ |
| श्रीमत्पद्मपुराणम्—महापुराणान्तर्गतं चतुर्भागात्मकम् । | २० | ० |
| सिद्धान्तदर्शनम्—महर्षिवेदव्यासप्रणीतं निरञ्जनभाष्ययुतम्। | १ | ४ |
| आधानपद्धतिः—किंजवडेकरोपाह्ववामनशास्त्रिभिः कृता । | १ | १४ |
| पश्वालम्भमीमांसा—किंजवडेकरोपाह्ववामनशास्त्रिविरचिता। | ० | १० |
| शिवभारतम्—कवीन्द्रपरमानन्दविरचितम् । ... ... | १ | ० |

## आनन्दाश्रममुद्रणालयमुद्रितग्रन्थावल्या अकारादिवर्णानुक्रमेण ग्रन्थाङ्केन मूल्याङ्केन च सहितं सूचीपत्रम् ।



| ग्रन्थाङ्काः | | मूल्यम् रू० | आ० |
|---|---|---|---|
| ४१ | अग्निपुराणम् | ५ | ४ |
| ८७ | अग्निहोत्रचन्द्रिका | २ | १४ |
| ८४ | अद्वैतामोदः | २ | ० |
| ५७ | आचारभूषणम् | ४ | ६ |
| ५८ | आचारेन्दुः | ४ | ० |
| | आधानपद्धतिः | १ | १४ |
| १०५ | आश्वलायनगृह्यसूत्रम् | २ | १२ |
| ८१ | आश्वलायनश्रौतसूत्रम् | ४ | ११ |
| ६२ | ईशकेनकठाद्युप०(रामा०) | २ | ८ |
| ७६ | ईशकेनकठोपनिषदः | १ | ० |
| ५ | ईशावास्योपनिषत् | ० | १४ |
| २९ | उपनिषदां समुच्चयः | ६ | १२ |
| ३२ | ऐतरेयब्राह्मणम् | १० | १० |
| ३८ | ऐतरेयारण्यकम् | ३ | ० |
| ११ | ऐतरेयोपनिषत् | १ | ४ |
| ९६ | करणकौस्तुभः | ० | ९ |
| ७ | काठकोपनिषत् | १ | ४ |
| ६६ | काव्यप्रकाशः | ६ | ४ |
| ८९ | काव्यप्रकाशः | ३ | ४ |
| ९५ | काश्यपशिल्पम् | ३ | १ |
| ६ | केनोपनिषत् | १ | ० |
| ५२ | गणेशगीता | ० | ० |
| १ | गणेशाथर्वशीर्षम् | ० | ६ |
| ७३ | गायत्रीपुरश्चरणपद्धतिः | १ | ८ |
| ६१ | गौतमसूत्रम् | २ | ८ |
| १४ | छान्दोग्योपनिषत्(शा०) | ५ | ० |
| ६३ | छान्दोग्योपनि०(रामा०) | ३ | १२ |
| ७९ | छान्दोग्योप०(मिताक्षरा०) | २ | ० |
| २० | जीवन्मुक्तिविवेकः | ३ | १२ |
| २४ | जैमिनीयन्यायमालाविस्तरः | ८ | ० |
| ६९ | ज्ञानार्णवतन्त्रम् | १ | ४ |
| ८५ | ज्योतिर्निबन्धः | ३ | १५ |
| ३७ | तैत्तिरीयब्राह्मणम् | १४ | ८ |
| ४२ | तैत्तिरीयसंहिता | ४८ | १[illegible] |
| ३६ | तैत्तिरीयारण्यकम् | ९ | १ |
| १२ | तैत्तिरीयोपनिषत् | १ | १२ |
| १३ | तैत्तिरीयोपनिषद्भाष्यवा० | २ | २ |
| ७८ | त्रिस्थलीसेतुः | ३ | १२ |
| १०४ | त्रिंशच्छ्लोकी | २ | १५ |
| ९३ | दर्शपूर्णमासप्रकाशः | ६ | १२ |
| १०६ | दशोपनिषदः | २ | ० |
| ७४ | द्राह्यायणगृह्यसूत्रवृत्तिः | १ | ० |
| ३३ | धन्वन्तरीयनिघण्टु रा०स० | ६ | ४ |
| ९८ | धर्मतत्त्वनिर्णयः | ० | ९ |
| ९८ | धर्मतत्त्व०परिशिष्टम् | ० | १३ |
| ५६ | नित्याषोडशिकार्णव | ३ | ४ |
| ८८ | निरुक्तम् | १६ | ४ |
| ३० | नृसिंहपूर्वोत्तरतापनीयोप० | १ | १२ |
| ९१ | न्यायसूत्राणि | ४ | ८ |
| | पद्मपुराणम् | २० | ० |
| | पश्वालम्भमीमांसा | ० | १० |
| ७२ | परिभाषेन्दुशेखरः | २ | ६ |
| ४७ | पातञ्जलयोगसूत्राणि | ३ | ० |
| ३ | पुरुषसूक्तम् | ० | ६ |
| ५५ | पुरुषार्थचिन्तामणिः | ४ | ० |
| ८ | प्रश्नोपनिषत् | १ | ० |